# बृहत्स्तोत्ररत्नाकरः

देवी - लक्ष्मी - सरस्वती - नवग्रह - दत्तात्रेय - दशावतार -
राम - गायत्री - हनुमत्स्तोत्रात्मकः

## द्वितीयो भागः

( स्तोत्राणि २२६-४२५ )



नारायण राम आचार्य, 'काव्य-न्यायतीर्थ'
इत्येतैः समुपबृंह्य संशोधितः

षोडशं संस्करणम् १९६५

निर्णयसागर प्रेस, मुंबई २

धन्यवाद—

इस अनमोल एवं महाकाय ग्रंथ की संकलना में स्तोत्र - ग्रंथ, हस्तलिखित, आदर्श या अन्य सहयोग देकर जिन्होंने हमें अनुगृहीत किया है, एवं जिनकी रचनाएँ इस ग्रन्थ में दाखिल करने की वजह से इस ग्रन्थ की उपादेयता में अभि-वृद्धि हुई है उन सभी महानुभावों या संस्थाओं का यहां नामनिर्देश करना निहायत नामुमकिन है, अत एव हम कृत-ज्ञता पुरःसर उन सभी को हार्दिक धन्यवाद देकर अपने आधमर्ण्य की स्वीकृति यहां सविनय पेश करते हैं।

संपादक

## संपादक की ओर से —

इस बे-नज़ीर ग्रंथ का पहला भाग करीब एक वर्ष के पहले ही हमारे ग्राहकों के हाथों में पहुंच चुका है। उसके बाहरी और अन्तर्गत आकर्षण से लुब्ध ग्राहकों के सामने हम आज तक दूसरा भाग किसी ना किसी वजह से पेश कर नहीं सके, जिस हेतु से वे हम-से शायद रूठ भी गये हैं, यह हाल उनकी चिठियों से प्रतीत होता है। यह बात हुई हमारे माननीय ग्राहकों की। उनसे भी ज्यादह रूठे-से हैं वे महानुभाव, जिन्होंने इस कार्य में निरभिलाषतया एवं स्वयंस्फूर्ति से स्तोत्रें भेज कर हमें अनुगृहीत किया है ! उन सभी के लिए 'कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते' इस उक्ति के अनुसार क्षमायाचना करना यह एक पारम्परिक या सभ्यतानुस्यूत आसान रास्ता है, फिर भी हम जो हमारी कठिनाइयाँ उनके सामने पेश किए बग़ैर उस मार्ग का सहारा हर-हमेशा ले लें तो वह भी बेहूदा कहलाया जायगा, इस खयाल से दो लब्ज उस विषय पर लिखना हमारी फ़र्ज़ समझकर उसे यहां अदा कर रहे हैं।

दरअसल स्तोत्रों का संकलन पुराण व उपपुराणों से होता है। भारतीय पुराण ग्रंथ तो एक अनोखा सागर एवं सद्भक्तिधारा का अमिट स्रोत है। उसमें से स्तोत्रों को चुन चुन कर लेना व उपलब्ध पाठों में से शुद्ध पाठ को निश्चित करना आदि इस महान् कार्य में ही काफी समय व्यतीत होता है, यह अनुभवसिद्ध है।

स्वयंस्फूर्त सहयोग एक सात्विक ज्ञानयज्ञ है। इस कार्य में हमारे कई एक महाशयों ने अनभिलषित सहयोग देकर जरूर हमें उपकृत

किया है, पर उनका साहित्य फलाना दैवत का स्तोत्रसंग्रह छप जाने के पश्चात् हमें प्राप्त होने के कारण आदिम या दोनों भागों में निविष्ट करना नामुंकिन हुआ है और आखरी याने तीसरे भाग में जो संकीर्ण विभाग होनेवाला है, उसीमें निविष्ट करना यह एकही हमारे लिये आसान रास्ता है। दो भाग छपते छपते बहोत समय व्यतीत हुआ, और उसी वजह से हम सहयोगी महानुभाव और ग्राहकों की नाराजी के हेतु बने हैं। फिर भी हमें विश्वास है, कि इस दूसरे भाग को देखते ही वे सब कुछ जरुर भूल जाएँगे।

**प्रथम भाग** में गणपति, विष्णु और शिव सिर्फ इन तीन देवताओं के २२५ का स्तोत्रों संग्रह छप चुका है जिसकी अंदाजा पृष्ठसंख्या ३५८ से अधिक है।

इस **द्वितीय भाग** में देवी, लक्ष्मी, सरस्वती, नवग्रह, दत्तात्रेय, दशावतार, राम, गायत्री और हनुमान इन ९ देवताओं के (स्तोत्रांक २२६ से ४२५ तक) स्तोत्रों का संग्रह मौजूद है, और पृष्ठसंख्या करीब ४६८ से ज्यादह है। उर्वरित विषय तीसरे भाग में प्रकाशित होंगे।

इस ग्रंथ के जरिये पाठक को संकल्पित ऐहिक या पारत्रिक लाभ प्राप्त हो जाय तो सचमुच हम अपने श्रम सफल समझेंगे।

१५ ऑगस्ट १९६५
संशोधन विभाग
निर्णयसागर प्रेस,
बम्बई २

**नारायण राम आचार्य**

# बृहत्स्तोत्ररत्नाकरस्य
## द्वितीय भागस्य
## स्तोत्रानुक्रमकोशः

# बृहत्स्तोत्ररत्नाकरः

## द्वितीयो भागः

### ❀ देवीस्तोत्राणि ❀

#### २२६. देव्यथर्वशीर्षम्।

श्रीगणेशाय नमः॥ ॐ सर्वे वै देवा देवीमुपतस्थुः कासि त्वं महादेवीति साऽब्रवीदहं ब्रह्मस्वरूपिणी। मत्तः प्रकृतिपुरुषात्मकं जगत्। शून्यं चाशून्यं च। अहमानंदानानंदौ। अहं विज्ञानाविज्ञाने। अहं ब्रह्माब्रह्मणी। द्वे ब्रह्मणी वेदितव्ये। इति चाथर्वणी श्रुतिः। अहं पंचभूतानि। अहं पंचतन्मात्राणि। अहमखिलं जगत्। वेदोऽहमवेदोऽहम्। विद्याहमविद्याहम्। अजाहमनजाहम्। अधश्चोर्ध्वं च तिर्यक्चाहम्। अहँ रुद्रेभिर्वसुभिश्चरामि। अहमादित्यैरुत विश्वदेवैः। अहं मित्रावरुणावुभौ बिभर्मि। अहमिंद्राग्नी अहमश्विना उभौ। अहँ सोमं त्वष्टारं भगं दधामि। अहं विष्णुमुरुक्रमम्। ब्रह्माणमुत प्रजापतिं दधामि। अहं दधामि द्रविणँ हविष्मते सुप्राव्ये यजमानाय सुव्रते। अहँ राज्ञी संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्। अहँ सुवे पितरमस्य मूर्धन्मम योनिरप्स्वंतः समुद्रे। य एवं वेद स दैवीँ संपदमाप्नोति। ते देवा अब्रुवन्। नमो देव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम्। तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गां देवीं शरणं प्रपद्यामहेऽसुरान्नाशयित्र्यै ते नमः। देवीं वाचमजनयंत देवास्तां विश्वरूपाः पशवो वदंति। सा नो

मंद्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥ कालरात्रीं ब्रह्मस्तुतां वैष्णवीं स्कंदमातरम् । सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम् । महालक्ष्म्यै च विद्महे सर्वशक्त्यै च धीमहि । तन्नो देवी प्रचोदयात् । अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव । तां देवा अन्वजायंत भद्रा अमृतबंधवः ॥ कामो योनिः कमला वज्रपाणिर्गुहा हंसा मातरिश्वाभ्रमिंद्रः । पुनर्गुहा सकला मायया चापृथक् क्लेशा विश्वमातादिविद्याः ॥ एषात्मशक्तिः । एषा विश्वमोहिनी पाशांकुशधनुर्बाणधरा । एषा श्रीमहाविद्या । य एवं वेद स शोकं तरति । नमस्ते भगवति मातरस्मान्पाहि सर्वतः । सैषा वैष्णव्यष्टौ वसवः, सैवैकादश रुद्राः, सैषा द्वादशादित्याः, सैषा विश्वेदेवाः सोमपा असोमपाश्च, सैषा यातुधाना असुरा रक्षांसि पिशाचयक्षसिद्धाः । सैषा सत्त्वरजस्तमांसि, सैषा ब्रह्मविष्णुरुद्ररूपिणी, सैषा प्रजापतींद्र-मनवः, सैषा ग्रहनक्षत्रज्योतिःकलाकाष्ठादिविश्वरूपिणी, तामहं प्रणौमि नित्यम् । पापापहारिणीं देवीं भुक्तिमुक्तिप्रदायिनीम् । अनंतां विजयां शुद्धां शरण्यां सर्वदां शिवाम् । वियदाकारसंयुक्तं वीतिहोत्रसमन्वितम् । अर्धेंदुलसितं देव्या बीजं सर्वार्थसाधकम् । एवमेकाक्षरं मंत्रं यतयः शुद्धचेतसः । ध्यायंति परमानंदमया ज्ञानांबुराशयः । वाङ्मया ब्रह्मभूस्तस्मात्षष्ठवक्त्रसमन्वितम् । सूर्यो वामश्रोत्रबिंदुसंयुक्ताष्टतृतीयकम् । नारायणेन संमिश्रो वायुश्चा-धारयुक्ततः । विच्चेनवार्णकोणस्य महानानंददायकः । हृत्पुंडरीक-मध्यस्थां प्रातःसूर्यसमप्रभाम् । पाशांकुशधरां सौम्यां वरदाभय-हस्तकाम् । त्रिनेत्रां रक्तवसनां भक्तकामदुहं भजे । भजामि त्वां महादेवि महाभयविनाशिनि । महादारिद्र्यशमनि महाकारुण्य-रूपिणि । यस्याः स्वरूपं ब्रह्मादयो न जानंति तस्मादुच्यते अज्ञेया ।

यस्या अंतो न लभ्यते तस्मादुच्यते अनंता । यस्या लक्षं नोपलक्ष्यते तस्मादुच्यते अलक्षा । यस्या जननं नोपलक्ष्यते तस्मादुच्यते अजा । एकैव सर्वत्र वर्तते तस्मादुच्यत एका । एकैव विश्वरूपिणी तस्मादुच्यतेऽनेका । अत एवोच्यतेऽज्ञेयाऽनंतालक्ष्याऽजैकानेका । मंत्राणां मातृका देवी शब्दानां ज्ञानरूपिणी । ज्ञानानां चिन्मयातीता शून्यानां शून्यसाक्षिणी ॥ यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्तिता । तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम् । नमामि भवभीतोऽहं संसारार्णवतारिणीम् । इदमथर्वशीर्षं योऽधीते । स पंचाथर्वशीर्षफलमाप्नोति । इदमथर्वशीर्षं ज्ञात्वा योऽर्चां स्थापयति । शतलक्षं प्रजप्त्वापि नार्चाशुद्धिं च विंदति । शतमष्टोत्तरं चास्य पुरश्चर्याविधिः स्मृतः । दशवारं पठेद्यस्तु सद्यः पापैः प्रमुच्यते । महादुर्गाणि तरति महादेव्याः प्रसादतः । सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायंप्रातः प्रयुंजानोऽपापो भवति । निशीथे तुरीयसंध्यायां जप्त्वा वाक्सिद्धिर्भवति । नूतनायां प्रतिमायां जप्त्वा देवतासांनिध्यं भवति । भौमाश्विन्यां महादेवीसंनिधौ जप्त्वा महामृत्युं तरति स महामृत्युं तरति । य एवं वेद । इत्युपनिषत् ॥ इति देव्यथर्वशीर्षं संपूर्णम् ॥

लीलया ॥ ३ ॥ कदंबवनमध्यगां कनकमंडलोपस्थितां षडंबुरुहवासिनीं सततसिद्धसौदामिनीम् । विडंबितजपारुचिं विकचचंद्रचूडामणिं त्रिलोचनकुटुंबिनीं त्रिपुरसुंदरीमाश्रये ॥ ४ ॥ कुचांचितविपंचिकां कुटिलकुंतलालंकृतां कुशेशयनिवासिनीं कुटिलचित्तविद्वेषिणीम् । मदारुणविलोचनां मनसिजारिसंमोहिनीं मतंगमुनिकन्यकां मधुरभाषिणीमाश्रये ॥ ५ ॥ स्मरेत्प्रथमपुष्पिणीं रुधिरबिंदुनीलांबरां गृहीतमधुपात्रिकां मधुविघूर्णनेत्रांचलाम् । घनस्तन-

संति सरलाः परं तेषां मध्ये विरलतरलोऽयं तव सुतः । मदीयोऽयं त्यागः समुचितमिदं नो तव शिवे कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ ३ ॥ जगन्मातर्मातस्तव चरणसेवा न रचिता न वा दत्तं देवि द्रविणमपि भूयस्तव मया । तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ ४ ॥ परित्यक्त्वा देवान्विविधविधसेवाकुलतया मया पंचाशीतेरधिकमपनीते तु वयसि । इदानीं चेन्मातस्तव यदि कृपा नापि भविता निरालंबो लंबोदरजननि कं यामि शरणम् ॥ ५ ॥ श्वपाको जल्पाको भवति मधुपाकोपमगिरा निरातंको रंको विहरति चिरं कोटिकनकैः । तवापर्णे कर्णे विशति मनुवर्णे फलमिदं जनः को जानीते जननि जपनीयं जपविधौ ॥ ६ ॥ चिताभस्मालेपो गरलमशनं दिक्पटधरो जटाधारी कंठे भुजगपतिहारी पशुपतिः । कपाली भूतेशो भजति जगदीशैकपदवीं भवानि त्वत्पाणिग्रहणपरिपाटीफलमिदम् ॥ ७ ॥ न मोक्षस्याकांक्षा न च विभववांछापि च न मे न विज्ञानापेक्षा शशिमुखि सुखेच्छापि न पुनः । अतस्त्वां संयाचे जननि जननं यातु मम वै मृडानी रुद्राणी शिव शिव भवानीति जपतः ॥ ८ ॥ नाराधितासि विधिना विविधोपचारैः किं रूक्षचिंतनपरैर्न कृतं वचोभिः । श्यामे त्वमेव यदि किंचन मय्य-

ज्ञानांबुराशयः । वाञ्मया ब्रह्मभूस्तस्मात्षष्ठवक्त्रसमन्वितम् । सूर्यो वामश्रोत्रबिंदुसंयुक्ताष्टतृतीयकम् । नारायणेन संमिश्रो वायुश्चाधारयुक्ततः । विच्चेनवार्णकोणस्य महानानंददायकः । हृत्पुंडरीकमध्यस्थां प्रातःसूर्यसमप्रभाम् । पाशांकुशधरां सौम्या वरदाभयहस्तकाम् । त्रिनेत्रां रक्तवसनां भक्तकामदुहं भजे । भजामि त्वां महादेवि महाभयविनाशिनि । महादारिद्र्यशमनि महाकारुण्यरूपिणि । यस्याः स्वरूपं ब्रह्मादयो न जानंति तस्मादुच्यते अज्ञेया ।

स्तास्यद्वदनकमलं वीक्ष्य कृपया प्रतिष्ठामातेने निजशिरसि वासेन गिरिशः ॥ १८ ॥ विशालश्रीखंडद्रवमृगमदाकीर्णघुसृणः प्रसून-व्यामिश्रं भगवति तवाभ्यंगसलिलम् । समादाय स्रष्टा चलितपद-पांसून्निजकरैः समाधत्ते सृष्टिं विबुधपुरपंकेरुहदृशाम् ॥ १९ ॥ वसंते सानंदे कुसुमितलताभिः परिवृते स्फुरन्नानापद्मे सरसि कलहंसालिसुभगे । सखीभिः खेलंतीं मलयपवनांदोलितजलैः स्मरे-द्यस्त्वां तस्य ज्वरजनितपीडाऽपसरति ॥ २० ॥ इति श्रीमत्परमहंस-परिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितानंदलहरी संपूर्णा ॥

## २२९. त्रिपुरसुंदरीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ कदंबवनचारिणीं मुनिकदंबकादंबिनीं नितम्ब-जितभूधरां सुरनितंबिनीसेविताम् । नवांबुरुहलोचनामभिनवांबुद-श्यामलां त्रिलोचनकुटुंबिनीं त्रिपुरसुंदरीमाश्रये ॥ १ ॥ कदंब-वनवासिनीं कनकवल्लकीधारिणीं महार्हमणिहारिणीं मुखसमुल्लस-द्वारुणीम् । दयाविभवकारिणीं विशदलोचनीं चारिणीं त्रिलोचन-कुटुंबिनीं त्रिपुरसुंदरीमाश्रये ॥ २ ॥ कदंबवनशालया कुचभरोल्ल-सन्मालया कुचोपमितशैलया गुरुकृपालसद्वेलया । मदारुण-कपोलया मधुरगीतवाचालया कयापि घननीलया कवचिता वयं लीलया ॥ ३ ॥ कदंबवनमध्यगां कनकमंडलोपस्थितां षडंबुरुह-वासिनीं सततसिद्धसौदामिनीम् । विडंबितजपारुचिं विकचचंद्र-चूडामणिं त्रिलोचनकुटुंबिनीं त्रिपुरसुंदरीमाश्रये ॥ ४ ॥ कुचांचित-विपंचिकां कुटिलकुंतलालंकृतां कुशेशयनिवासिनीं कुटिलचित्त-विद्वेषिणीम् । मदारुणविलोचनां मनसिजारिसंमोहिनीं मतंगमुनि-कन्यकां मधुरभाषिणीमाश्रये ॥ ५ ॥ स्मरेत्प्रथमपुष्पिणीं रुधिर-बिंदुनीलांबरां गृहीतमधुपात्रिकां मधुविघूर्णनेत्रांचलाम् । घनस्तन-

भरोन्नतां गलितचूलिकां श्यामलां त्रिलोचनकुटुंबिनीं त्रिपुरसुंदरीमाश्रये ॥ ६ ॥ सकुंकुमविलेपनामलकचुंबिकस्तूरिकां समंदहसितेक्षणां सशरचापपाशांकुशाम् । अशेषजनमोहिनीमरुणमाल्यभूषांबरां जपाकुसुमभासुरां जपविधौ स्मराम्यंबिकाम् ॥ ७ ॥ पुरंदरपुरंध्रिकाचिकुरबंधसैरंध्रिकां पितामहपतिव्रतां पटुपटीरचर्चारताम् । मुकुंदरमणीं मणीलसदलंक्रियाकारिणीं भजामि भुवनांबिकां सुरवधूटिकाचेटिकाम् ॥ ८ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं त्रिपुरसुंदरीस्तोत्रं संपूर्णम् ॥

## २३०. शीतलाष्टकम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीशीतलाष्टकस्तोत्रस्य महादेव ऋषिः, अनुष्टुप् छंदः, शीतला देवता, लक्ष्मीर्बीजम्, भवानी शक्तिः, सर्वविस्फोटकनिवृत्तये जपे विनियोगः ॥ ईश्वर उवाच ॥ वंदेऽहं शीतलां देवीं रासभस्थां दिगंबराम् । मार्जनीकलशोपेतां शूर्पालंकृतमस्तकाम् ॥ १ ॥ वंदेऽहं शीतलां देवीं सर्वरोगभयापहाम् । यामासाद्य निवर्तेत विस्फोटकभयं महत् ॥ २ ॥ शीतले शीतले चेति यो ब्रूयाद्दाहपीडितः । विस्फोटकभयं घोरं क्षिप्रं तस्य प्रणश्यति ॥ ३ ॥ यस्त्वामुदकमध्ये तु धृत्वा पूजयते नरः । विस्फोटकभयं घोरं गृहे तस्य न जायते ॥ ४ ॥ शीतले ज्वरदग्धस्य पूतिगंधयुतस्य च । प्रनष्टचक्षुषः पुंसस्त्वामाहुर्जीवनौषधम् ॥ ५ ॥ शीतले तनुजान्रोगान्नृणां हरसि दुस्त्यजान् । विस्फोटकविदीर्णानां त्वमेकामृतवर्षिणी ॥ ६ ॥ गलगंडग्रहा रोगा ये चान्ये दारुणा नृणाम् । त्वदनुध्यानमात्रेण शीतले यांति संक्षयम् ॥ ७ ॥ न मंत्रो नौषधं तस्य पापरोगस्य विद्यते । त्वामेकां शीतले धात्रीं नान्यां पश्यामि देवताम् ॥ ८ ॥

मृणालतंतुसदृशीं नाभिहृन्मध्यसंस्थिताम् । यस्त्वां संचिंतयेद्देवि तस्य मृत्युर्न जायते ॥ ९ ॥ अष्टकं शीतलादेव्या यो नरः प्रपठेत्सदा । विस्फोटकभयं घोरं गृहे तस्य न जायते ॥ १० ॥ श्रोतव्यं पठितव्यं च श्रद्धाभक्तिसमन्वितैः । उपसर्गविनाशाय परं स्वस्त्ययनं महत् ॥ ११ ॥ शीतले त्वं जगन्माता शीतले त्वं जगत्पिता । शीतले त्वं जगद्धात्री शीतलायै नमो नमः ॥ १२ ॥ रासभो गर्दभश्चैव खरो वैशाखनंदनः । शीतलावाहनश्चैव दूर्वाकंदनिकृंतनः ॥ १३ ॥ एतानि खरनामानि शीतलाग्रे तु यः पठेत् । तस्य गेहे शिशूनां च शीतलारुङ् न जायते ॥ १४ ॥ शीतलाष्टकमेवेदं न देयं यस्यकस्यचित् । दातव्यं च सदा तस्मै श्रद्धाभक्तियुताय वै ॥ १५ ॥ इति श्रीस्कंदपुराणे शीतलाष्टकस्तोत्रं संपूर्णम् ॥

## २३१. वाराहीनिग्रहाष्टकम् ।

श्रीगणेशाय नमः ॥ देवि क्रोडमुखि त्वदंघ्रिकमलद्वंद्वानुरक्तात्मने मह्यं द्रुह्यति यो महेशि मनसा कायेन वाचा नरः । तस्याशु त्वदयोग्रनिष्ठुरहलाघातप्रभूतव्यथापर्यस्यन्मनसो भवंतु वपुषः प्राणाः प्रयाणोन्मुखाः ॥ १ ॥ देवि त्वत्पदपद्मभक्तिविभवप्रक्षीणदुष्कर्मणि प्रादुर्भूतनृशंसभावमलिनां वृत्तिं विधत्ते मयि । यो देही भुवने तदीयहृदयान्निर्गतैर्लोहितैः सद्यः पूरयसे कराब्जचषकं वांछाफलैर्मामपि ॥ २ ॥ चंडोत्तुंडविदीर्णदंष्ट्रहृदयप्रोद्भिन्नरक्तच्छटाहालापानमदाट्टहासनिनदाटोपप्रतापोत्कटम् । मातर्मत्परिपंथिनामपहृतैः प्राणैस्त्वदंघ्रिद्वयं ध्यानोद्दामरवैर्भवोदयवशात्संतर्पयामि क्षणात् ॥ ३ ॥ श्यामां तामरसाननांघ्रिनयनां सोमार्धचूडां जगत्त्राणव्यग्रहलायुधाग्रमुसलां संत्रासमुद्रावतीम् । ये त्वां रक्तकपालिनीं हरवरारोहे वराहाननां भावैः संदधते कथं क्षणमपि प्राणंति तेषां द्विषः ॥ ४ ॥ विश्वाधीश्वरवल्लभे

विजयसे या त्वं नियंत्र्यात्मिका भूतांता पुरुषायुषावधिकरी पाकप्रदा कर्मणाम् । त्वां याचे भवतीं किमप्यवितथं यो मद्विरोधी जनस्तस्यायुर्मम वांछितावधि भवेन्मातस्तवैवाज्ञया ॥ ५ ॥ मातः सम्यगुपासितुं जडमतिस्त्वां नैव शक्नोम्यहं यद्यप्यन्वितदैशिकाङ्घ्रिकमलानुक्रोशपात्रस्य मे । जंतुः कश्चन चिंतयत्यकुशलं यस्तस्य तद्वैशसं भूयाद्देवि विरोधिनो मम च ते श्रेयःपदासंगिनः ॥ ६ ॥ वाराहि व्यथमानमानसगलत्सौख्यं तदाशाबलिं सीदंतं यमपाकृताध्यवसितं प्राप्ताखिलोत्पादितम् । क्रंदद्बंधुजनैः कलंकितकुलं कंठव्रणोद्यत्कृमिं पश्यामि प्रतिपक्षमाशु पतितं भ्रांतं लुठंतं मुहुः ॥ ७ ॥ वाराहि त्वमशेषजंतुषु पुनः प्राणात्मिका स्पंदसे शक्तिव्याप्तचराचरा खलु यतस्त्वामेतदभ्यर्थये । त्वत्पादांबुजसंगिनो मम सकृत्पापं चिकीर्षंति ये तेषां मा कुरु शंकरप्रियतमे देहांतरावस्थितिम् ॥ ८ ॥ इति श्रीवाराहीनिग्रहाष्टकं संपूर्णम् ॥

## २३२. वाराह्यनुग्रहाष्टकम् ।

श्रीगणेशाय नमः ॥ ईश्वर उवाच ॥ मातर्जगद्रचननाटकसूत्रधारस्त्वद्रूपमाकलयितुं परमार्थतोऽयम् । ईशोऽप्यनीश्वरपदं समुपैति तादृक्कोऽन्यः स्तवं किमिव तावकमादधातु ॥ १ ॥ नामानि किंतु गृणतस्तव लोकतुंडे नाडंबरं स्पृशति दंडधरस्य दंडः । यल्लेशलंबितभवांबुनिधिर्यतो यत्त्वन्नामसंस्मृतिरियं ननु नः स्तुतिस्ते ॥ २ ॥ त्वच्चिंतनादरसमुल्लसदप्रमेयानंदोदयात्समुदितः स्फुटरोमहर्षः । मातर्नमामि सुदिनानि सदेत्यमुं त्वामभ्यर्थयेऽर्थमिति पूरयताद्दयालो ॥३॥ इंद्रेंदुमौलिविधिकेशवमौलिरत्नरोचिश्चयोज्ज्वलितपादसरोजयुग्मे । चेतो मतौ मम सदा प्रतिबिंबिता त्वं भूया भवानि विदधातु सदोरुहारे ॥ ४ ॥ लीलोद्धृतक्षितितलस्य वराहमूर्तेर्वाराहमूर्तिरखिला-

र्थकरी त्वमेव । प्रालेयरश्मिसुकलोल्लसितावतंसा त्वं देवि वामतनुभागहरा हरस्य ॥ ५ ॥ त्वामंब तप्तकनकोज्ज्वलकांतिमंतर्ये चिंतयंति युवतीतनुमागलांताम् । चक्रायुधत्रिनयनांबरपोतृवक्त्रां तेषां पदांबुजयुगं प्रणमंति देवाः ॥ ६ ॥ त्वत्सेवनस्खलितपापचयस्य मातर्मोक्षोऽपि यत्र न सतां गणनामुपैति । देवासुरोरगनृपालनमस्य पादस्तत्र श्रियः पटुगिरः कियदेवमस्तु ॥ ७ ॥ किं दुष्करं त्वयि मनोविषयं गतायां किं दुर्लभं त्वयि विधानवदर्चितायाम् । किं दुष्करं त्वयि सकृत्स्मृतिमागतायां किं दुर्जयं त्वयि कृतस्तुतिवादपुंसाम् ॥ ८ ॥ इति श्रीवाराह्यनुग्रहाष्टकं संपूर्णम् ॥

## २३३. चण्डीकवचम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीचण्डीकवचस्य ब्रह्मा ऋषिः, अनुष्टुप् छंदः, चामुण्डा देवता, अंगन्यासोक्तमातरो बीजम्, दिग्बंधदेवतास्तत्त्वम्, श्रीजगदंबाप्रीत्यर्थे जपे विनियोगः । ॐनमश्चण्डिकायै । ॐ मार्कण्डेय उवाच ॥ ॐयद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् । यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥१॥ ब्रह्मोवाच ॥ अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम् । देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥ २ ॥ प्रथमं शैलपुत्रीति द्वितीयं ब्रह्मचारिणी । तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥ ३ ॥ पंचमं स्कन्दमातेति षष्ठं कात्यायनीति च । सप्तमं कालरात्रिश्च महागौरीति चाष्टमम् ॥ ४ ॥ नवमं सिद्धिदात्री च नवदुर्गाः प्रकीर्तिताः । उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥ ५ ॥ अग्निना दह्यमानस्तु शत्रुमध्ये गतो रणे । विषमे दुर्गमे चैव भयार्ताः शरणं गताः ॥ ६ ॥ न तेषां जायते किंचिदशुभं रणसंकटे । नापदं तस्य पश्यामि शोकदुःखभयं नहि ॥ ७ ॥ यैस्तु भक्त्या स्मृता नूनं तेषां सिद्धिः प्रजायते । प्रेतसंस्था तु चामुण्डा

वाराही महिषासना ॥ ८ ॥ ऐन्द्री गजसमारूढा वैष्णवी गरुडासना । माहेश्वरी वृषारूढा कौमारी शिखिवाहना ॥ ९ ॥ ब्राह्मी हंससमारूढा सर्वाभरणभूषिता । नानाभरणशोभाढ्या नानारत्नोपशोभिता ॥ १० ॥ दृश्यन्ते रथमारूढा देव्यः क्रोधसमाकुलाः । शंखं चक्रं गदां शक्तिं हलं च मुसलायुधम् ॥ ११ ॥ खेटकं तोमरं चैव परशुं पाशमेव च । कुन्तायुधं त्रिशूलं च शार्ङ्गमायुधमुत्तमम् ॥ १२ ॥ दैत्यानां देहनाशाय भक्तानामभयाय च । धारयन्त्यायुधानीत्थं देवानां च हिताय वै ॥ १३ ॥ महाबले महोत्साहे महाभयविनाशिनि । त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ॥ १४ ॥ प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता । दक्षिणेऽवतु वाराही नैर्ऋत्यां खड्गधारिणी ॥ १५ ॥ प्रतीच्यां वारुणी रक्षेद्वायव्यां मृगवाहिनी । उदीच्यां रक्ष कौबेरि ईशान्यां शूलधारिणि ॥ १६ ॥ ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद्वैष्णवी तथा । एवं दश दिशो रक्षेच्चामुण्डा शववाहना ॥ १७ ॥ जया मे अग्रतः स्थातु विजया स्थातु पृष्ठतः । अजिता वामपार्श्वे तु दक्षिणे चापराजिता ॥ १८ ॥ शिखां मे द्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता । मालाधरी ललाटे च भ्रुवौ रक्षेद्यशस्विनी ॥ १९ ॥ त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासिके । शंखिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वारवासिनी ॥ २० ॥ कपोलौ कालिका रक्षेत्कर्णमूले तु शांकरी । नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका ॥ २१ ॥ अधरे चामृतकला जिह्वायां च सरस्वती । दन्तान् रक्षतु कौमारी कण्ठमध्ये तु चण्डिका ॥ २२ ॥ घण्टिकां चित्रघण्टा च महामाया च तालुके । कामाक्षी चिबुकं रक्षेद्वाचं मे सर्वमंगला ॥ २३ ॥ ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी । नीलग्रीवा बहिःकण्ठे नलिकां नलकूबरी ॥ २४ ॥ खड्ग-

धारिण्युभौ स्कंधौ बाहू मे वज्रधारिणी। हस्तयोर्दण्डिनी रक्षेदम्बिका चांगुलीस्तथा ॥ २५ ॥ नखाञ्छूलेश्वरी रक्षेत् कुक्षौ रक्षेन्नलेश्वरी। स्तनौ रक्षेन्महालक्ष्मीर्मनःशोकविनाशिनी ॥ २६ ॥ हृदये ललितादेवी उदरे शूलधारिणी। नाभौ च कामिनी रक्षेद्गुह्यं गुह्येश्वरी तथा ॥ २७ ॥ कट्यां भगवती रक्षेज्जानुनी विन्ध्यवासिनी। भूतनाथा च मेढ्रं मे ऊरू महिषवाहिनी ॥ २८ ॥ जंघे महाबला प्रोक्ता सर्वकामप्रदायिनी। गुल्फयोर्नारसिंही च पादौ चामिततेजसी ॥ २९ ॥ पादांगुलीः श्रीर्मे रक्षेत्पादाधस्तलवासिनी। नखान्दंष्ट्राकराली च केशांश्चैवोर्ध्वकेशिनी ॥ ३० ॥ रोमकूपेषु कौवेरी त्वचं वागीश्वरी तथा। रक्तमज्जावसामांसान्यस्थिमेदांसि पार्वती ॥ ३१ ॥ अन्त्राणि कालरात्रिश्च पित्तं च मुकुटेश्वरी। पद्मावती पद्मकोशे कफे चूडामणिस्तथा ॥ ३२ ॥ ज्वालामुखी नखज्वाला अभेद्या सर्वसंधिषु। शुक्रं ब्रह्माणी मे रक्षेच्छायां छत्रेश्वरी तथा ॥ ३३ ॥ अहंकारं मनो बुद्धिं रक्ष मे धर्मचारिणि। प्राणापानौ तथा व्यानं समानोदानमेव च ॥ ३४ ॥ यशः कीर्तिं च लक्ष्मीं च सदा रक्षतु वैष्णवी। गोत्रमिन्द्राणी मे रक्षेत्पशून्मे रक्ष चण्डिके ॥ ३५ ॥ पुत्रान् रक्षेन्महालक्ष्मीर्भार्यां रक्षतु भैरवी। मार्गं क्षेमकरी रक्षेद्विजया सर्वतः स्थिता ॥ ३६ ॥ रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु। तत्सर्वं रक्ष मे देवि जयन्ती पापनाशिनी ॥ ३७ ॥ पदमेकं न गच्छेत्तु यदीच्छेच्छुभमात्मनः। कवचेनावृतो नित्यं यत्र यत्राधिगच्छति ॥ ३८ ॥ तत्र तत्रार्थलाभश्च विजयः सार्वकामिकः। यं यं कामयते कामं तं तं प्राप्नोति निश्चितम् ॥ ३९ ॥ परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान्। निर्भयो जायते मर्त्यः संग्रामेष्वपराजितः ॥ ४० ॥ त्रैलोक्ये तु भवेत्पूज्यः कवचेनावृतः पुमान्। इदं तु देव्याः कवचं देवानामपि दुर्लभम् ॥ ४१ ॥

यः पठेत्प्रयतो नित्यं त्रिसन्ध्यं श्रद्धयान्वितः। दैवी कला भवेत्तस्य त्रैलोक्येष्वपराजितः॥ ४२॥ जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः। नश्यन्ति व्याधयः सर्वे लूताविस्फोटकादयः॥ ४३॥ स्थावरं जंगमं वापि कृत्रिमं चापि यद्विषम्। आभिचाराणि सर्वाणि मंत्रयंत्राणि भूतले॥ ४४॥ भूचराः खेचराश्चैव जलजाश्चोपदेशिकाः। सहजाः कुलजा मालाः शाकिनी डाकिनी तथा॥ ४५॥ अन्तरिक्षचरा घोरा डाकिन्यश्च महाबलाः। ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः॥ ४६॥ ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः। नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते॥ ४७॥ मानोन्नतिर्भवेद्राज्ञस्तेजोवृद्धिकरं परम्। यशसा वर्धते सोऽपि कीर्तिमण्डितभूतले॥ ४८॥ जपेत्सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा। यावद्भूमण्डलं धत्ते सशैलवनकाननम्॥ ४९॥ तावत्तिष्ठति मेदिन्यां सन्ततिः पुत्रपौत्रिकी। देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम्॥ ५०॥ प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः॥ ५०½॥ इति श्रीवाराहपुराणे हरिहरब्रह्मविरचितं देव्याः कवचम्॥

## २३४. अर्गलास्तोत्रम्।

श्रीगणेशाय नमः॥ अस्य श्रीअर्गलास्तोत्रमंत्रस्य विष्णुर्ऋषिः, अनुष्टुप्छंदः, श्रीमहालक्ष्मीर्देवता, श्रीजगदंबाप्रीतये जपे विनियोगः। ॐ नमश्चण्डिकायै। जयन्ती मङ्गला काली भद्रकाली कपालिनी। दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते॥ १॥ मधुकैटभविद्रावि विधातृवरदे नमः। रूपं देहि जयं देहि यशो देहि द्विषो जहि॥ २॥ महिषासुरनिर्नाशविधात्रि वरदे नमः। रूपं देहि जयं देहि यशो देहि द्विषो जहि॥ ३॥ वन्दितांघ्रियुगे देवि सर्वसौभाग्यदायिनि। रूपं देहि जयं देहि यशो देहि द्विषो जहि॥ ४॥ रक्तबीजवधे देवि चंडमुंडविनाशिनि।

रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ५ ॥ अचिन्त्यरूपचरिते सर्वशत्रुविनाशिनि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ६ ॥ नतेभ्यः सर्वदा भक्त्या चण्डिके दुरितापहे । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ७ ॥ स्तुवद्भ्यो भक्तिपूर्वं त्वां चण्डिके व्याधिनाशिनि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ८ ॥ चण्डिके सततं ये त्वामर्चयंतीह भक्तितः । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ९ ॥ देहि सौभाग्यमारोग्यं देहि देवि परं सुखम् । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १० ॥ विधेहि द्विषतां नाशं विधेहि बलमुच्चकैः । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ११ ॥ विधेहि देवि कल्याणं विधेहि परमां श्रियम् । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १२ ॥ विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं जनं कुरु । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १३ ॥ प्रचण्डदैत्यदर्पघ्ने चण्डिके प्रणताय मे । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १४ ॥ चतुर्भुजे चतुर्वक्त्रसंस्तुते परमेश्वरि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १५ ॥ कृष्णेन संस्तुते देवि शश्वद्भक्त्या त्वमम्बिके । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १६ ॥ हिमाचलसुतानाथसंस्तुते परमेश्वरि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १७ ॥ सुरासुरशिरोरत्ननिघृष्टचरणेऽम्बिके । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १८ ॥ इन्द्राणीपतिसद्भावपूजिते परमेश्वरि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १९ ॥ देवि भक्तजनोद्दामदत्तानन्दोदयेऽम्बिके । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २० ॥ पुत्रान्देहि धनं देहि सर्वकामांश्च देहि मे । रूपं देहि जयं देहि

यशो देहि द्विषो जहि ॥ २१ ॥ पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीम् । तारिणीं दुर्गसंसारसागरस्य कुलोद्भवाम् ॥ २२ ॥ इदं स्तोत्रं पठित्वा तु महास्तोत्रं पठेन्नरः । स तु सप्तशतीसंख्यावरमाप्नोति सम्पदाम् ॥ २३ ॥ इति श्रीमार्कण्डेयपुराणे अर्गलास्तोत्रं संपूर्णम् ॥

## २३५. भगवत्याः कीलकस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीकीलकमंत्रस्य शिव ऋषिः, अनुष्टुप् छंदः, श्रीमहासरस्वती देवता, श्रीजगदंबाप्रीत्यर्थं जपे विनियोगः । ॐनमश्चण्डिकायै । ॐ मार्कण्डेय उवाच ॥ विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे । श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥ १ ॥ सर्वमेतद्विना यस्तु मन्त्राणामपि कीलकम् । सोऽपि क्षेममवाप्नोति सततं जाप्यतत्परः ॥ २ ॥ सिद्ध्यन्त्युच्चाटनादीनि वस्तूनि सकलान्यपि । एतेन स्तुवतां नित्यं स्तोत्रमात्रेण सिद्ध्यति ॥ ३ ॥ न मन्त्रो नौषधं तत्र न किंचिदपि विद्यते । विना जाप्येन सिद्ध्येत सर्वमुच्चाटनादिकम् ॥ ४ ॥ समग्राण्यपि सिद्ध्यंति लोकशंकामिमां हरः । कृत्वा निमंत्रयामास सर्वमेवमिदं शुभम् ॥ ५ ॥ स्तोत्रं वै चण्डिकायास्तु तच्च गुह्यं चकार सः । समाप्तिर्न च पुण्यस्य तां यथावन्नियन्त्रणाम् ॥ ६ ॥ सोऽपि क्षेममवाप्नोति सर्वमेव न संशयः । कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः ॥ ७ ॥ ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति । इत्थंरूपेण कीलेन महादेवेन कीलितम् ॥ ८ ॥ यो निष्कीलां विधायैनां नित्यं जपति सुस्फुटम् । ससिद्धः सगणः सोऽपि गन्धर्वो जायते वने ॥ ९ ॥ न चैवाप्यटतस्तस्य भयं क्वापि हि जायते । नाऽपमृत्युवशं याति मृतो मोक्षमवाप्नुयात् ॥ १० ॥ ज्ञात्वा प्रारभ्य कुर्वीत ह्यकुर्वाणो विनश्यति । ततो ज्ञात्वैव सम्पन्नमिदं प्रारभ्यते बुधैः ॥ ११ ॥

सौभाग्यादि च यत्किंचिद्दृश्यते ललनाजने । तत्सर्वं तत्प्रसादेन तेन जाप्यमिदं शुभम् ॥ १२ ॥ शनैस्तु जप्यमानेऽस्मिन्स्तोत्रे सम्पत्तिरुच्चकैः । भवत्येव समग्रापि ततः प्रारभ्यमेव तत् ॥ १३ ॥ ऐश्वर्यं यत्प्रसादेन सौभाग्यारोग्यसम्पदः । शत्रुहानिः परो मोक्षः स्तूयते सा न किं जनैः ॥ १४ ॥ इति भगवत्याः कीलकस्तोत्रं समाप्तम् ॥

## २३८. सौन्दर्यलहरीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीसौन्दर्यलहरीस्तोत्रस्य गोविन्द ऋषिः, अनुष्टुप् छन्दः, श्रीमहात्रिपुरसुन्दरी देवता, 'शिवः शक्त्या युक्त' इति बीजम्, 'सुधासिन्धोर्मध्ये' इति शक्तिः, 'जपो जल्पः शिल्पम्' इति कीलकम्, अस्माकं सर्वेषां सकुटुम्बानां क्षेम-स्थैर्यायुरारोग्य-धन-धान्य-सम्पत्ति-सन्तत्यवाप्तिद्वारा ऐहिकामुष्मिकसकलाभीष्टसिद्ध्यर्थं श्रीमत्रिपुरासुन्दरीप्रीत्यर्थं च सौन्दर्यलहरीस्तोत्रपाठमहं करिष्ये ॥ अथ करन्यासः । ॐ ह्राँ अङ्गुष्ठाभ्यां नमः । ॐ ह्रीँ तर्जनीभ्यां स्वाहा । ॐ ह्रूँ मध्यमाभ्यां वषट् । ॐ ह्रैँ अनामिकाभ्यां हुं । ॐ ह्रौँ कनिष्ठिकाभ्यां वौषट् । ॐ ह्रः करतलकरपृष्ठाभ्यां फट् ॥ अथाङ्गन्यासः । ॐ ह्राँ हृदयाय नमः । ॐ ह्रीँ शिरसे स्वाहा । ॐ ह्रूँ शिखायै वषट् । ॐ ह्रैँ कवचाय हुँ । ॐ ह्रौँ नेत्रत्रयाय वौषट् । ॐ ह्रः अस्त्राय फट् ॥ अथ ध्यानम् । लौहित्यनिर्जितजपाकुसुमानुरागां पाशाङ्कुशौ धनुरिषूनपि धारयन्तीम् ॥ ताम्रेक्षणामरुणमाल्यविशेषभूषां ताम्बूलपूरितमुखीं त्रिपुरां नमामि ॥ अथ पञ्चोपचाराः । लं पृथिव्यात्मन्यै नमो गन्धं परिकल्पयामि । हं आकाशात्मन्यै नमः पुष्पं परिकल्पयामि । यं वाय्वात्मन्यै नमो धूपं परिकल्पयामि । रं वह्न्यात्मन्यै नमो दीपं परिकल्पयामि । वं जलात्मन्यै नमो नैवेद्यं परिकल्पयामि ॥

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि । अतस्त्वामाराध्यां हरिहरविरिञ्च्यादिभिरपि प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥ १ ॥ तनीयांसं पांसुं तव चरणपङ्केरुहभवं विरिञ्चिः सञ्चिन्वन् विरचयति लोकानविकलम् । वहत्येनं शौरिः कथमपि सहस्रेण शिरसां हरः संक्षुभ्यैनं भजति भसितोद्धूलनविधिम् ॥ २ ॥ अविद्यानामन्तस्तिमिरमिहिरद्वीपनगरी जडानां चैतन्यस्तबकमकरन्दस्रुतिझरी । दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवती ॥ ३ ॥ त्वदन्यः पाणिभ्यामभयवरदो दैवतगणस्त्वमेका नैवासि प्रकटितवराभीत्यभिनया । भयात्त्रातुं दातुं फलमपि च वाञ्छासमधिकं शरण्ये ! लोकानां तव हि चरणावेव निपुणौ ॥ ४ ॥ हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननीं पुरा नारी भूत्वा पुररिपुमपि क्षोभमनयत् । स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा मुनीनामप्यन्तः प्रभवति हि मोहाय महताम् ॥ ५ ॥ धनुः पौष्पं मौर्वी मधुकरमयी पञ्च विशिखा वसन्तः सामन्तो मलयमरुदायोधनरथः । तथाप्येकः सर्वं हिमगिरिसुते ! कामपि कृपामपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते ॥ ६ ॥ क्वणत्काञ्चीदामा करिकलभकुम्भस्तनभरा परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना । धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥ ७ ॥ सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे । शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम् ॥ ८ ॥ महीं मूलाधारे कमपि मणिपूरे हुतवहं स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि । मनोऽपि भ्रूमध्ये सकलमपि भित्त्वा कुलपथं सहस्रारे पद्मे सह रहसि पत्या विहरसि ॥ ९ ॥ सुधाधारासारैश्चरण-

युगलान्तर्विगलितैः प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसः । अवाप्य
स्वां भूमिं भुजगनिभमध्युष्टवलयं स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे
कुहरिणि ॥ १० ॥ चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि
प्रभिन्नाभिः शम्भोर्नवभिरिति मूलप्रकृतिभिः । त्रयश्चत्वारिंशद्वसुदल-
कलाश्रत्रिवलयत्रिरेखाभिः सार्धं तव चरणकोणाः परिणताः ॥ ११ ॥
त्वदीयं सौन्दर्यं तुहिनगिरिकन्ये ! तुलयितुं कवीन्द्राः कल्पन्ते कथमपि
विरिञ्चिप्रभृतयः । यदालोकौत्सुक्यादमरललना यान्ति मनसा तपोभि-
र्दुष्प्रापामपि गिरिशसायुज्यपदवीम् ॥ १२ ॥ नरं वर्षीयांसं नयनवि-
रसं नर्मसु जडं तवापाङ्गालोके पतितमनुधावन्ति शतशः । गलद्वेणी-
बन्धा कुचकलशविस्रस्तसिचया हठात् त्रुट्यत्काञ्च्यो विगलितदुकूला
युवतयः ॥ १३ ॥ क्षितौ षट्पञ्चाशद् द्विसमधिकपञ्चाशदुदके हुताशे
द्वाषष्टिश्चतुरधिकपञ्चाशदनिले । दिवि द्विःषट्त्रिंशन्मनसि च चतुः-
षष्टिरिति ये मयूखास्तेषामप्युपरि तव पादाम्बुजयुगम् ॥ १४ ॥ शर-
ज्ज्योत्स्नाशुभ्रां शशियुतजटाजूटमुकुटां वरत्रासत्राणस्फटिकगुटिकापुस्तक-
कराम् । सकृन्न त्वा नत्वा कथमिव सतां सन्निदधते मधुक्षीरद्राक्षा-
मधुरिमधुरीणा भणितयः ॥ १५ ॥ कवीन्द्राणां चेतःकमलवनबालातप-
रुचिं भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम् । विरिञ्चिप्रेयस्या-
स्तरलतरशृङ्गारलहरीगभीराभिर्वाग्भिर्विदधति सतां रञ्जनममी ॥ १६ ॥
सवित्रीभिर्वाचां शशिमणिशिलाभङ्गरुचिभिर्वशिन्याद्याभिस्त्वां सह
जननि सञ्चिन्तयति यः । स कर्ता काव्यानां भवति महतां भङ्गसुभ-
गैर्वचोभिर्वाग्देवीवदनकमलामोदमधुरैः ॥ १७ ॥ तनुच्छायाभिस्ते
तरुणतरणिश्रीसरणिभिर्दिवं सर्वामुर्वीमरुणिमनिमग्नां स्मरति यः ।
भवन्त्यस्य त्रस्यद्वनहरिणशालीननयनाः सहोर्वश्या वश्याः कति कति न
गीर्वाणगणिकाः ॥ १८ ॥ मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो

हरार्धं ध्यायेद्यो हरमहिषि ! ते मन्मथकलाम् । स सद्यः सङ्क्षोभं नयति वनिता इत्यतिलघु त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम् ॥१९॥ किरन्तीमङ्गेभ्यः किरणनिकुरम्बामृतरसं हृदि त्वामाधत्ते हिमकरशिला-मूर्तिमिव यः । स सर्पाणां दर्पं शमयति शकुन्ताधिप इव ज्वरप्लुष्टान् दृष्ट्या सुखयति सुधाधारसिरया ॥ २० ॥ तडिल्लेखातन्वीं तपनशशि-वैश्वानरमयीं निषण्णां षण्णामप्युपरि कमलानां तव कलाम् । महा-पद्माटव्यां मृदितमलमायेन मनसा महान्तः पश्यन्तो दधति परमाह्लाद-लहरीम् ॥ २१ ॥ भवानि ! त्वं दासे मयि वितर दृष्टिं सकरुणां इति स्तोतुं वाञ्छन् कथयति भवानि ! त्वमिति यः । तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनीराजित-पदाम् ॥ २२ ॥ त्वया हृत्वा वामं वपुरपरितृप्तेन मनसा शरीरार्धं शम्भोरपरमपि शङ्के हृतमभूत् । तथा हि त्वद्रूपं सकलमरुणाभं त्रिन-यनं कुचाभ्यामानम्रं कुटिलशशिचूडालमुकुटम् ॥ २३ ॥ जगत्सूते धाता हरिरवति रुद्रः क्षपयते तिरस्कुर्वन्नेतत्स्वमपि वपुरीशस्तिरयति । सदापूर्वः सर्वं तदिदमनुगृह्णाति च शिवस्तवाज्ञामालम्ब्य क्षणचलित-योर्भ्रूलतिकयोः ॥ २४ ॥ त्रयाणां देवानां त्रिगुणजनितानां तव शिवे भवेत्पूजा पूजा तव चरणयोर्या विरचिता । तथा हि त्वत्पादोद्वहन-मणिपीठस्य निकटे स्थिता ह्येते शश्वन्मुकुलितकरोत्तंसमुकुटाः ॥ २५ ॥ विरिञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिं विनाशं कीनाशो भजति धनदो याति निधनम् । वितन्द्री माहेन्द्री विततिरपि सम्मीलितदृशा महासंहारेऽस्मिन् विहरति सति त्वत्पतिरसौ ॥ २६ ॥ जपो जल्पः शिल्पं सकलमपि मुद्राविरचना गतिः प्रादक्षिण्यक्रमणमशनाद्याहुति-विधिः । प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥ २७ ॥ ददाने दीनेभ्यः श्रियमनिशमाशानु-

सदृशीममन्दं सौन्दर्यप्रकरमकरन्दं विकिरति । तवास्मिन्मन्दारस्तबक-सुभगे यातु चरणे निमज्जन् मज्जीवः करणचरणैः षट्चरणताम् ॥२८॥ सुधामप्यास्वाद्य प्रतिभयजरामृत्युहरिणीं विपद्यन्ते विश्वे विधिशतम-खाद्या दिविषदः । करालं यत्क्ष्वेडं कवलितवतः कालकलना न शम्भो-स्तन्मूलं तव जननि ! ताटङ्कमहिमा ॥ २९ ॥ किरीटं वैरिञ्चं परिहर पुरः कैटभभिदः कठोरे कोटीरे स्खलसि जहि जम्भारिमुकुटम् । प्रणम्रेष्वे-तेषु प्रसभमभियातस्य भवनं भवस्यभ्युत्थाने तव परिजनोक्तिर्वि-जयते ॥ ३० ॥ चतुःषष्ट्या तन्त्रैः सकलमभिसन्धाय भुवनं स्थितस्त-त्तत्सिद्धिप्रसवपरतन्त्रैः पशुपतिः । पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैक-घटनास्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् ॥ ३१ ॥ शिवः शक्तिः कामः क्षितिरथ रविः शीतकिरणः स्मरो हंसः शक्रस्तदनु च परमार-हरयः । अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिता भजन्ते वर्णास्ते तव जननि ! नामावयवताम् ॥ ३२ ॥ स्मरं योनिं लक्ष्मीं त्रितयमिदमादौ तव मनोर्निधायैके नित्ये निरवधिमहाभोगरसिकाः । जपन्ति त्वां चिन्तामणिगुणनिबद्धाक्षवलयाः शिवाग्नौ जुह्वन्तः सुरभिघृतधाराहुति-शतैः ॥ ३३ ॥ शरीरं त्वं शम्भोः शशिमिहिरवक्षोरुहयुगं तवात्मानं मन्ये भगवति ! तवात्मानमनघम् । अतः शेषः शेषीत्ययमुभयसाधा-रणतया स्थितः सम्बन्धो वां समरसपरानन्दपरयोः ॥ ३४ ॥ मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि त्वमापस्त्वं भूमिस्त्वयि परिणतायां न हि परम् । त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा चिदानन्दाकारं शिवयुवति ! भावेन बिभृषे ॥ ३५ ॥ तवाज्ञाचक्रस्थं तपनशशिकोटि-द्युतिधरं परं शम्भुं वन्दे परिमिलितपार्श्वं परचिता । यमाराध्यन् भक्त्या रविशशिशुचीनामविषये निरालोके लोको निवसति हि भालोक-भुवने ॥ ३६ ॥ विशुद्धौ ते शुद्धस्फटिकविशदं व्योमजनकं सेवे शिवं

देवीमपि शिवसमानव्यसनिनीम् । ययोः कान्त्या यान्त्या शशिकिरण-सारूप्यसरणिं विधूतान्तर्ध्वान्ता विलसति चकोरीव जगति ॥ ३७ ॥ समुन्मीलत्संवित्कमलमकरन्दैकरसिकं भजे हंसद्वन्द्वं किमपि महतां मानसचरम् । यदालापादष्टादशगुणितविद्यापरिणतिर्यदादत्ते दोषाद्गुण-मखिलमद्भ्यः पय इव ॥ ३८ ॥ तव स्वाधिष्ठाने हुतवहमधिष्ठाय निरतं तमीडे संवर्तं जननि महतां तां च समयाम् । यदालोके लोकान् दहति महति क्रोधकलिले दयार्द्रा ते दृष्टिः शिशिरमुपचारं रचयति ॥ ३९ ॥ तडित्वन्तं शक्त्या तिमिरपरिपन्थिस्फुरणया स्फुरन्नानारत्नाभरणपरिण-द्धेन्द्रधनुषम् । तव श्यामं मेघं कमपि मणिपूरैकशरणं निषेवे वर्षन्तं हरमिहिरतप्तं त्रिभुवनम् ॥ ४० ॥ तवाधारे मूले सह समयया लास्य-परया नवात्मानं मन्ये नवरसमहाताण्डवनटम् । उभाभ्यामेताभ्यामु-दयविधिमुद्दिश्य दयया सनाथाभ्यां जज्ञे जनकजननीमज्जगदिदम् ॥४१॥ गतैर्माणिक्यत्वं गगनमणिभिः सान्द्रघटितं किरीटं ते हैमं हिमगिरि-सुते कीर्तयति यः । स नीडेयच्छायाच्छुरणशबलं चन्द्रशकलं धनुः सौनासीरं किमिति न निबध्नाति धिषणाम् ॥ ४२ ॥ धुनोतु ध्वान्तं नस्तुलितदलितेन्दीवरवनं घनस्निग्धं श्लक्ष्णं चिकुरनिकुरम्बं तव शिवे ! । यदीयं सौरभ्यं सहजमुपलब्धुं सुमनसो वसन्त्यस्मिन् मन्ये बलमथनवाटीविटपिनाम् ॥ ४३ ॥ वहन्ती सिन्दूरं प्रबलकबरीभारति-मिरत्विषां वृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् । तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरीपरीवाहस्रोतःसरणिरिव सीमन्तसरणिः ॥ ४४ ॥ अरालैः स्वाभाव्यादलिकलभसश्रीभिरलकैः परीतं ते वक्त्रं परिहसति पङ्केरुहरुचिम् । दरस्मेरे यस्मिन् दशनरुचिकिञ्जल्करुचिरे सुगन्धौ माद्यन्ति स्मरमथनचक्षुर्मधुलिहः ॥ ४५ ॥ ललाटं लावण्यद्युतिवि-मलमाभाति तव यद् द्वितीयं तन्मन्ये मुकुटशशिखण्डस्य शकलम् ।

विपर्यासन्यासादुभयमपि सम्भूय च मिथः सुधालेपस्यूतिः परिणमति राकाहिमकरः ॥ ४६ ॥ भ्रुवौ भुग्ने किञ्चिद्भुवनभयभङ्गव्यसनिनि त्वदीये नेत्राभ्यां मधुकररुचिभ्यां धृतगुणे । धनुर्मन्ये सव्येतरकर-गृहीतं रतिपतेः प्रकोष्ठे मुष्टौ च स्थगयति निगूढान्तरमुमे! ॥ ४७ ॥ अहः सूते दक्षं तव नयनमर्कात्मकतया त्रियामां वामं ते सृजति रजनीनायकमयम् । तृतीया ते दृष्टिर्दरदलितहेमाम्बुजरुचिः समाधत्ते सन्ध्यां दिवसनिशयोरन्तरचरीम् ॥ ४८ ॥ विशाला कल्याणी स्फुट-रुचिरयोध्या कुवलयैः कृपाधाराधारा किमपि मधुरा भोगवतिका । अवन्ती दृष्टिस्ते बहुनगरविस्तारविजया ध्रुवं तत्तन्नामव्यवहरणयोग्या विजयते ॥ ४९ ॥ कवीनां सन्दर्भस्तवकमकरन्दैकरसिकं कटाक्षव्या-क्षेपभ्रमरकलभौ कर्णयुगलम् । अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतर-लावसूयासंसर्गादलिकनयनं किञ्चिदरुणम् ॥ ५० ॥ शिवे! शृङ्गारार्द्रा तदितरमुखे कुत्सनपरा सरोषा गङ्गायां गिरिशचरिते विस्मयवती । हराहिभ्यो भीता सरसिरुहसौभाग्यजयिनी सखीषु स्मेरा ते जननि! मयि दृष्टिः सकरुणा ॥ ५१ ॥ गते कर्णाभ्यर्णं गरुत इव पक्ष्माणि दधती पुरां भेत्तुश्चित्तप्रशमरसविद्रावणफले । इमे नेत्रे गोत्राधरपति-कुलोत्तंसकलिके तवाकर्णाकृष्टस्मरशरविलासं कलयतः ॥५२॥ विभक्त-त्रैवर्ण्यं व्यतिकरितनीलाञ्जनतया विभाति त्वन्नेत्रत्रितयमिदमीशा-नदयिते! । पुनः स्रष्टुं देवान् द्रुहिणहरिरुद्रानुपरतान् रजः सत्त्वं बिभ्र-त्तम इति गुणानां त्रयमिव ॥ ५३ ॥ पवित्रीकर्तुं नः पशुपतिपराधीन-हृदये! दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः । नदः शोणो गङ्गा तपन-तनयेति ध्रुवममुं त्रयाणां तीर्थानामुपनयसि सम्भेदमनघे! ॥ ५४ ॥ तवापर्णे! कर्णेजपनयनपैशुन्यचकिता निलीयन्ते तोये नियतमनिमेषाः शफरिकाः । इयं च श्रीर्बद्धच्छदपुटकपाटं कुवलयं जहाति प्रत्यूषे निशि

च विघटय्य प्रविशति ॥ ५५ ॥ निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती तवेत्याहुः सन्तो धरणिधरराजन्यतनये ! । त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः ॥ ५६ ॥ दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा दवीयांसं दीनं स्नपय कृपया मामपि शिवे ! । अनेनायं धन्यो भवति न च ते हानिरियता वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥ ५७ ॥ अरालं ते पालीयुगलमगराजन्यतनये ! न केषामाधत्ते कुसुमशरकोदण्डकुतुकम् । तिरश्चीनो यत्र श्रवणपथमुल्लङ्घ्य विलसन्नपाङ्गव्यासङ्गो दिशति शरसन्धानधिषणाम् ॥ ५८ ॥ स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं चतुश्चक्रं शङ्के तव मुखमिदं मन्मथरथम् । यमारुह्य द्रुह्यत्यवनिरथमर्केन्दुचरणं महावीरो मारः प्रमथपतये स्वं जितवते ॥ ५९ ॥ सरस्वत्याः सूक्ती रमृतलहरीकौशलहरीः पिबन्त्याः शर्वाणि ! श्रवणचुलुकाभ्यामविरतम् । चमत्कारश्लाघाचलितशिरसः कुण्डलगणो झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते ॥ ६० ॥ असौ नासावंशस्तुहिनगिरिवंशध्वजपटि ! त्वदीयो नेदीयः फलतु फलमस्माकमुचितम् । वहन्नन्तर्मुक्ताः शिशिरतरनिःश्वासघटिताः समृद्ध्या यस्तासां बहिरपि च मुक्तामणिधरः ॥ ६१ ॥ प्रकृत्या रक्तायास्तव सुदति ! दन्तच्छदरुचेः प्रवक्ष्ये सादृश्यं जनयतु फलं विद्रुमलता । न बिम्बं त्वद्बिम्बप्रतिफलनलाभादरुणितं तुलामध्यारोढुं कथमिव विलज्जेत कलया ॥ ६२ ॥ स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां चकोराणामासीदतिरसतया चञ्चुजडिमा । अतस्ते शीतांशोरमृतलहरीमम्लरुचयः पिबन्ति स्वच्छंदं निशि निशि भृशं काञ्जिकधिया ॥ ६३ ॥ अविश्रान्तं पत्युर्गुणगणकथाम्रेडनजपा जपापुष्पच्छाया तव जननि ! जिह्वा जयति सा । यदग्रासीनायाः स्फटिकदृषदच्छच्छविमयी सरस्वत्या मूर्तिः परिणमति

माणिक्यवपुषा ॥ ६४ ॥ रणे जित्वा दैत्यानपहृतशिरस्त्रैः कवचिभि-
र्निवृत्तैश्चण्डांशुत्रिपुरहरनिर्माल्यविमुखैः । विशाखेन्द्रोपेन्द्रैः शशि-
शिशिरकर्पूरशकला विलीयन्ते मातस्तव वदनताम्बूलकवलाः ॥ ६५ ॥
विपञ्च्या गायन्ती विविधमवदानं पशुपतेस्त्वयारब्धे वक्तुं चलितशिरसा
साधुवचने । त्वदीयैर्माधुर्यैरपहसिततन्त्रीकलरवां निजां वीणां वाणी
निचुलयति चोलेन निभृतम् ॥ ६६ ॥ कराग्रेण स्पृष्टं तुहिनगिरिणा
वत्सलतया गिरीशेनोदस्तं मुहुरधरपानाकुलतया । करग्राह्यं शम्भोर्मुख-
मुकुरवृन्तं गिरिसुते ! कथङ्कारं ब्रूमस्तव चिबुकमौपम्यरहितम् ॥६७॥
भुजाश्लेषान्नित्यं पुरदमयितुः कण्टकवती तव ग्रीवा धत्ते मुखकमल-
नालश्रियमियम् । स्वतः श्वेता कालागरुबहुलजम्बालमलिना मृणाली-
लालित्यं वहति यदधो हारलतिका ॥ ६८ ॥ गले रेखास्तिस्रो गतिगम-
कगीतैकनिपुणे ! विवाहव्यानद्धत्रिगुणगुणसङ्ख्याप्रतिभुवः । विराजन्ते
नानाविधमधुररागाकरभुवां त्रयाणां ग्रामाणां स्थितिनियमसीमान इव
ते ॥ ६९ ॥ मृणालीमृद्वीनां तव भुजलतानां चतसृणां चतुर्भिः सौन्दर्यं
सरसिजभवः स्तौति वदनैः । नखेभ्यः संत्रस्यन् प्रथममथनादन्धकरिपो-
श्चतुर्णां वक्त्राणां सममभयहस्तार्पणधिया ॥ ७० ॥ नखानामुद्द्योतैर्नव-
नलिनरागं विहसतां कराणां ते कान्तिं कथय कथयामः कथमुमे ! ।
कयाचिद्वा साम्यं भजतु कलया हन्त कमलं यदि क्रीडल्लक्ष्मीचरणतल-
लाक्षारुणदलम् ॥ ७१ ॥ समं देवि ! स्कन्दद्विपवदनपीतं स्तनयुगं
तवेदं नः खेदं हरतु सततं प्रस्नुतमुखम् । यदालोक्याशङ्काकुलितहृदयो
हासजनकः स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झटिति ॥ ७२ ॥ अमू
ते वक्षोजावमृतरसमाणिक्यकुतुपौ न सन्देहस्पन्दो नगपतिपताके
मनसि नः । पिबन्तौ तौ यस्मादविदितवधूसङ्गमरसौ कुमारावद्यापि
द्विरदवदनक्रौञ्चदलनौ ॥ ७३ ॥ वहत्यम्ब ! स्तम्बेरमदनुजकुम्भप्रकृ-

तिभिः समारब्धां मुक्तामणिभिरमलां हारलतिकाम्। कुचाभोगो बिम्बाधररुचिभिरन्तः शबलितां प्रतापव्यामिश्रां पुरविजयिनः कीर्तिमिव ते ॥ ७४ ॥ तव स्तन्यं मन्ये धरणिधरकन्ये! हृदयतः पयःपारावारः परिवहति सारस्वत इव। दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव यत् कवीनां प्रौढानामजनि कमनीयः कवयिता ॥ ७५ ॥ हरक्रोधज्वालावलिभिरवलीढेन वपुषा गभीरे ते नाभीसरसि कृतसङ्गो मनसिजः। समुत्तस्थौ तस्मादचलतनये! धूमलतिका जनस्तां जानीते जननि! तव रोमावलिरिति ॥ ७६ ॥ यदेतत्कालिन्दीतनुतरतरङ्गाकृति शिवे! कृशे मध्ये किञ्चिज्जननि! तव तद्भाति सुधियाम्। विमर्दादन्योन्यं कुचकलशयोरन्तरगतं तनूभूतं व्योम प्रविशदिव नाभीकुहरिणीम् ॥ ७७ ॥ स्थिरो गङ्गावर्तः स्तनमुकुलरोमावलिलताकलावालं कुण्डं कुसुमशरतेजोहुतभुजः। रतेर्लीलागारं किमिति तव नाभीति गिरिजे! बिलद्वारं सिद्धेर्गिरिशनयनानां विजयते ॥ ७८ ॥ निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषो नमन्मूर्तेर्नाभौ वलिषु शनकैस्त्रुट्यत इव। चिरं ते मध्यस्य त्रुटिततटिनीतीरतरुणा समावस्थास्थेम्नो भवतु कुशलं शैलतनये! ॥ ७९ ॥ कुचौ सद्यःस्विद्यत्तटघटितकूर्पासभिदुरौ कषन्तौ दोर्मूले कनककलशाभौ कलयता। तव त्रातुं भङ्गादलमिति विलग्नं तनुभुवा त्रिधा नद्धं देवि! त्रिवलि लवलीवल्लिभिरिव ॥ ८० ॥ गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति! निजान् नितम्बादाच्छिद्य त्वयि हरणरूपेण निदधे। अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीं नितम्बप्राग्भारः स्थगयति लघुत्वं नयति च ॥ ८१ ॥ करीन्द्राणां शुण्डाः कनककदलीकाण्डपटलीमुभाभ्यामूरुभ्यामुभयमपि निर्जित्य भवती। सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां गिरिसुते! विजिग्ये जानुभ्यां विबुधकरिकुम्भद्वयमपि ॥ ८२ ॥ पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते निषङ्गौ जङ्घे

ते विषमविशिखो बाढमकृत। यदग्रे दृश्यन्ते दशशरफलाः पादयुगली-
नखाग्रच्छद्मानः सुरमुकुटशाणैकनिशिताः ॥ ८३ ॥ श्रुतीनां मूर्धानो
दधति तव यौ शेखरतया ममाप्येतौ मातः! शिरसि दयया धेहि
चरणौ। ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी ययोर्लाक्षालक्ष्मीर-
रुणहरिचूडामणिरुचिः॥ ८४ ॥ नमोवाकं ब्रूमो नयनरमणीयाय पदयो-
स्तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकवते। असूयत्यत्यन्तं यदभिहननाय
स्पृहयते पशूनामीशानः प्रमदवनकंकेलितरवे ॥ ८५ ॥ मृषा कृत्वा
गोत्रस्खलनमथ वैलक्ष्यनमितं ललाटे भर्तारं चरणकमले ताडयति ते।
चिरादन्तःशल्यं दहनकृतमुन्मीलितवता तुलाकोटिक्वाणैः किलिकिलित-
मीशानरिपुणा ॥ ८६ ॥ हिमानीहन्तव्यं हिमगिरितटाक्रान्तिचतुरौ
निशायां निद्राणां निशि च परभागे च विशदौ। परं लक्ष्मीपात्रं श्रिय-
मतिसृजन्तौ समयिनां सरोजं त्वत्पादौ जननि! जयतश्चित्रमिह किम्
॥ ८७ ॥ पदं ते कान्तीनां प्रपदमपदं देवि! विपदां कथं नीतं सद्भिः
कठिनकमठीकर्परतुलाम्। कथं वा बाहुभ्यामुपयमनकाले पुरभिदा
यदादाय न्यस्तं दृषदि दयमानेन मनसा ॥ ८८ ॥ नखैर्नाकस्त्रीणां कर-
कमलसङ्कोचशशिभिस्तरूणां दिव्यानां हसत इव ते चण्डि! चरणौ।
फलानि स्वःस्थेभ्यः किसलयकराग्रेण ददतां दरिद्रेभ्यो भद्रां श्रियमनि-
शमह्नाय ददतौ ॥ ८९ ॥ कदा काले मातः! कथय कलितालक्तकरसं
पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम्। प्रकृत्या मूकानामपि च
कविताकारणतया यदाधत्ते वाणीमुखकमलताम्बूलरसताम् ॥ ९० ॥
पदन्यासक्रीडापरिचयमिवारब्धुमनसश्चरन्तस्ते खेलं भवनकलहंसा न
जहति। सुविक्षेपे शिक्षां सुभगमणिमञ्जीररणितच्छलादाचक्षाणं चरण-
कमलं चारुचरिते ॥ ९१ ॥ अराला केशेषु प्रकृतिसरला मन्दहसिते
शिरीषाभा चित्ते दृषदिव कठोरा कुचतटे। भृशं तन्वी मध्ये पृथुरुर-

सिजारोहविषये जगत्रातुं शम्भोर्जयति करुणा काचिदरुणा ॥ ९२ ॥ पुरारातेरन्तःपुरमसि यतस्त्वच्चरणयोः सपर्यामर्यादा तरलकरणानाम-सुलभा । तथा ह्येते नीताः शतमखमुखाः सिद्धिमतुलां तव द्वारोपान्त-स्थितिभिरणिमाद्याभिरमराः ॥ ९३ ॥ गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रे-श्वरभृतः शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः । त्वदीयानां भासां प्रतिफलनलाभारुणतया शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतु-कम् ॥ ९४ ॥ कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयं कलाभिः कर्पूरै-र्मरकतकरण्डं निबिडितम् । अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं विधिर्भूयो भूयो निबिडयति नूनं तव कृते ॥ ९५ ॥ स्वदेहोद्भूता-भिर्घृणिभिरणिमाद्याभिरभितो निषेव्ये नित्ये त्वामहमिति सदा भाव-यति यः । किमाश्चर्यं तस्य त्रिनयनसमृद्धिं तृणयतो महासंवर्ताग्निर्विर-चयति नीराजनविधिम् ॥ ९६ ॥ कलत्रं वैधात्रं कति कति भजन्ते न कवयः श्रियो देव्याः को वा भवति न पतिः कैरपि धनैः । महादेवं हित्वा तव सति ! सतीनामचरमे कुचाभ्यामासङ्गः कुरबकतरोरप्य-सुलभः ॥ ९७ ॥ गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम् । तुरीया कापि त्वं दुरधिगमनिःसीम-महिमा महामाये ! विश्वं भ्रमयसि परब्रह्ममहिषि ! ॥ ९८ ॥ सरस्वत्या लक्ष्म्या विधिहरिसपत्न्यो विहरते रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा । चिरञ्जीवन्नेव क्षपतिपशुपाशव्यतिकरः । परब्रह्माभिख्यं रसयति रसं त्वद्भजनवान् ॥ ९९ ॥ प्रदीपज्वालाभिर्दिवसकर-नीराजनविधिः सुधासूतेश्चन्द्रोपलजललवैरर्घ्यघटना । स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुति-रियम् ॥ १०० ॥ इति सौन्दर्यलहरी संपूर्णा ॥

## २३७. सप्तशतीध्यानात्मकं स्तोत्रम् ॥

श्रीगणेशाय नमः ॥ विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम् । हस्तैश्चक्रदरालिखेटविशिखाँश्चापं गुणं तर्जनीं बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥ १ ॥ मातर्मे मधुकैटभघ्नि महिषप्राणापहारोद्यमे हेलानिर्मितधूम्रलोचनवधे हे चण्डमुण्डार्दिनि ॥ निःशेषीकृतरक्तबीजदनुजे नित्ये निशुम्भापहे शुम्भध्वंसिनि संहराशु दुरितं दुर्गे नमस्तेऽम्बिके ॥ २ ॥ या देवी मधुकैटभप्रमथिनी या माहिषोन्मूलिनी या धूम्रेक्षणचण्डमुण्डशमनी या रक्तबीजाशिनी ॥ या शुम्भादिनिशुम्भदैत्यदमनी या सिद्धलक्ष्मी परा सा चण्डी नवकोटिशक्तिसहिता मां पातु विश्वेश्वरी ॥ ३ ॥ दुर्गां ध्यायतु दुर्गतिप्रशमनीं दूर्वादलश्यामलां चन्द्रार्धोज्ज्वलशेखरां त्रिनयनामापीतवासोवसम् ॥ चक्रं शंखमिषुं धनुश्च दधतीं कोदण्डबाणाशयोर्मुद्रेवाभयकामदे सकटिबन्धाभीष्टदां वानयोः ॥ ४ ॥ भावोद्भिदवृता सहाभयवरा विस्रस्तनीलालका बिम्बोष्ठी तरुणाऽरुणाब्जचरणा रक्तान्तनेत्रत्रया ॥ पीनोरुस्तनभारभङ्गुरतनुः श्यामा प्रसन्नानना देवी वस्त्वरिता तनोतु विभवानानन्दयन्ती मनः ॥ ५ ॥ मुक्ताविद्युत्पयोदस्फटिकनवजपाभास्वरैः पञ्चवक्त्रैः शीतांशूल्लासिचूडैस्त्रिनयनलसितैर्भासुरामच्छवर्णाम् ॥ चक्रं शंखं कपालं गुणपरशुसुधाकुम्भवेदाक्षमाला विद्यापद्मान्वहन्तीं नमत मुनिनतां भारतीं पद्मसंस्थाम् ॥ ६ ॥ हंसारूढा हरहसितहारेन्दुकुन्दावदाता वाणी मन्दस्मिततरमुखी मौलिबद्धेन्दुलेखा ॥ विद्यावीणाऽमृतमयघटाक्षस्रजादीप्तहस्ता श्वेताब्जस्था भवदभिमतप्राप्तये भारती स्यात् ॥ ७ ॥ सौवर्णाम्बुजमध्यगां त्रिनयनां सौदामिनीसन्निभां शंखं चक्रवराभयं च दधतीमिन्दोः कलां बिभ्र-

तीम् ॥ ग्रैवेयाङ्गदहारकुण्डलधरामाखण्डलाद्यैः स्तुतां ध्यायेद्विन्ध्यनिवासिनीं शशिमुखीं पार्श्वस्थपञ्चाननाम् ॥ ८ ॥ शंखं चक्रमथो धनुश्च दधती बिभ्रामि तां तर्जनीं वामे शक्तिमसिं शरान्कलयतीं तिर्यक् त्रिशूलं भुजैः ॥ सन्नद्धां विविधायुधैः परिवृतां मन्त्री कुमारीजनैर्ध्यायेदिष्टवरप्रदां त्रिनयनां सिंहाधिरूढां शिवाम् ॥ ९ ॥ शंखासिचापशरभिन्नकरां त्रिनेत्रां तिग्मेतरांशुकलया विलसत्किरीटाम् ॥ सिंहस्थितां ससुरसिद्धनुतां च दुर्गां दूर्वानिभां दुरितवर्गहरां नमामि ॥ १० ॥ प्रकाशमध्यस्थितचित्स्वरूपां वराभये संदधतीं त्रिनेत्राम् ॥ सिन्दूरवर्णामतिकोमलाङ्गीं मायामयीं तत्त्वमयीं नमामि ॥ ११ ॥ शोणप्रभां सोमकलावतंसां पाणिस्फुरत्पञ्चशरेषुचापाम् ॥ प्राणप्रियां नौमि पिनाकपाणेः कोणत्रयस्थां कुलदेवतां मे ॥ १२ ॥ खड्गोद्भिन्नेन्दुबिम्बस्रवदमृतरसाप्लाविताङ्गी त्रिनेत्रा सव्ये पाणौ कपालाद्गलदमृतमथो मुक्तकेशी पिबन्ती ॥ दिग्वस्त्राबद्धकाञ्चीमणिमयमुकुटाद्यैर्युता दीप्तजिह्वा पायान्नीलोत्पलाभा रविशशिविलसत्कुण्डलालीढपादा ॥ १३ ॥ सद्यश्छिन्नशिरःकृपाणमभयं हस्तैर्वरैर्बिभ्रतीं घोरास्यां शिरसाऽस्त्रजासुरुचिरामुन्मुक्तकेशावलिम् ॥ सृक्कासृक्प्रवहां श्मशाननिलयां श्रुत्योः शवालंकृतिं श्यामाङ्गीं कृतमेखलाशवकरां देवीं भजे कालिकाम् ॥ १४ ॥ सर्वाद्यामगुणामलक्ष्यवपुषं व्याप्याखिलं संस्तुतां लक्ष्यां च त्रिगुणात्मिकां कनकभां सौवर्णभूषान्विताम् ॥ बीजापूरगदे च खेटकसुधापात्रे करैर्बिभ्रतीं योनिं लिङ्गमहिं च मूर्ध्नि दधतीं चण्डीं भजे चिन्मयीम् ॥ १५ ॥ धृत्वा श्रीमातुलिङ्गं तदुपरि च गदां खेटकं पानपात्रं नागं लिङ्गं च योनिं शिरसि धृतवती राजते हेमवर्णा ॥ आद्या शक्तिस्त्रिरूपा त्रिगुणपरिवृता ब्रह्मणो हेतुभूता विश्वाद्या सृष्टिकर्त्री वसतु मम गृहे सर्वदा सुप्रसन्ना ॥ १६ ॥

या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी गम्भीरावर्तनाभि-
स्तनभरनमिता शुभ्रवस्त्रोत्तरीया ॥ लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितैः
स्नापिता हेमकुंभैर्नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्य-
युक्ता ॥ १७ ॥ लक्ष्मीं कोल्हापुरस्थां भुवि गणपतिनाऽग्रे च पार्श्वद्वये
तां काल्या वाण्याऽऽसमन्तात्परिजननिकरैः सेवितां देवताभिः ॥ नागं
लिङ्गं च योनिं स्वशिरसि दधतीं मातुलिङ्गं गदां तत् खेटं
श्रीपानपात्रं त्रिभुवनजननीं नौमि दोर्भिश्चतुर्भिः ॥ १८ ॥ हस्तैः पद्मं
रथाङ्गं गुणमथ हरिणं पुस्तकं वर्णमालां टङ्कं शूलं कपालं दरममृत-
लसद्धेमकुम्भं वहन्तीम् ॥ मुक्ताविद्युत्पयोधैः स्फटिकनवजपाबन्धुरैः
पञ्चवक्त्रैस्त्र्यक्षैर्वक्षोजनम्रां सकलशशिनिभां मातृकां तां नमामि ॥ १९ ॥
ब्रह्माणी कमलेन्दुसौम्यवदना माहेश्वरी लीलया कौमारी रिपुदर्पनाशन-
करी चक्रायुधा वैष्णवी ॥ वाराही घनघोरघर्घरमुखी चैन्द्री च
वज्रायुधा चामुण्डा गणनाथरुद्रसहिता रक्षन्तु मां मातरः ॥ २० ॥
अरुणकमलसंस्था तद्रजःपुञ्जवर्णा करकमलधृतेष्टाभीतियुग्माम्बुजा
च ॥ मणिमुकुटविचित्राऽलंकृता कल्पजालैर्भवतु भुवनमाता सन्ततं
श्रीः श्रिये नः ॥ २१ ॥ हेमप्रख्यामिन्दुखण्डात्तमौलिं शंखारिष्टाभीति-
हस्तां त्रिनेत्राम् ॥ हेमाब्जस्थां पीतवर्णां प्रसन्नां देवीं दुर्गां दिव्यरूपां
नमामि ॥ २२ ॥ सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुर-
त्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम् ॥ पाणिभ्यामतिपूर्ण-
रत्नचषकं रक्तोत्पलं बिभ्रतीं सौम्यां रत्नघटस्थरक्तचरणां ध्यायेत्पराम-
म्बिकाम् ॥ २३ ॥ बिभ्राणा शूलबाणास्यरिसदरगदाचापपाशा-
न्कराब्जैर्मेघश्यामा किरीटोल्लसितशशिकला भीषणा भूषणाढ्या ॥
सिंहस्कन्धाधिरूढा चतसृभिरसिखेटान्विताभिः परीता कन्याभिर्भिन्न-
दैत्या भवतु भवभयध्वंसिनी शूलिनी वः ॥ २४ ॥ अष्टौभुजाङ्गीं

महिषस्य मर्दिनीं सशंखचक्रां शरशूलधारिणीम् ॥ तां दिव्यरूपां सह जातवेदसीं दुर्गां सदा शरणमहं प्रपद्ये ॥ २५ ॥ महिषमस्तक-नृत्तविनोदनस्फुटरणन्मणिनूपुरमेखला ॥ जननरक्षणमोक्षविधायिनी जयतु शुम्भनिशुम्भनिषूदिनी ॥ २६ ॥ उद्धतौ मधुकैटभौ महिषासुरं च निहत्य तं धूम्रलोचन चण्ड मुण्ड रक्तबीजमुखांश्च तान् ॥ दुष्टशुम्भनिशुम्भमर्दिनि नन्दिताऽमरवन्दिते विष्टपत्रयतुष्टिकारिणि भद्रकालि नमोऽस्तु ते ॥ २७ ॥ लक्ष्मीप्रदानसमये नवविद्रुमाभां विद्याप्रदानसमये शरदिन्दुशुभ्राम् ॥ विद्वेषिवर्गविजयेऽपि तमाल-नीलां देवीं त्रिलोकजननीं शरणं प्रपद्ये ॥ २८ ॥ चन्द्रहासं त्रिशूलं च शंखचक्रगदास्तथा ॥ धनुर्बाणं च मुसलं पिङ्गलं मुष्टिमेव च ॥ २९ ॥ पाशाङ्कुशमुसृण्ठीश्च मुद्गरं परशुं तथा ॥ वज्रायुधं च कुन्तं च खट्वाङ्गं च हलायुधम् ॥ ३० ॥ तूणीरं क्षुरिकां मुद्रां तोमरं पान-पात्रकम् ॥ पट्टसंदण्डनागं च कुन्तदन्तौ तथैव च ॥ ३१ ॥ दर्पणं रुद्रवीणां च बिभ्रद्वात्रिंशदोस्तलाम् ॥ पद्मरागप्रभां देवीं बालार्क-किरणारुणाम् ॥ ३२ ॥ रक्तवस्त्रपरीधानां रक्तमाल्यानुलेपनाम् ॥ दशपादाम्बुजां देवीं दशमण्डलपूरिताम् ॥ ३३ ॥ दशाननां त्रिनेत्रां च समुन्नतपयोधराम् ॥ एवं ध्यायेन्महाज्वालां महिषासुर-मर्दिनीम् ॥ ३४ ॥ सर्वदारिद्र्यशमनीं सर्वदुःखनिवारिणीम् ॥ ब्रह्माण्डमध्यजिह्वां तां महावक्त्रकरालिनीम् ॥ ३५ ॥ दशसाहस्र दोर्दण्डां नानाशस्त्रास्त्रधारिणीम् ॥ विचित्रायुधसन्नद्धां विश्वरूपां शिवात्मिकाम् ॥ ३६ ॥ दानवान्तकरीं देवीं रक्तबीजवधोद्यताम् ॥ रक्तवस्त्रधरां चण्डीं भीषणामतिभैरवाम् ॥ ३७ ॥ सम्पूर्णयौवनां लक्ष्मीं कालिकां कमलाननाम् ॥ मधुकैटभसंहर्त्रीं महिषासुरमर्दि-नीम् ॥ ३८ ॥ चण्डमुण्डशिरश्छेत्रीं सर्वदैत्यनिषूदिनीम् ॥ रक्तबीजस्य

संहर्त्रीमशेषासुरभक्षिणीम् ॥ ३९ ॥ निशुम्भशुम्भमथिनीमशेषायुधभीषणाम् ॥ महाब्रह्माण्डमालाङ्गीं सर्वाभरणभूषिताम् ॥ ४० ॥ वेतालवाहनारूढां सिंहव्याघ्रादिवाहनाम् ॥ नररक्तप्रियां मायां मधुमांसोपहारिणीम् ॥ ४१ ॥ य इदं शृणुयान्नित्यं त्रिसन्ध्यं यः पठेन्नरः ॥ ऋणकोट्यपहरणं रोगदारिद्र्यनाशनम् ॥ ४२ ॥ सर्वसिद्धिकरं पुण्यं सर्वकामफलप्रदम् ॥ भक्तानन्दकरीं देवीं परब्रह्मस्वरूपिणीम् ॥ ४३ ॥ तामष्टादशपीठस्थां त्रिपुरामधिदेवताम् ॥ वन्दे विश्वेश्वरीं देवीं भुक्तिमुक्तिफलप्रदाम् ॥ ४४ ॥ इदं सप्तशतीध्यानं सर्वरक्षाकरं नृणाम् ॥ रसं रसायनं सिद्ध्येद्गुलिकाञ्जनसिद्धिदम् ॥ ४५ ॥ पादुकायुगुलं सिद्ध्येन्मन्त्रसिद्धिकरं नृणाम् ॥ सौन्दर्यराजसंमानपुत्रपौत्राभिवर्धनम् ॥ ४६ ॥ ऐश्वर्यलाभविजयभुक्तिमुक्तिफलप्रदम् ॥ सदासन्निहितां लक्ष्मीं चण्डिकां मम देवताम् ॥ ४७ ॥ स्मरेन्नित्यं प्रयत्नेन षण्मासात्प्राप्यते फलम् ॥ महाभयापहरणं शत्रुक्षयकरं तथा ॥ ४८ ॥ अचलां श्रियमाप्नोति सर्वव्याधिविनाशनम् ॥ अन्ते स्वर्गं च मोक्षं च सत्यमेव न संशयः ॥ इति श्रीकाशीकरअनंतभट्टसुतरामकृष्णभट्टसंपादितसप्तशतीध्यानात्मकस्तोत्रं सम्पूर्णम् ॥

## २३८. सप्तशतीसारभूतदुर्गास्तोत्रम् ॥

श्रीगणेशाय नमः ॥ यस्या दक्षिणभागके दशभुजा काली कराला स्थिता यद्वामे च सरस्वती वसुभुजा भाति प्रसन्नाऽऽनना ॥ यत्पृष्ठे मिथुनत्रयं च पुरतो यस्या हरिः सैरिभस्तामष्टादशबाहुमम्बुजगतां लक्ष्मीं स्मरेन्मध्यगाम् ॥ १ ॥ ( इति ध्यानम् ॥ ) लं पृथ्व्यात्मकमर्पयामि रुचिरं गन्धं हमभ्रात्मकं पुष्पं यं मरुदात्मकं च सुरभिं धूपं विधूतागमम् ॥ रं वह्न्यात्मकदीपकं वममृताऽऽत्मानं च नैवेद्यकं

मातर्मानसिकान्गृहाण रुचिरान्पञ्चोपचारानमून् ॥ १ ॥ ( इति मनसा सम्पूज्य पठेत् ॥ ) कल्पान्ते भुजगाधिपं मुररिपावास्तीर्य निद्रामिते सञ्जातौ मधुकैटभौ सुररिपू तत्कर्णपीयूषतः ॥ दृष्ट्वा भीतिभरान्वितेन विधिना या संस्तुताऽघातयद् वैकुण्ठेन विमोह्य तौ भगवती तामस्मि कालीं भजे ॥ १ ॥ या पूर्वं महिषासुरार्दितसुरोदन्तश्रुतिप्रोत्थितक्रोधव्याप्तशिवादिदैवतनुतो निर्गत्य तेजोमयी ॥ देवप्राप्तसमस्तवेषरुचिरा सिंहेन साकं सुरद्वेष्टॄणां कदनं चकार नितरां तामस्मि लक्ष्मीं भजे ॥ २ ॥ सैन्यं नष्टमवेक्ष्य चिक्षुरमुखा योद्धुं ययुर्येऽथ तान् हत्वा शृङ्गखुराऽऽस्यपुच्छवलनैस्त्रस्तत्रिलोकीजनम् ॥ आक्रम्य प्रपदेन तं च महिषं शूलेन कण्ठेऽभिनद् या मद्यारुणनेत्रवक्त्रकमला तामस्मि लक्ष्मीं भजे ॥ ३ ॥ ब्रह्मा विष्णुमहेश्वरौ च गदितुं यस्याः प्रभावं बलं नालं सा परिपालनाय जगतोऽस्माकं च कुर्यान्मतिम् ॥ इत्थं शक्रमुखैः स्तुताऽमरगणैर्या संस्मृताऽऽपद्व्रजं हन्ताऽस्मीति वरं ददावतिशुभं तामस्मि लक्ष्मीं भजे ॥ ४ ॥ भूयः शुम्भनिशुम्भपीडितसुरैः स्तोत्रे हिमाद्रौ कृतं श्रुत्वा तत्र समागतेशरमणीदेहादभूत्कौशिकी ॥ या नैजग्रहणेरिताय सुरजिद्दूताय संधारणे यो जेता स पतिर्ममेत्यकथयत्तामस्मि वाणीं भजे ॥ ५ ॥ तद्दूतस्य वचो निशम्य कुपितः शुम्भोऽथ यं प्रेषयत् केशाकर्षणविह्वलां बलयुतस्तामानयेति द्रुतम् ॥ दैत्यं भस्म चकार धूम्रनयनं हुङ्कारमात्रेण या तत्सैन्यं च जघान यन्मृगपतिस्तामस्मि वाणीं भजे ॥ ६ ॥ चण्डं मुण्डयुतं च सैन्यसहितं दृष्ट्वाऽऽगतं संयुगे काल्या भैरवया ललाटफलकादुद्भूतयाघातयत् ॥ तावादाय समागतेत्यथ च या तस्याः प्रसन्ना सती चामुण्डेत्यभिधां व्यधात्त्रिभुवने तामस्मि वाणीं भजे ॥ ७ ॥ श्रुत्वा संयति चण्डमुण्डमरणं शुम्भो निशुम्भान्वितः क्रुद्धस्तत्र समेत्य सैन्यसहित-

श्चक्रेऽद्भुतं संयुगम् ॥ ब्रह्माण्यादियुता रणे बलपतिं या रक्तबीजासुरं चामुण्डा परिपीतरक्तमवधीत्तामस्मि वाणीं भजे ॥ ८ ॥ दृष्ट्वा रक्तजनुर्वधं प्रकुपितौ शुम्भो निशुम्भोऽप्युभौ चक्राते तुमुलं रणं प्रतिभयं नानास्त्रशस्त्रोत्करैः ॥ तत्राद्यं विनिपात्य मूर्च्छितमलं छित्त्वा निशुम्भं शिरः खड्गेनैनमपातयत्सपदि या तामस्मि वाणीं भजे ॥ ९ ॥ शुम्भं भ्रातृवधादतीव कुपितं दुर्गे त्वमन्याश्रयात् गर्विष्ठा भव मेत्युदीर्य सहसा युध्यन्तमत्युत्कटम् ॥ एकैवाऽस्मि न चापरेति वदती भित्त्वा च शूलेन या वक्षस्येनमपातयद्भुवि बलात्तामस्मि वाणीं भजे ॥ १० ॥ दैत्येऽस्मिन्निहतेऽनलप्रभृतिभिर्देवैः स्तुता प्रार्थिता सर्वार्तिप्रशमाय सर्वजगतः स्वीयारिनाशाय च ॥ बाधा दैत्यजनिर्भविष्यति यदा तत्राव-तीर्य स्वयं दैत्यान्नाशयितास्म्यहं वरमदात्तामस्मि वाणीं भजे ॥ ११ ॥ यश्चैतच्चरितत्रयं पठति ना तस्यैधते सन्ततिर्धान्यं कीर्तिधनादिकं च विपदां सद्यश्च नाशो भवेत् ॥ इत्युक्त्वान्तरधीयत स्वयमहो या पूजिता प्रत्यहं वित्तं धर्ममतिं सुतांश्च ददते तामस्मि वाणीं भजे ॥ १२ ॥ इत्येतत्कथितं निशम्य चरितं देव्याः शुभं मेधसा राजासौ सुरथः समाधिरतुलं वैश्यश्च तेपे तपः ॥ या तुष्टाऽत्र परत्र जन्मनि वरं राज्यं ददौ भूभृते ज्ञानं चैव समाधये भगवतीं तामस्मि वाणीं भजे ॥ १३ ॥ दुर्गासप्तशतीत्रयोदशमिताध्यायार्थसंगर्भितं दुर्गास्तोत्रमिदं पठिष्यति जनो यः कश्चिदत्यादरात् ॥ तस्य श्रीरतुला मतिश्च विमला पुत्रः कुलालङ्कृतिः श्रीदुर्गाचरणारविन्दकृपया स्यादत्र कः संशयः ॥ १४ ॥ वेदाभ्रावनिसम्मिता १०४ नवरसा ६९ वर्णाब्धितुल्याः ४४ करा-ब्धाया ४२ नन्दकरेन्दवो १२९ युगकराः २४ शैलद्वयो २७ ऽङ्ग्य-ङ्काः ६३ चन्द्रांभोधिसमा ४१ भुजानलमिता ३२ बाणेषवो ५५ ऽब्जार्णवा ४१ नन्दद्वन्द्व २९ समा इतीह कथिता अध्यायमन्त्राः

क्रमात् ॥ १५ ॥ श्रीमत्काशीकरोपाख्यरामकृष्णसुधीकृतम् ॥ दुर्गास्तोत्रमिदं धीराः पश्यन्तु गतमत्सराः ॥ १६ ॥ इति श्रीकाशीकरोपनामकअनन्तभट्टपुत्ररामकृष्णभट्टविरचितं श्रीदुर्गासप्तशतीसारभूतदुर्गास्तोत्रं सम्पूर्णम् ॥

## २३९. दुर्गास्तोत्रम् ।

श्रीगणेशाय नमः ॥ लक्ष्मीशे योगनिद्रां प्रभजति भुजगाधीशतल्पे सदर्पादुत्पन्नौ दानवौ तच्छ्रवणमलमयाङ्गौ मधुं कैटभं च ॥ दृष्ट्वा भीतस्य धातुः स्तुतिभिरभिनुतामाशु तौ नाशयन्तीं दुर्गां देवीं प्रपद्ये शरणमहमशेषापदुन्मूलनाय ॥ १ ॥ युद्धे निर्जित्य दैत्यस्त्रिभुवनमखिलं यस्तदीयेषु धिष्ण्येष्वास्थाप्य स्वान् विधेयान् स्वयमगमदसौ शक्रतां विक्रमेण ॥ तं सामात्याप्तमित्रं महिषमभिनिहत्यास्य मूर्धाधिरूढां दुर्गां देवीं० ॥ २ ॥ विश्वोत्पत्तिप्रणाशस्थितिविहृतिपरे देवि घोरामरारित्रासात्त्रातुं कुलं नः पुनरपि च महासङ्कटेष्वीदृशेषु ॥ आविर्भूयाः पुरस्तादिति चरणनमत्सर्वगीर्वाणवर्गां दुर्गां देवीं प्र० ॥ ३ ॥ हन्तुं शुम्भं निशुम्भं विबुधगणनुतां हेमडोलां हिमाद्रावारूढां व्यूढदर्पान्युधि निहतवतीं धूम्रदृक्चण्डमुण्डान् ॥ चामुण्डाख्यां दधानामुपशमितमहारक्तबीजोपसर्गां दुर्गां देवीं० ॥ ४ ॥ ब्रह्मेशस्कन्दनारायणकिटिनरसिंहेन्द्रशक्तिः स्वभृत्याः कृत्वा हत्वा निशुम्भं जितविबुधगणं त्रासिताऽशेषलोकम् ॥ एकीभूयाऽथ शुम्भं रणशिरसि निहत्य स्थितामात्तखड्गां दुर्गां देवीं० ॥ ५ ॥ उत्पन्ना नन्दजेति स्वयमवनितले शुम्भमन्यं निशुम्भं भ्रामर्याख्याऽरुणाख्या पुनरपि जननी दुर्गमाख्यं निहन्तुम् ॥ भीमाशाकम्भरीति त्रुटितरिपुभटां रक्तदन्तेति जातां दुर्गां देवीं० ॥ ६ ॥ त्रैगुण्यानां गुणानामनु-

सरणकलाकेलिनानावतारैस्त्रैलोक्यत्राणशीलां दनुजकुलवनीवह्निलीलां सलीलाम् ॥ देवीं सच्चिन्मयीं तां वितरितविनमत्सत्रिवर्गापवर्गां दुर्गां देवीं० ॥ ७ ॥ सिंहारूढां त्रिनेत्रां करतलविलसच्छंखचक्रासिरम्यां भक्ताभीष्टप्रदात्रीं रिपुमथनकरीं सर्वलोकैकवन्द्याम् ॥ सर्वालङ्कारयुक्तां शशियुतमुकुटां श्यामलाङ्गीं कृशाङ्गीं दुर्गां देवीं० ॥ ८ ॥ त्रायस्व स्वामिनीति त्रिभुवनजननि प्रार्थना त्वय्यपार्था पाल्यन्तेऽभ्यर्थनायां भगवति शिशवः किंन्वनन्या जनन्या ॥ तत्तुभ्यं स्यान्नमस्येत्यवनतविबुधाह्लादवीक्षा विसर्गां दुर्गां देवीं० ॥ ९ ॥ एतं सन्तः पठन्तु स्तवमखिलविपज्जालतूलाऽनलाभं हृन्मोहध्वान्तभानुप्रतिममखिलसङ्कल्पकल्पद्रुकल्पम् ॥ दौर्गं दौर्गत्यघोरा तपतु हिनकरप्रख्यमंहो गजेन्द्रश्रेणीपञ्चास्यदेश्यं विपुलभयदकालाहिताक्ष्यप्रभावम् ॥ १० ॥ इति श्रीदुर्गास्तोत्रं संपूर्णम् ॥

## २४०. रात्रिसूक्तात्मकं देवीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ रात्रिदेवीं प्रपद्येऽहं शरणागतवत्सलाम् ॥ करालवदनां कृष्णां दुष्टग्रहविनाशिनीम् ॥ १ ॥ नमामि खड्गहस्तां तां खेटहस्तां भयानकाम् ॥ वरदाभयहस्तां च भक्तलोकभयापहाम् ॥ २ ॥ शूलहस्तां शंखचक्रगदाचापेषुधारिणीम् ॥ चतुर्भुजामष्टभुजां द्विभुजामरिमर्दिनीम् ॥ ३ ॥ अष्टादशभुजां लक्ष्मीं दशहस्तां सरस्वतीम् ॥ सर्वसम्पत्प्रदात्रीं च सर्वविद्याप्रदायिनीम् ॥ ४ ॥ सहस्रबाहुचरणां सहस्रमुखलोचनाम् ॥ सहस्रमुकुटोपेतां सहस्रचरणाम्बुजाम् ॥ ५ ॥ पद्मयोनिमुखाब्जस्थां विष्णुवक्षःस्थलस्थिताम् ॥ शिवाङ्कनिलयां गौरीं वन्दे मूर्तित्रयात्मिकाम् ॥ ६ ॥ आग्नेयी वैष्णवी चोग्रा कुलानि विबुधद्विषाम् ॥ या निर्दहति रक्ताक्षी तां वन्दे सिंहवाहनाम् ॥ ७ ॥ मधुकैटभसंहारं महिषासुरमर्दनम् ॥ याऽकरोत्नौमि दुर्गां

तां वधं शुम्भनिशुम्भयोः ॥ ८ ॥ इन्द्रादिसर्वदेवानां सूर्यादिज्योतिषामपि ॥ सर्वशक्तिस्वरूपा या रात्रीं तां प्रणमाम्यहम् ॥ ९ ॥ रात्रिसूक्तं जपेद्रात्रौ त्रिवारं च दिने दिने ॥ भूतप्रेतपिशाचादिचोरसर्पादिनाशनम् ॥ १० ॥ इति श्रीरात्रिसूक्तात्मकदेवीस्तोत्रं सम्पूर्णम् ॥

## २४१. आर्यादुर्गाष्टकम् ।

श्रीगणेशाय नमः ॥ आर्यादुर्गाऽभिधाना हिमनगदुहिता शङ्करार्धासनस्था माता षाण्मातुरस्याखिलजनविनुता संस्थिता स्वासनेऽग्र्ये ॥ गीता गन्धर्वसिद्धैर्विरचितबिरुदैर्याऽखिलाऽङ्गेषु पीता संवीता भक्तवृन्दैरतिशुभचरिता देवता नः पुनातु ॥ १ ॥ मातस्त्वां साम्बपत्नीं विदुरखिलजना वेदशास्त्राश्रयेण नाहं मन्ये तथा त्वां मयि हरिदयितामम्बुजैकासनस्थाम् ॥ नित्यं पित्रा स देशे निजतनुजनिता स्थाप्यते प्रेमभावादेतादृश्यानुभूत्यो दधितटसविधे संस्थितां तर्कयामि ॥ २ ॥ नासीदालोकिता त्वत्तनुरतिरुचिराऽद्यावधीत्यात्मदृष्ट्या लोकोक्त्या मे भ्रमोऽभूत्सरसिजनिलये नामयुग्माक्षरार्थात् ॥ सोऽयं सर्वो निरस्तस्तव कनकमयीं मूर्तिमालोक्य सद्यः साऽपर्णा स्वर्णवर्णाऽर्णवतनुजनिते न श्रुता नापि दृष्टा ॥ ३ ॥ श्रीसूक्तोक्ताद्यमन्त्रात्कनकमयतनुः स्वर्णकञ्जोच्चहारा सारा लोकत्रयान्तर्भगवतिभवतीत्येवमेवागमोक्तम् ॥ तन्नामोक्ताऽक्षरार्थात्कथमयि वितथं स्यात्सरिन्नाथकन्ये दृष्टार्थे व्यर्थतर्को ह्यनयपथगतिं सूचयत्यर्थदृष्ट्या ॥ ४ ॥ तन्वस्ते मातरस्मिञ्जगति गुणवशाद्विश्रुतास्तिस्र एव काली श्रीर्गीश्च तासां प्रथममभिहिता कृष्णवर्णा ह्यपर्णा ॥ लक्ष्मीस्तु स्वर्णवर्णा विशदतनुरथो भारती चेदमूषु स्वच्छा नोनापि कृष्णा भगवति भवती श्रीरसीत्येव सिद्धम् ॥ ५ ॥ नामाद्यायाः स्वरूपं कनकमयमिदं मध्यमायाश्च यानमन्त्यायाः सिंहरूपं त्रितयमपि तनौ धारयन्त्यास्तवेदृक् ॥ दृष्ट्वा नूनैव सर्वा

व्यवहृतिसरणीरिन्दिरे चेदतर्क्यां त्वामाद्यां विश्ववन्द्यां त्रिगुणमयतनुं चेतसा चिन्तयामि ॥ ६ ॥ त्वद्रूपज्ञानकामा विविधविधसमाक्लृप्त-तर्कैरनेकैर्नो शक्ता निर्जरास्ते विधि-हरि-हरसंज्ञा जगद्वन्द्यपादाः ॥ का शक्तिर्मे भवित्री जलनिधितनये ज्ञातुमुग्रं तवेदं रूपं नाम्ना प्रभावादपि वितथफलो मे बभूव प्रयत्नः ॥ ७ ॥ अस्त्वम्ब त्वय्यनेकैर-शुभशुभतरैः कल्पितैरम्ब तर्कैरद्याहं मन्दबुद्धिः सरसिजनिलये साप-राधोऽस्मि जातः ॥ तस्मात्त्वत्पादपद्मद्वयनमितशिरा प्रार्थयाम्येतदेव क्षन्तव्यो मेऽपराधो हरिहरदयिते भेदबुद्धिर्न मेऽस्ति ॥ ८ ॥ आर्या-दुर्गाष्टकमिदमनन्तकविना कृतम् ॥ तव प्रीतिकरं भूयादित्यभ्यर्थन-मम्बिके ॥ ९ ॥ इति श्रीमदनन्तकविविरचितमार्यादुर्गाष्टकं सम्पूर्णम् ॥

## २४२. कात्यायन्यष्टकम् ।

श्रीगणेशाय नमः ॥ अवर्षिसंज्ञं पुरमस्ति लोके कात्यायनी तत्र विराजते या ॥ प्रसाददा या प्रतिमा तदीया सा छत्रपुर्यां जयतीह गेया ॥ १ ॥ त्वमस्य भिन्नैव विभासि तस्यास्तेजस्विनी दीपजदीप-कल्पा ॥ कात्यायनी स्वाश्रितदुःखहर्त्री पवित्रगात्री मतिमानदात्री ॥ २ ॥ ब्रह्मोरुवेतालकसिंहदाढोसुभैरवैरग्निगणाभिधेन ॥ संसेव्यमाना गणपत्यभिख्या युजा च देवि स्वगणैरिहासि ॥ ३ ॥ गोत्रेषु जातैर्जमदग्निभारद्वाजात्रिसत्काश्यपकौशिकानाम् ॥ कौण्डिण्यवत्सा-न्वयजैश्च विप्रैर्निजैर्निषेव्ये वरदे नमस्ते ॥ ४ ॥ भजामि गोक्षीरकृता-भिषेके रक्ताम्बरे रक्तसुचन्दनाक्ते ॥ त्वां बिल्वपत्रीशुभदामशोभे भक्ष्यप्रिये हृत्प्रियदीपमाले ॥ ५ ॥ खड्गं च शंखं महिषासुरीयं पुच्छं त्रिशूलं महिषासुरास्ये ॥ प्रवेशितं देवि करैर्दधाने रक्षानिशं मां महिषासुरघ्ने ॥ ६ ॥ स्वाग्रस्थबाणेश्वरनामलिङ्गं सुरत्नकं रुक्ममयं किरी-टम् ॥ शीर्षे दधाने जय हे शरण्ये विद्युत्प्रभे मां जयिनं कुरुष्व ॥ ७ ॥

नेत्रावतीदक्षिणपार्श्वसंस्थे विद्याधरैर्नागगणैश्च सेव्ये ॥ दयाघने प्रापय शं सदास्मान्मातर्यशोदे शुभदे शुभाक्षि ॥ ८ ॥ इदं कात्यायनी-देव्याः प्रसादाष्टकमिष्टदम् ॥ कुमठाचार्यजं भक्त्या पठेद्यः स सुखी भवेत् ॥ ९ ॥ इति श्रीकात्यायन्यष्टकं संपूर्णम् ॥

## २४३. पुराणोक्तं रात्रिसूक्तम् ।

श्रीगणेशाय नमः ॥ विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् । निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः ॥ १ ॥ ब्रह्मोवाच ॥ त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारस्वरात्मिका । सुधा त्वमक्षरे नित्ये त्रिधा मात्रात्मिका स्थिता ॥ २ ॥ अर्धमात्रा स्थिता नित्या यानुच्चार्या विशेषतः । त्वमेव संध्या सावित्री त्वं देवि जननी परा ॥ ३ ॥ त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते जगत् । त्वयैतत्पाल्यते देवि त्वमत्स्यंते च सर्वदा ॥ ४ ॥ विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने । तथा संहृतिरूपांते जगतोऽस्य जगन्मये ॥ ५ ॥ महाविद्या महामाया महामेधा महास्मृतिः । महामोहा च भवती महादेवी महेश्वरी ॥ ६ ॥ प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभाविनी । कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ॥ ७ ॥ त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा । लज्जा पुष्टिस्तथा तुष्टिस्त्वं शांतिः क्षांतिरेव च ॥ ८ ॥ खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा । शंखिनी चापिनी बाणभुशुंडीपरिघायुधा ॥ ९ ॥ सौम्यासौम्यतरा-शेषसौम्येभ्यस्त्वतिसुंदरी । परा पराणां परमा त्वमेव परमेश्वरी ॥१०॥ यच्च किंचित्क्वचिद्वस्तु सदसद्वाऽखिलात्मिके । तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे मया ॥ ११ ॥ यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत् । सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥ १२ ॥ विष्णुः शरीरग्रहणमहमीशान एव च । कारितास्ते यतोऽतस्त्वां कः

स्तोतुं शक्तिमान्भवेत् ॥ १३ ॥ सा त्वमित्थंप्रभावैः स्वैरुदारैर्देवि संस्तुता । मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ ॥ १४ ॥ प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु । बोधश्च क्रियतामस्य हंतुमेतौ महासुरौ ॥ १५ ॥ इति पुराणोक्तं रात्रिसूक्तं संपूर्णम् ॥

## २४४. शक्रादिकृता देवीस्तुतिः ।

श्रीगणेशाय नमः ॥ ऋषिरुवाच ॥ १ ॥ शक्रादयः सुरगणा निहतेऽतिवीर्ये तस्मिन्दुरात्मनि सुरारिबले च देव्या । तां तुष्टुवुः प्रणतिनम्रशिरोधरांसा वाग्भिः प्रहर्षपुलकोद्गमचारुदेहाः ॥ २ ॥ देव्या यया ततमिदं जगदात्मशक्त्या निःशेषदेवगणशक्तिसमूहमूर्त्या । तामंबिकामखिलदेवमहर्षिपूज्यां भक्त्या नताः स्म विदधातु शुभानि सा नः ॥ ३ ॥ यस्याः प्रभावमतुलं भगवाननंतो ब्रह्मा हरश्च नहि वक्तुमलं बलं च । सा चण्डिकाखिलजगत्परिपालनाय नाशाय चाशुभभयस्य मतिं करोतु ॥ ४ ॥ या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः पापात्मनां कृतधियां हृदयेषु बुद्धिः । श्रद्धा सतां कुलजनप्रभवस्य लज्जा तां त्वां नताः स्म परिपालय देवि विश्वम् ॥ ५ ॥ किं वर्णयाम तव रूपमचिंत्यमेतत्किं चातिवीर्यमसुरक्षयकारि भूरि । किं चाहवेषु चरितानि तवाति यानि सर्वेषु देव्यसुरदेवगणादिकेषु ॥ ६ ॥ हेतुः समस्तजगतां त्रिगुणापि दोषैर्न ज्ञायसे हरिहरादिभिरप्यपारा । सर्वाश्रयाखिलमिदं जगदंशभूतमव्याकृता हि परमा प्रकृतिस्त्वमाद्या ॥ ७ ॥ यस्याः समस्तसुरता समुदीरणेन तृप्तिं प्रयाति सकलेषु मखेषु देवि । स्वाहासि वै पितृगणस्य च तृप्तिहेतुरुच्चार्यसे त्वमत एव जनैः स्वधा च ॥ ८ ॥ या मुक्तिहेतुरविचिंत्यमहाव्रता त्वमभ्यस्यसे सुनियतेंद्रियतत्त्वसारैः । मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषैर्विद्याऽसि सा भगवती परमा हि देवी ॥ ९ ॥ शब्दात्मिका

सुविमलर्ग्यजुषां निधानमुद्गीथरम्यपदपाठवतां च साम्नाम् । देवि त्रयी भगवती भवभावनाय वार्तासि सर्वजगतां परमार्तिहंत्री ॥ १० ॥ मेधासि देवि विदिताखिलशास्त्रसारा दुर्गाऽसि दुर्गभव-सागरनौरसंगा । श्रीः कैटभारिहृदयैककृताधिवासा गौरि त्वमेव शशिमौलिकृतप्रतिष्ठा ॥ ११ ॥ ईषत्सहासममलं परिपूर्णचंद्र-विम्बानुकारि कनकोत्तमकांति कांतम् । अत्यद्भुतं प्रहृतमात्तरुषा तथापि वक्त्रं विलोक्य सहसा महिषासुरेण ॥ १२ ॥ दृष्ट्वा तु देवि कुपितं भ्रुकुटीकरालमुद्यच्छशांकसदृशच्छवि यन्न सद्यः । प्राणान्मुमोच महिषस्तदतीव चित्रं कैर्जीव्यते हि कुपितांतकदर्शनेन ॥ १३ ॥ देवि प्रसीद परमाभवती भवाय सद्यो विनाशयति कोपवती कुलानि । विज्ञातमेतदधुनैव यदस्तमेतन्नीतं बलं सुविपुलं महिषा-सुरस्य ॥ १४ ॥ ते संमता जनपदेषु धनानि तेषां तेषां यशांसि न च सीदति बंधुवर्गः । धन्यास्त एव निभृतात्मजभृत्यदारा येषां सदाभ्युदयदा भवती प्रसन्ना ॥ १५ ॥ धर्म्याणि देवि सकलानि सदैव कर्माण्यत्यादृतः प्रतिदिनं सुकृती करोति । स्वर्गं प्रयाति च ततो भवतीप्रसादाल्लोकत्रयेऽपि फलदा ननु देवि तेन ॥ १६ ॥ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि । दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता ॥ १७ ॥ एभिर्हतैर्जगदुपैति सुखं तथैते कुर्वंतु नाम नरकाय चिराय पापम् । संग्राममृत्यु-मधिगम्य दिवं प्रयांतु मत्वेति नूनमहितान्विनिहंसि देवि ॥ १८ ॥ दृष्ट्वैव किं न भवती प्रकरोति भस्म सर्वासुरानरिषु यत्प्रहिणोषि शस्त्रम् । लोकान्प्रयान्तु रिपवोऽपि हि शस्त्रपूता इत्थं मति-र्भवति तेष्वहितेषु साध्वी ॥ १९ ॥ खड्गप्रभानिकरविस्फुरणैस्तथोग्रैः

शूलाग्रकांतिनिवहेन दृशोऽसुराणाम् । यन्नागता विलयमंशुमदिंदुखंड-
योग्याननं तव विलोकयतां तदेतत् ॥ २० ॥ दुर्वृत्तवृत्तशमनं तव
देवि शीलं रूपं तथैतदविचिंत्यमतुल्यमन्यैः । वीर्यं च हंतृ हृतदेव-
पराक्रमाणां वैरिष्वपि प्रकटितैव दया त्वयेत्थम् ॥ २१ ॥ केनोपमा
भवतु तेऽस्य पराक्रमस्य रूपं च शत्रुभयकार्यतिहारि कुत्र । चित्ते कृपा
समरनिष्ठुरता च दृष्टा त्वय्येव देवि वरदे भुवनत्रयेऽपि ॥ २२ ॥
त्रैलोक्यमेतदखिलं रिपुनाशनेन त्रातं त्वया समरमूर्धनि तेऽपि हत्वा ।
नीता दिवं रिपुगणा भयमप्यपास्तमस्माकमुन्मदसुरारिभवं नमस्ते
॥ २३ ॥ शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके । घण्टास्वनेन
नः पाहि चापज्यानिःस्वनेन च ॥ २४ ॥ प्राच्यां रक्ष प्रतीच्यां च
चण्डिके रक्ष दक्षिणे । भ्रामणेनात्मशूलस्य उत्तरस्यां तथे-
श्वरि ॥ २५ ॥ सौम्यानि यानि रूपाणि त्रैलोक्ये विचरंति
ते । यानि चात्यंतघोराणि तै रक्षास्मांस्तथा भुवम् ॥ २६ ॥
खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके । करपल्लवसंगीनि तैरस्मान्
रक्ष सर्वतः ॥ २७ ॥ ऋषिरुवाच ॥ २८ ॥ एवं स्तुता सुरैर्दिव्यैः
कुसुमैर्नंदनोद्भवैः । अर्चिता जगतां धात्री तथा गंधानुलेपनैः ॥ २९ ॥
भक्त्या समस्तैस्त्रिदशैर्दिव्यैर्धूपैः सुधूपिता । प्राह प्रसादसुमुखी
समस्तान्प्रणतान्सुरान् ॥ ३० ॥ देव्युवाच ॥ ३१ ॥ व्रियतां त्रिदशाः
सर्वे यदस्मत्तोऽभिवांछितम् ॥ ३२ ॥ देवा ऊचुः ॥ ३३ ॥ भगवत्या
कृतं सर्वं न किंचिदवशिष्यते । यदयं निहतः शत्रुरस्माकं महिषासुरः
॥ ३४ ॥ यदि चापि वरो देयस्त्वयाऽस्माकं महेश्वरि । संस्मृताऽ-
संस्मृता त्वं नो हिंसेथाः परमापदः ॥ ३५ ॥ यश्च मर्त्यः स्तवै-
रेभिस्त्वां स्तोष्यत्यमलानने । तस्य वित्तर्द्धिविभवैर्धनदारादिसंपदाम्
॥ ३६ ॥ वृद्धयेऽस्मत्प्रसन्ना त्वं भवेथाः सर्वदाम्बिके ॥ ३७ ॥

ऋषिरुवाच ॥ ३८ ॥ इति प्रसादिता देवैर्जगतोऽर्थे तथात्मनः । तथेत्युक्त्वा भद्रकाली बभूवांतर्हिता नृप ॥ ३९ ॥ इत्येतत्कथितं भूप संभूता सा यथा पुरा । देवी देवशरीरेभ्यो जगत्त्रयहितैषिणी ॥ ४० ॥ पुनश्च गौरीदेहात्सा समुद्भूता यथाऽभवत् । वधाय दुष्टदैत्यानां तथा शुंभनिशुंभयोः ॥ ४१ ॥ रक्षणाय च लोकानां देवानामुपकारिणी । तच्छृणुष्व मयाख्यातं यथावत्कथयामि ते । ह्रीम् ॐ ॥ ४२ ॥ इति श्रीशक्रादिकृता देवीस्तुतिः संपूर्णा ॥

## २४५. नारायणीस्तुतिः ।

श्रीगणेशाय नमः ॥ ऋषिरुवाच ॥ १ ॥ देव्या हते तत्र महासुरेंद्रे सेंद्राः सुरा वह्निपुरोगमास्ताम् । कात्यायनीं तुष्टुवुरिष्टलाभाद्विकाशिवक्त्राब्जविकासिताशाः ॥ २ ॥ देवि प्रपन्नार्तिहरे प्रसीद प्रसीद मातर्जगतोऽखिलस्य । प्रसीद विश्वेश्वरि पाहि विश्वं त्वमीश्वरी देवि चराचरस्य ॥ ३ ॥ आधारभूता जगतस्त्वमेका महीस्वरूपेण यतः स्थितासि । अपांस्वरूपस्थितया त्वयैतदाप्यायते कृत्स्नमलंघ्यवीर्ये ॥ ४ ॥ त्वं वैष्णवी शक्तिरनंतवीर्या विश्वस्य बीजं परमासि माया । संमोहितं देवि समस्तमेतत्त्वं वै प्रसन्ना भुवि मुक्तिहेतुः ॥ ५ ॥ विद्याः समस्तास्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्सु । त्वयैकया पूरितमंबयैतत् का ते स्तुतिः स्तव्यपरा परोक्तिः ॥ ६ ॥ सर्वभूता यदा देवि भुक्तिमुक्तिप्रदायिनी । त्वं स्तुता स्तुतये का वा भवंतु परमोक्तयः ॥ ७ ॥ सर्वस्य बुद्धिरूपेण जनस्य हृदि संस्थिते । स्वर्गापवर्गदे देवि नारायणि नमोऽस्तु ते ॥ ८ ॥ कलाकाष्ठादिरूपेण परिणामप्रदायिनी । विश्वस्योपरतौ शक्ते नारायणि नमोऽस्तु ते ॥ ९ ॥ सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यंबके गौरि नारायणि नमोऽस्तु ते ॥ १० ॥ सृष्टिस्थिति-

विनाशानां शक्तिभूते सनातनि । गुणाश्रये गुणमये नारायणि नमोऽस्तु ते ॥ ११ ॥ शरणागतदीनार्तपरित्राणपरायणे । सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥ १२ ॥ हंसयुक्त-विमानस्थे ब्रह्माणीरूपधारिणि । कौशांभःक्षरिके देवि नारायणि नमोऽस्तु ते ॥ १३ ॥ त्रिशूलचंद्राहिधरे महावृषभवाहिनि । माहेश्वरीस्वरूपेण नारायणि नमोऽस्तु ते ॥ १४ ॥ मयूरकुक्कटवृते महाशक्तिधरेऽनघे । कौमारीरूपसंस्थाने नारायणि नमोऽस्तु ते ॥ १५ ॥ शंखचक्रगदाशार्ङ्गगृहीतपरमायुधे । प्रसीद वैष्णवीरूपे नारायणि नमोऽस्तु ते ॥ १६ ॥ गृहीतोग्रमहाचक्रे दंष्ट्रोद्धृतवसुंधरे । वराहरूपिणि शिवे नारायणि नमोऽस्तु ते ॥ १७ ॥ नृसिंहरूपेणोग्रेण हंतु दैत्यान्कृतोद्यमे । त्रैलोक्यत्राणसहिते नारायणि नमोऽस्तु ते ॥ १८ ॥ किरीटिनि महावज्रे सहस्रनयनोज्ज्वले । वृत्रप्राणहरे चैंद्रि नारायणि नमोऽस्तु ते ॥ १९ ॥ शिवदूतीस्वरूपेण हतदैत्यमहाबले । घोररूपे महारावे नारायणि नमोऽस्तु ते ॥ २० ॥ दंष्ट्राकरालवदने शिरोमालाविभूषणे । चामुंडे मुंडमथने नारायणि नमोऽस्तु ते ॥ २१ ॥ लक्ष्मि लज्जे महाविद्ये श्रद्धे पुष्टि स्वधे ध्रुवे । महारात्रि महामाये नारायणि नमोऽस्तु ते ॥ २२ ॥ मेधे सरस्वति वरे भूति बाभ्रवि तामसि । नियते त्वं प्रसीदेशे नारायणि नमोऽस्तु ते ॥ २३ ॥ सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते । भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥ २४ ॥ एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् । पातु नः सर्वभूतेभ्यः कात्यायनि नमोऽस्तु ते ॥ २५ ॥ ज्वालाकरालमत्युग्रमशेषासुरसूदनम् । त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते ॥ २६ ॥ हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत् । सा घंटा पातु नो देवि पापेभ्योऽनः सुतानिव ॥ २७ ॥

असुरासृग्वसापंकचर्चितस्ते करोज्ज्वलः । शुभाय खड्गो भवतु चंडिके त्वां नता वयम् ॥ २८ ॥ रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान्सकलानभीष्टान् । त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयांति ॥ २९ ॥ एतत्कृतं यत्कदनं त्वयाऽद्य धर्मद्विषां देवि महासुराणाम् । रूपैरनेकैर्बहुधात्ममूर्तिं कृत्वाऽम्बिके तत् प्रकरोति काऽन्या ॥ ३० ॥ विद्यासु शास्त्रेषु विवेकदीपेष्वाद्येषु वाक्येषु च का त्वदन्या । ममत्वगर्तेऽतिमहांधकारे विभ्रामयत्येत-दतीव विश्वम् ॥ ३१ ॥ रक्षांसि यत्रोग्रविषाश्च नागा यत्रारयो दस्युबलानि यत्र । दावानलो यत्र तथाब्धिमध्ये तत्र स्थिता त्वं परिपासि विश्वम् ॥ ३२ ॥ विश्वेश्वरि त्वं परिपासि विश्वं विश्वात्मिका धारयसीह विश्वम् । विश्वेशवंद्या भवती भवंति विश्वाश्रया ये त्वयि भक्तिनम्राः ॥ ३३ ॥ देवि प्रसीद परिपालय नोऽरिभीतेर्नित्यं यथाऽसुरवधादधुनैव सद्यः । पापानि सर्वजगतां प्रशमं नयाशु उत्पातपाकजनितांश्च महोपसर्गान् ॥ ३४ ॥ प्रणतानां प्रसीद त्वं देवि विश्वार्तिहारिणि । त्रैलोक्यवासि-नामीड्ये लोकानां वरदा भव ॥ ३५ ॥ देव्युवाच ॥ ३६ ॥ वरदाहं सुरगणा वरं यं मनसेच्छथ । तं वृणुध्वं प्रयच्छामि जगतामुपकारकम् ॥ ३७ ॥ देवा ऊचुः ॥ ३८ ॥ सर्वाबाधा-प्रशमनं त्रैलोक्यस्याखिलेश्वरि । एवमेव त्वया कार्यमस्मद्वैरि-विनाशनम् ॥ ३९ ॥ देव्युवाच ॥ ४० ॥ वैवस्वतेऽतरे प्राप्ते अष्टाविंशतिमे युगे । शुंभो निशुंभश्चैवान्यावुत्पत्स्येते महासुरौ ॥ ४१ ॥ नंदगोपगृहे जाता यशोदागर्भसंभवा । ततस्तौ नाश-यिष्यामि विंध्याचलनिवासिनी ॥ ४२ ॥ पुनरप्यतिरौद्रेण रूपेण पृथिवीतले । अवतीर्य हनिष्यामि वैप्रचित्तांश्च दानवान् ॥ ४३ ॥

भक्षयंत्याश्च तानुग्रान् वैप्रचित्तान्महासुरान् । रक्ता दंता भविष्यंति दाडिमीकुसुमोपमाः ॥ ४४ ॥ ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः । स्तुवंतो व्याहरिष्यंति सततं रक्तदंतिकाम् ॥ ४५ ॥ भूयश्च शतवार्षिक्यामनावृष्ट्यामनंभसि । मुनिभिः संस्मृता भूमौ संभविष्याम्ययोनिजा ॥ ४६ ॥ ततः शतेन नेत्राणां निरीक्षिष्याम्यहं मुनीन् । कीर्तयिष्यन्ति मनुजाः शताक्षीमिति मां ततः ॥ ४७ ॥ ततोऽहमखिलं लोकमात्मदेहसमुद्भवैः । भरिष्यामि सुराः शाकैरावृष्टेः प्राणधारकैः ॥ ४८ ॥ शाकंभरीति विख्यातिं तदा यास्याम्यहं भुवि ॥ ४९ ॥ तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् । दुर्गादेवीति विख्यातं तन्मे नाम भविष्यति ॥ ५० ॥ पुनश्चाहं यदा भीमं रूपं कृत्वा हिमाचले । रक्षांसि भक्षयिष्यामि मुनीनां त्राणकारणात् ॥ ५१ ॥ तदा मां मुनयः सर्वे स्तोष्यंत्यानम्रमूर्तयः । भीमादेवीति विख्यातं तन्मे नाम भविष्यति । ॥ ५२ ॥ यदारुणाख्यस्त्रैलोक्ये महाबाधां करिष्यति । तदाहं भ्रामरं रूपं कृत्वाऽसंख्येयषट्पदम् ॥ ५३ ॥ त्रैलोक्यस्य हितार्थाय वधिष्यामि महासुरम् । भ्रामरीति च मां लोकास्तदा स्तोष्यंति सर्वतः ॥ ५४ ॥ इत्थं यदा यदा बाधा दानवोत्था भविष्यति । तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम् ॥ ५५ ॥ इति श्रीमार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये नारायणीस्तुतिः संपूर्णा ॥

## २४६. ललितासहस्रनामस्तोत्रम् ।

( ❀ उपोद्घाताख्या प्रथमा कला । ❀ ) त्रिपुरां कुलनिधिमीडेऽरुणश्रियं कामराजविद्धाङ्गीम् । त्रिगुणैर्देवैर्निनुतामेकान्तां बिन्दुगां महारम्भाम् ॥ १ ॥ ललितानामसहस्रे छलार्णसूत्रानुयायिन्यः ।

परिभाषा भाष्यन्ते संक्षेपात्कौलिकप्रमोदाय ॥ २ ॥ पञ्चाशदेक आदौ नामसु सार्धत्र्यशीतिशतम् । षडशीतिः सार्धान्ते सर्वे विंशतिशतत्रयं श्लोकाः ॥ ३ ॥ दशभूः सार्धनृपाला अध्युष्टं सार्धनवषडध्युष्टम् । मुनिसूतहयाम्बाश्वोक्तिर्ध्यानमेकेन ॥४॥ अगस्त्य उवाच ॥ अश्वानन महाबुद्धे सर्वशास्त्रविशारद । कथितं ललितादेव्याश्चरितं परमाद्भुतम् ॥ १ ॥ पूर्वं प्रादुर्भवो मातुस्ततः पट्टाभिषेचनम् । भण्डासुरवधश्चैव विस्तरेण त्वयोदितः ॥ २ ॥ वर्णितं श्रीपुरं चापि महाविभवविस्तरम् । श्रीमत्पञ्चदशाक्षर्या महिमा वर्णितस्तथा ॥ ३ ॥ षोढान्यासादयो न्यासा न्यासखण्डे समीरिताः ॥ ४ ॥ अन्तर्यागक्रमश्चैव बहिर्यागक्रमस्तथा । महायागक्रमश्चैव पूजाखण्डे प्रकीर्तितः ॥ ५ ॥ पुरश्चरणखण्डे तु जपलक्षणमीरितम् । होमखण्डे त्वया प्रोक्तो होमद्रव्यविधिक्रमः ॥ ६ ॥ चक्रराजस्य विद्यायाः श्रीदेव्या देशिकात्मनोः । रहस्यखण्डे तादात्म्यं परस्परमुदीरितम् । स्तोत्रखण्डे बहुविधाः स्तुतयः परिकीर्तिताः ॥ ७ ॥ मन्त्रिणीदण्डिनीदेव्योः प्रोक्ते नामसहस्रके । नतु श्रीललितादेव्याः प्रोक्तं नामसहस्रकम् ॥८॥ तत्र मे संशयो जातो हयग्रीव दयानिधे। किंवा त्वया विस्मृतं तज्ज्ञात्वा वा समुपेक्षितम् ॥ ९ ॥ मम वा योग्यता नास्ति श्रोतुं नामसहस्रकम् । किमर्थं भवता नोक्तं तत्र मे कारणं वद ॥ १० ॥ सूत उवाच ॥ इति पृष्टो हयग्रीवो मुनिना कुम्भजन्मना । प्रहृष्टो वचनं प्राह तापसं कुम्भसंभवम् ॥ ११ ॥ लोपामुद्रापतेऽगस्त्य सावधानमनाः शृणु । नाम्नां सहस्रं यन्नोक्तं कारणं तद्वदामि ते ॥ १२ ॥ रहस्यमिति मत्वाहं नोक्तवांस्ते न चान्यथा । पुनश्च पृच्छसे भक्त्या तस्मात्तत्ते वदाम्यहम् ॥ १३ ॥

ब्रूयाच्छिष्याय भक्ताय रहस्यमपि देशिकः । भवता न प्रदेयं स्यादभक्ताय कदाचन ॥ १४ ॥ न शठाय न दुष्टाय नाविश्वासाय कर्हिचित् । श्रीमातृभक्तियुक्ताय श्रीविद्याराजवेदिने ॥ १५ ॥ उपासकाय शुद्धाय देयं नामसहस्रकम् । यानि नामसहस्राणि सद्यःसिद्धिप्रदानि वै ॥ १६ ॥ तन्त्रेषु ललितादेव्यास्तेषु मुख्यमिदं मुने । श्रीविद्यैव तु मन्त्राणां तत्र कादिर्यथा परा ॥ १७ ॥ पुराणां श्रीपुरमिव शक्तीनां ललिता यथा । श्रीविद्योपासकानां च यथा देवो वरः शिवः ॥ १८ ॥ तथा नामसहस्रेषु वरमेतत्प्रकीर्तितम् ॥ १९ ॥ यथास्य पठनाद्देवी प्रीयते ललिताम्बिका । अन्यनामसहस्रस्य पाठान्न प्रीयते तथा । श्रीमातुः प्रीतये तस्मादनिशं कीर्तयेदिदम् ॥ २० ॥ बिल्वपत्रैश्चक्रराजे योऽर्चयेल्ललिताम्बिकाम् । पद्मैर्वा तुलसीपत्रैरेभिर्नामसहस्रकैः ॥ २१ ॥ सद्यः प्रसादं कुरुते तत्र सिंहासनेश्वरी । चक्राधिराजमभ्यर्च्य जप्त्वा पञ्चदशाक्षरीम् ॥ २२ ॥ जपान्ते कीर्तयेन्नित्यमिदं नामसहस्रकम् । जपपूजाद्यशक्तोऽपि पठेन्नामसहस्रकम् ॥ २३ ॥ साङ्गार्चने साङ्गजपे यत्फलं तदवाप्नुयात् । उपासने स्तुतीरन्याः पठेदभ्युदयो हि सः ॥ २४ ॥ इदं नामसहस्रं तु कीर्तयेन्नित्यकर्मवत् । चक्रराजार्चनं देव्या जपो नाम्नां च कीर्तनम् ॥ २५ ॥ भक्तस्य कृत्यमेतावदन्यदभ्युदयं विदुः । भक्तस्यावश्यकमिदं नामसाहस्रकीर्तनम् ॥ २६ ॥ तत्र हेतुं प्रवक्ष्यामि शृणु त्वं कुम्भसंभव । पुरा श्रीललितादेवी भक्तानां हितकाम्यया ॥ २७ ॥ वाग्देवीर्वशिनीमुख्याः समाहूयेदमब्रवीत् । वाग्देवता वशिन्याद्याः शृणुध्वं वचनं मम ॥ २८ ॥ भवत्यो मत्प्रसादेन प्रोल्लसद्वाग्विभूतयः । मद्भक्तानां वाग्विभूतिप्रदाने विनियोजिताः ॥ २९ ॥

मच्चक्रस्य रहस्यज्ञा मम नामपरायणाः। मम स्तोत्रविधानाय
तस्मादाज्ञापयामि वः ॥ ३० ॥ कुरुध्वमङ्कितं स्तोत्रं मम नाम-
सहस्रकैः। येन भक्तैः स्तुताया मे सद्यः प्रीतिः परा भवेत्
॥ ३१ ॥ हयग्रीव उवाच ॥ इत्याज्ञप्ता वचोदेव्यः श्रीदेव्या ललि-
ताम्बया। रहस्यैर्नामभिर्दिव्यैश्चक्रुः स्तोत्रमनुत्तमम् ॥ ३२ ॥
रहस्यनामसाहस्रमिति तद्विश्रुतं परम्। ततः कदाचित्सदसि
स्थित्वा सिंहासनेऽम्बिका ॥ ३३ ॥ स्वसेवावसरं प्रादात्सर्वेषां
कुम्भसंभव। सेवार्थमागतास्तत्र ब्रह्माणीब्रह्मकोटयः ॥ ३४ ॥
लक्ष्मीनारायणानां च कोटयः समुपागताः। गौरीकोटिसमेतानां
रुद्राणामपि कोटयः ॥ ३५ ॥ मन्त्रिणीदण्डिनीमुख्याः सेवार्थं याः
समागताः। शक्तयो विविधाकारास्तासां संख्या न विद्यते ॥ ३६ ॥
दिव्यौघा मानवौघाश्च सिद्धौघाश्च समागताः। तत्र श्रीललितादेवी
सर्वेषां दर्शनं ददौ ॥ ३७ ॥ तेषु दृष्ट्वोपविष्टेषु स्वे स्वे स्थाने
यथाक्रमम्। तत्र श्रीललितादेवीकटाक्षाक्षेपचोदिताः ॥ ३८ ॥
उत्थाय वशिनीमुख्या बद्धाञ्जलिपुटास्तदा। अस्तुवन्नामसाहस्रैः
स्वकृतैर्ललिताम्बिकाम् ॥ ३९ ॥ श्रुत्वा स्तवं प्रसन्नाऽभूल्ललिता
परमेश्वरी। सर्वे ते विस्मयं जग्मुर्ये तत्र सदसि स्थिताः ॥ ४० ॥
ततः प्रोवाच ललिता सदस्यान्देवतागणान्। ममाज्ञयैव वाग्देव्य-
श्चक्रुः स्तोत्रमनुत्तमम् ॥ ४१ ॥ अङ्कितं नामभिर्दिव्यैर्मम प्रीति-
विधायकैः ॥ ४२ ॥ तत्पठध्वं सदा यूयं स्तोत्रं मत्प्रीतिवृद्धये।
प्रवर्तयध्वं भक्तेषु मम नामसहस्रकम् ॥ ४३ ॥ इदं नामसहस्रं मे
यो भक्तः पठते सकृत्। स मे प्रियतमो ज्ञेयस्तस्मै कामान्ददाम्यहम्
॥ ४४ ॥ श्रीचक्रे मां समभ्यर्च्य जप्त्वा पञ्चदशाक्षरीम्। पश्चान्नाम-
सहस्रं मे कीर्तयेन्मम तुष्टये ॥ ४५ ॥ ममार्चयतु वा मा वा

विद्यां जपतु वा न वा । कीर्तयेन्नामसाहस्रमिदं मत्प्रीतये सदा ॥ ४६ ॥ मत्प्रीत्या सकलान्कामाँल्लभते नात्र संशयः । तस्मान्नामसहस्रं मे कीर्तयध्वं सदादरात् ॥ ४७ ॥ हयग्रीव उवाच ॥ इति श्रीललितेशानी शास्ति देवान्सहानुगान् ॥ ४८ ॥ तदाज्ञया तदारभ्य ब्रह्मविष्णुमहेश्वराः । शक्तयो मन्त्रिणीमुख्या इदं नामसहस्रकम् ॥४९॥ पठन्ति भक्त्या सततं ललितापरितुष्टये । तस्मादवश्यं भक्तेन कीर्तनीयमिदं मुने ॥ ५० ॥ आवश्यकत्वे हेतुत्वे मया प्रोक्तो मुनीश्वर । इदानीं नामसाहस्रं वक्ष्यामि श्रद्धया श्रृणु ॥ ५१ ॥

इति ललितासहस्रनाम्न्युपोद्घातप्रकरणं समाप्तम् ॥

अस्य श्रीललितासहस्रनामस्तोत्रमहामन्त्रस्य वशिन्यादयो वाग्देवता-ऋषयः, अनुष्टुप् छन्दः, महात्रिपुरसुंदरी देवता, श्रीमद्वाग्भवकूटेति बीजम्, मध्यकूटेति शक्तिः, शक्तिकूटेति कीलकम्, मूलप्रकृतिरिति स्वरूपम्, श्रीललितात्रिपुरसुन्दरीप्रसादसिद्धिद्वारा चिन्तितफलावाप्त्यर्थं जपे विनियोगः ॥ अथ ध्यानम् ॥ सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुरत्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम् । पाणिभ्यामलिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं सौम्यां रत्नघटस्थरक्तचरणां ध्यायेत्परामम्बिकाम् ॥ ५२ ॥

( ❀ द्वितीया तापिनी कला । ❀ ) श्रीमाता श्रीमहाराज्ञी श्रीमत्सिंहासनेश्वरी । चिदग्निकुण्डसंभूता देवकार्यसमुद्यता ॥ ५२ ॥ उद्यद्भानुसहस्राभा चतुर्बाहुसमन्विता । रागस्वरूपपाशाढ्या क्रोधाकाराङ्कुशोज्ज्वला ॥ ५३ ॥ मनोरूपेक्षुकोदण्डा पञ्चतन्मात्रसायका । निजारुणप्रभापूरमज्जद्ब्रह्माण्डमण्डला ॥ ५४ ॥ चम्पकाशोकपुन्नागसौगन्धिकलसत्कचा । कुरुविन्दमणिश्रेणीकनत्कोटीरमण्डिता ॥ ५५ ॥ अष्टमीचन्द्रविभ्राजदलिकस्थलशोभिता ।

मुखचन्द्रकलङ्काभमृगनाभिविशेषका ॥ ५६ ॥ वदनस्मरमाङ्गल्य-
गृहतोरणचिल्लिका । वक्त्रलक्ष्मीपरीवाहचलन्मीनाभलोचना ॥ ५७ ॥
नवचम्पकपुष्पाभनासादण्डविराजिता । ताराकान्तितिरस्कारि-
नासाभरणभासुरा ॥ ५८ ॥ कदम्बमञ्जरीक्लृप्तकर्णपूरमनोहरा ।
ताटङ्कयुगलीभूततपनोडुपमण्डला ॥ ५९ ॥ पद्मरागशिलादर्श-
परिभाविकपोलभूः । नवविद्रुमबिम्बश्रीन्यक्कारिरदनच्छदा ॥ ६० ॥
शुद्धविद्याङ्कुराकारद्विजपङ्क्तिद्वयोज्ज्वला । कर्पूरवीटिकामोदसमा-
कर्षिदिगन्तरा ॥ ६१ ॥ निजसंलापमाधुर्यविनिर्भर्त्सितकच्छपी ।
मन्दस्मितप्रभापूरमज्जत्कामेशमानसा ॥ ६२ ॥ अनाकलितसादृश्य-
चिबुकश्रीविराजिता । कामेशबद्धमाङ्गल्यसूत्रशोभितकन्धरा ॥ ६३ ॥
कनकाङ्गदकेयूरकमनीयभुजान्विता । रत्नग्रैवेयचिन्ताकलोलमुक्ता-
फलान्विता ॥ ६४ ॥ कामेश्वरप्रेमरत्नमणिप्रतिपणस्तनी ।
नाभ्यालवालरोमालिलताफलकुचद्वयी ॥ ६५ ॥ लक्ष्यरोमलता-
धारतासमुन्नेयमध्यमा । स्तनभारदलन्मध्यपट्टबन्धवलित्रया
॥ ६६ ॥ अरुणारुणकौसुम्भवस्त्रभास्वत्कटीतटी । रत्नकिङ्किणिका-
रम्यरशनादामभूषिता ॥ ६७ ॥ कामेशज्ञातसौभाग्यमार्दवोरु-
द्वयान्विता । माणिक्यमुकुटाकारजानुद्वयविराजिता ॥ ६८ ॥
इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिका । गूढगुल्फा कूर्मपृष्ठजयिष्णु-
प्रपदान्विता ॥ ६९ ॥ नखदीधितिसंछन्ननमज्जनतमोगुणा ।
पदद्वयप्रभाजालपराकृतसरोरुहा ॥ ७० ॥ सिञ्जानमणिमञ्जीर-
मण्डितश्रीपदाम्बुजा । मरालीमन्दगमना महालावण्यशेवधिः ॥ ७१ ॥
सर्वारुणाऽनवद्याङ्गी सर्वाभरणभूषिता । शिवकामेश्वराङ्कस्था
शिवा स्वाधीनवल्लभा ॥ ७२ ॥ सुमेरुमध्यशृङ्गस्था श्रीमन्नगर-
नायिका । चिन्तामणिगृहान्तःस्था पञ्चब्रह्मासनस्थिता ॥ ७३ ॥

महापद्माटवीसंस्था कदम्बवनवासिनी । सुधासागरमध्यस्था कामाक्षी कामदायिनी ॥ ७४ ॥ देवर्षिगणसंघातस्तूयमानात्मवैभवा । भण्डासुरवधोद्युक्तशक्तिसेनासमन्विता ॥ ७५ ॥ संपत्करीसमारूढसिंधुरव्रजसेविता । अश्वारूढाधिष्ठिताश्वकोटिकोटिभिरावृता ॥ ७६ ॥ चक्रराजरथारूढसर्वायुधपरिष्कृता । गेयचक्ररथारूढमन्त्रिणीपरिसेविता ॥ ७७ ॥ किरिचक्ररथारूढदण्डनाथापुरस्कृता । ज्वालामालिनिकाक्षिप्तवह्निप्राकारमध्यगा ॥ ७८ ॥ भण्डसैन्यवधोद्युक्तशक्तिविक्रमहर्षिता । नित्या पराक्रमाटोपनिरीक्षणसमुत्सुका ॥ ७९ ॥ भण्डपुत्रवधोद्युक्तबालाविक्रमनन्दिता । मन्त्रिण्यम्बाविरचितविषङ्गवधतोषिता ॥ ८० ॥ विशुक्रप्राणहरणवाराहीवीर्यनन्दिता । कामेश्वरमुखालोककल्पितश्रीगणेश्वरा ॥ ८१ ॥ महागणेशनिर्भिन्नविघ्नयन्त्रप्रहर्षिता । भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिणी ॥ ८२ ॥ कराङ्गुलिनखोत्पन्ननारायणदशाकृतिः । महापाशुपतास्त्राग्निनिर्दग्धासुरसैनिका ॥ ८३ ॥ कामेश्वरास्त्रनिर्दग्धसभण्डासुरशून्यका । ब्रह्मोपेन्द्रमहेन्द्रादिदेवसंस्तुतवैभवा ॥ ८४ ॥ हरनेत्राग्निसंदग्धकामसंजीवनौषधिः । श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजा ॥ ८५ ॥ कण्ठाधःकटिपर्यन्तमध्यकूटस्वरूपिणी । शक्तिकूटैकतापन्नकट्यधोभागधारिणी ॥ ८६ ॥ मूलमन्त्रात्मिका मूलकूटत्रयकलेवरा । कुलामृतैकरसिका कुलसंकेतपालिनी ॥ ८७ ॥ कुलाङ्गना कुलान्तःस्था कौलिनी कुलयोगिनी । अकुला समयान्तस्था समयाचारतत्परा ॥ ८८ ॥ मूलाधारैकनिलया ब्रह्मग्रन्थिविभेदिनी । मणिपूरान्तरुदिता विष्णुग्रन्थिविभेदिनी ॥ ८९ ॥

इति ललितासहस्रनाम्नि प्रथमशतकं समाप्तम् ॥ १ ॥

( ❀ तृतीया धूम्रिका कला। ❀ ) आज्ञाचक्रान्तरालस्था रुद्रग्रन्थि-विभेदिनी । सहस्राराम्बुजारूढा सुधासाराभिवर्षिणी ॥ ९० ॥ तडिल्लतासमरुचिः षट्चक्रोपरिसंस्थिता । महासक्तिः कुण्डलिनी बिसतन्तुतनीयसी ॥ ९१ ॥ भवानी भावनागम्या भवारण्यकुठारिका । भद्रप्रिया भद्रमूर्तिर्भक्तसौभाग्यदायिनी ॥ ९२ ॥ भक्तिप्रिया भक्तिगम्या भक्तिवश्या भयापहा । शांभवी शारदाराध्या शर्वाणी शर्मदायिनी ॥ ९३ ॥ शांकरी श्रीकरी साध्वी शरच्चन्द्रनिभानना । शातोदरी शान्तिमती निराधारा निरञ्जना ॥ ९४ ॥ निर्लेपा निर्मला नित्या निराकारा निराकुला । निर्गुणा निष्कला शान्ता निष्कामा निरुपप्लवा ॥ ९५ ॥ नित्यमुक्ता निर्विकारा निष्प्रपञ्चा निराश्रया । नित्यशुद्धा नित्यबुद्धा निरवद्या निरन्तरा ॥ ९६ ॥ निष्कारणा निष्कलङ्का निरुपाधिर्निरीश्वरा । नीरागा रागमथनी निर्मदा मदनाशिनी ॥ ९७ ॥ निश्चिन्ता निरहंकारा निर्मोहा मोहनाशिनी । निर्ममा ममताहन्त्री निष्पापा पापनाशिनी ॥ ९८ ॥ निष्क्रोधा क्रोधशमनी निर्लोभा लोभनाशिनी । निःसंशया संशयघ्नी निर्भवा भवनाशिनी ॥ ९९ ॥ निर्विकल्पा निराबाधा निर्भेदा भेदनाशिनी । निर्नाशा मृत्युमथनी निष्क्रिया निष्परिग्रहा ॥ १०० ॥ निस्तुला नीलचिकुरा निरपाया निरत्यया । दुर्लभा दुर्गमा दुर्गा दुःखहन्त्री सुखप्रदा ॥ १०१ ॥ दुष्टदूरा दुराचारशमनी दोषवर्जिता । सर्वज्ञा सान्द्रकरुणा समानाधिकवर्जिता ॥ १०२ ॥

इति ललितासहस्रनाम्नि द्वितीयशतकं समाप्तम् ॥ २ ॥

( ❀ चतुर्थी मरीच्याख्या कला। ❀ ) सर्वशक्तिमयी सर्वमङ्गला सद्गतिप्रदा । सर्वेश्वरी सर्वमयी सर्वमन्त्रस्वरूपिणी ॥ १०३ ॥ सर्वयन्त्रात्मिका सर्वतन्त्ररूपा मनोन्मनी । माहेश्वरी महादेवी

महालक्ष्मीर्मृडप्रिया ॥ १०४ ॥ महारूपा महापूज्या महापातक-नाशिनी । महामाया महासत्त्वा महाशक्तिर्महारतिः ॥ १०५ ॥ महाभोगा महैश्वर्या महावीर्या महाबला । महाबुद्धिर्महासिद्धि-र्महायोगेश्वरेश्वरी ॥ १०६ ॥ महातन्त्रा महामन्त्रा महायन्त्रा महा-सना । महायागक्रमाराध्या महाभैरवपूजिता ॥ १०७ ॥ महेश्वर-महाकल्पमहाताण्डवसाक्षिणी । महाकामेशमहिषी महात्रिपुरसुन्दरी ॥ १०८ ॥ चतुःषष्ठ्युपचाराढ्या चतुःषष्टिकलामयी । महाचतुः-षष्टिकोटियोगिनीगणसेविता ॥ १०९ ॥ मनुविद्या चन्द्रविद्या चन्द्र-मण्डलमध्यगा । चारुरूपा चारुहासा चारुचन्द्रकलाधरा ॥ ११० ॥ चराचरजगन्नाथा चक्रराजनिकेतना । पार्वती पद्मनयना पद्मराग-समप्रभा ॥ १११ ॥ पञ्चप्रेतासनासीना पञ्चब्रह्मस्वरूपिणी । चिन्मयी परमानन्दा विज्ञानघनरूपिणी ॥ ११२ ॥ ध्यानध्यातृ-ध्येयरूपा धर्माधर्मविवर्जिता । विश्वरूपा जागरिणी स्वपन्ती तैज-सात्मिका ॥ ११३ ॥ सुप्ता प्राज्ञात्मिका तुर्या सर्वावस्थाविवर्जिता । सृष्टिकर्त्री ब्रह्मरूपा गोप्त्री गोविन्दरूपिणी ॥ ११४ ॥ संहारिणी रुद्ररूपा तिरोधानकरीश्वरी । सदाशिवाऽनुग्रहदा पञ्चकृत्यपरायणा ॥ ११५ ॥ भानुमण्डलमध्यस्था भैरवी भगमालिनी । पद्मासना भगवती पद्मनाभसहोदरी ॥ ११६ ॥ उन्मेषनिमिषोत्पन्नविपन्न-भुवनावली । सहस्रशीर्षवदना सहस्राक्षी सहस्रपात् ॥ ११७ ॥ आब्रह्मकीटजननी वर्णाश्रमविधायिनी । निजाज्ञारूपनिगमा पुण्या-पुण्यफलप्रदा ॥ ११८ ॥ श्रुतिसीमन्तसिन्दूरीकृतपादाब्जधूलिका । सकलागमसंदोहशुक्तिसंपुटमौक्तिका ॥ ११९ ॥ पुरुषार्थप्रदा पूर्णा भोगिनी भुवनेश्वरी । अम्बिकाऽनादिनिधना हरिब्रह्मेन्द्रसेविता ॥ १२० ॥

इति ललितासहस्रनाम्नि तृतीयशतकं समाप्तम् ॥ ३ ॥

( ❀ पञ्चमी ज्वालिनी कला। ❀ ) नारायणी नादरूपा नामरूपविवर्जिता । ह्रींकारी ह्रीमती हृद्या हेयोपादेयवर्जिता ॥ १२१ ॥ राजराजार्चिता राज्ञी रम्या राजीवलोचना । रञ्जनी रमणी रस्या रणत्किङ्किणिमेखला ॥ १२२ ॥ रमा राकेन्दुवदना रतिरूपा रतिप्रिया । रक्षाकरी राक्षसघ्नी रामा रमणलम्पटा ॥ १२३ ॥ काम्या कामकलारूपा कदम्बकुसुमप्रिया । कल्याणी जगतीकन्दा करुणारससागरा ॥ १२४ ॥ कलावती कलालापा कान्ता कादम्बरीप्रिया । वरदा वामनयना वारुणीमदविह्वला ॥ १२५ ॥ विश्वाधिका वेदवेद्या विन्ध्याचलनिवासिनी । विधात्री वेदजननी विष्णुमाया विलासिनी ॥ १२६ ॥ क्षेत्रस्वरूपा क्षेत्रेशी क्षेत्रक्षेत्रज्ञपालिनी । क्षयवृद्धिविनिर्मुक्ता क्षेत्रपालसमर्चिता ॥ १२७ ॥ विजया विमला वन्द्या वन्दारुजनवत्सला । वाग्वादिनी वामकेशी वह्निमण्डलवासिनी ॥ १२८ ॥ भक्तिमत्कल्पलतिका पशुपाशविमोचिनी । संहृताशेषपाखण्डा सदाचारप्रवर्तिका ॥ १२९ ॥ तापत्रयाग्निसंतप्तसमाह्लादनचन्द्रिका । तरुणी तापसाराध्या तनुमध्या तमोपहा ॥ १३० ॥ चितिस्तत्पदलक्ष्यार्था चिदेकरसरूपिणी । स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसंततिः ॥ १३१ ॥ परा प्रत्यक्चितीरूपा पश्यन्ती परदेवता । मध्यमा वैखरीरूपा भक्तमानसहंसिका ॥ १३२ ॥ कामेश्वरप्राणनाडी कृतज्ञा कामपूजिता । शृङ्गाररससंपूर्णा जया जालन्धरस्थिता ॥ १३३ ॥ ओड्याणपीठनिलया बिन्दुमण्डलवासिनी । रहोयागक्रमाराध्या रहस्तर्पणतर्पिता ॥ १३४ ॥ सद्यःप्रसादिनी विश्वसाक्षिणी साक्षिवर्जिता । षडङ्गदेवतायुक्ता षाड्गुण्यपरिपूरिता ॥ १३५ ॥ नित्यक्लिन्ना निरुपमा निर्वाणसुखदायिनी । नित्या षोडशिकारूपा श्रीकण्ठार्धशरीरिणी ॥ १३६ ॥ प्रभावती प्रभारूपा

प्रसिद्धा परमेश्वरी । मूलप्रकृतिरव्यक्ता व्यक्ताव्यक्तस्वरूपिणी ॥१३७॥

इति ललितासहस्रनाम्नि चतुर्थशतकं समाप्तम् ॥ ४ ॥

( ❀ षष्ठी रुच्याख्या कला । ❀ ) व्यापिनी विविधाकारा विद्या विद्यास्वरूपिणी । महाकामेशनयनकुमुदाह्लादकौमुदी ॥ १३८ ॥ भक्तहार्दतमोभेदभानुमद्भानुसंततिः । शिवदूती शिवाराध्या शिवमूर्तिः शिवंकरी ॥ १३९ ॥ शिवप्रिया शिवपरा शिष्टेष्टा शिष्टपूजिता । अप्रमेया स्वप्रकाशा मनोवाचामगोचरा ॥ १४० ॥ चिच्छक्तिश्चेतनारूपा जडशक्तिर्जडात्मिका । गायत्री व्याहृतिः संध्या द्विजवृन्दनिषेविता ॥ १४१ ॥ तत्त्वासना तत्त्वमयी पञ्चकोशान्तरस्थिता । निःसीममहिमा नित्ययौवना मदशालिनी ॥ १४२ ॥ मदघूर्णितरक्ताक्षी मदपाटलगण्डभूः । चन्दनद्रवदिग्धाङ्गा चाम्पेयकुसुमप्रिया ॥ १४३ ॥ कुशला कोमलाकारा कुरुकुल्ला कुलेश्वरी । कुलकुण्डालया कौलमार्गतत्परसेविता ॥ १४४ ॥ कुमारगणनाथाम्बा तुष्टिः पुष्टिर्मतिर्धृतिः । शान्तिः स्वस्तिमती कान्तिर्नन्दिनी विघ्ननाशिनी ॥ १४५ ॥ तेजोवती त्रिनयना लोलाक्षीकामरूपिणी । मालिनी हंसिनी माता मलयाचलवासिनी ॥ १४६ ॥ सुमुखा नलिनी सुभ्रूः शोभना सुरनायिका । कालकंठी कान्तिमती क्षोभिणी सूक्ष्मरूपिणी ॥ १४७ ॥ वज्रेश्वरी वामदेवी वयोवस्थाविवर्जिता । सिद्धेश्वरी सिद्धविद्या सिद्धमाता यशस्विनी ॥ १४८ ॥ विशुद्धिचक्रनिलयाऽऽरक्तवर्णा त्रिलोचना । खट्वाङ्गादिप्रहरणा वदनैकसमन्विता ॥ १४९ ॥ पायसान्नप्रिया त्वक्स्था पशुलोकभयंकरी । अमृतादिमहाशक्तिसंवृता डाकिनीश्वरी ॥ १५० ॥ अनाहताब्जनिलया श्यामाभा वदनद्वया । दंष्ट्रोज्ज्वलाक्षमालादिधरा रुधिरसंस्थिता ॥ १५१ ॥ कालरात्र्यादिशक्त्यौघवृता स्निग्धौदनप्रिया । महावीरे-

न्द्रवरदा राकिण्यम्बास्वरूपिणी ॥ १५२ ॥ मणिपूराब्जनिलया वदनत्रयसंयुता । वज्रादिकायुधोपेता डामर्यादिभिरावृता ॥ १५३ ॥

इति ललितासहस्रनाम्नि पञ्चमशतकं समाप्तम् ॥ ५ ॥

( ❀ सप्तमी सुषुम्णा कला । ❀ ) रक्तवर्णा मांसनिष्ठा गुडान्नप्रीतमानसा । समस्तभक्तसुखदा लाकिन्यम्बास्वरूपिणी ॥ १५४ ॥ स्वाधिष्ठानाम्बुजगता चतुर्वक्त्रमनोहरा । शूलाद्यायुधसंपन्ना पीतवर्णाऽतिगर्विता ॥ १५५ ॥ मेदोनिष्ठा मधुप्रीता बन्धिन्यादिसमन्विता । दध्यन्नासक्तहृदया काकिनीरूपधारिणी ॥ १५६ ॥ मूलाधाराऽम्बुजारूढा पञ्चवक्त्राऽस्थिसंस्थिता । अङ्कुशादिप्रहरणा वरदादिनिषेविता ॥ १५७ ॥ मुद्गौदनासक्तचित्ता साकिन्यम्बास्वरूपिणी । आज्ञाचक्राब्जनिलया शुक्लवर्णा षडानना ॥ १५८ ॥ मज्जासंस्था हंसवतीमुख्यशक्तिसमन्विता ॥ हरिद्रान्नैकरसिका हाकिनीरूपधारिणी ॥ १५९ ॥ सहस्रदलपद्मस्था सर्ववर्णोपशोभिता । सर्वायुधधरा शुक्लसंस्थिता सर्वतोमुखी ॥ १६० ॥ सर्वौदनप्रीतचित्ता याकिन्यम्बास्वरूपिणी । स्वाहा स्वधाऽमतिर्मेधा श्रुतिस्मृतिरनुत्तमा ॥ १६१ ॥ पुण्यकीर्तिः पुण्यलभ्या पुण्यश्रवणकीर्तना । पुलोमजार्चिता बन्धमोचनी बन्धुरालका ॥ १६२ ॥ विमर्शरूपिणी विद्या वियदादिजगत्प्रसूः । सर्वव्याधिप्रशमनी सर्वमृत्युनिवारिणी ॥ १६३ ॥ अग्रगण्याऽचिन्त्यरूपा कलिकल्मषनाशिनी । कात्यायनी कालहन्त्री कमलाक्षनिषेविता ॥ १६४ ॥ ताम्बूलपूरितमुखी दाडिमीकुसुमप्रभा । मृगाक्षी मोहिनी मुख्या मृडानी मित्ररूपिणी ॥ १६५ ॥ नित्यतृप्ता भक्तनिधिर्नियन्त्री निखिलेश्वरी । मैत्र्यादिवासनालभ्या महाप्रलयसाक्षिणी ॥ १६६ ॥ पराशक्तिः परानिष्ठा प्रज्ञानघनरूपिणी । माध्वीपानालसा मत्ता मातृ-

कावर्णरूपिणी ॥ १६७ ॥ महाकैलासनिलया मृणालमृदुदोर्लता । महनीया दयामूर्तिर्महासाम्राज्यशालिनी ॥ १६८ ॥ आत्मविद्या महाविद्या श्रीविद्या कामसेविता । श्रीषोडशाक्षरीविद्या त्रिकूटा कामकोटिका ॥ १६९ ॥ कटाक्षकिंकरीभूतकमलाकोटिसेविता । शिरःस्थिता चन्द्रनिभा भालस्थेन्द्रधनुःप्रभा ॥ १७० ॥ हृदयस्था रविप्रख्या त्रिकोणान्तरदीपिका । दाक्षायणी दैत्यहन्त्री दक्षयज्ञविनाशिनी ॥ १७१ ॥

इति ललितासहस्रनाम्नि षष्ठशतकं समाप्तम् ॥ ६ ॥

( ❀ अष्टमी भोगदा कला । ❀ ) दरान्दोलितदीर्घाक्षी दरहासोज्ज्वलन्मुखी । गुरुमूर्तिर्गुणनिधिर्गोमाता गुहजन्मभूः ॥ १७२ ॥ देवेशी दण्डनीतिस्था दहराकाशरूपिणी । प्रतिपन्मुख्यराकान्ततिथिमण्डलपूजिता ॥ १७३ ॥ कलात्मिका कलानाथा काव्यालापविमोदिनी । सचामररमावाणीसव्यदक्षिणसेविता ॥ १७४ ॥ आदिशक्तिरमेयात्मा परमा पावनाकृतिः । अनेककोटिब्रह्माण्डजननी दिव्यविग्रहा ॥ १७५ ॥ क्लींकारी केवला गुह्या कैवल्यपददायिनी ॥ त्रिपुरा त्रिजगद्वन्द्या त्रिमूर्तिस्त्रिदशेश्वरी ॥ १७६ ॥ त्र्यक्षरी दिव्यगन्धाढ्या सिन्दूरतिलकाञ्चिता । उमा शैलेन्द्रतनया गौरी गन्धर्वसेविता ॥ १७७ ॥ विश्वगर्भा स्वर्णगर्भाऽवरदा वागधीश्वरी । ध्यानगम्याऽपरिच्छेद्या ज्ञानदा ज्ञानविग्रहा ॥ १७८ ॥ सर्ववेदान्तसंवेद्या सत्यानन्दस्वरूपिणी । लोपामुद्रार्चिता लीलाक्लृप्तब्रह्माण्डमण्डला ॥ १७९ ॥ अदृश्या दृश्यरहिता विज्ञात्री वेद्यवर्जिता । योगिनी योगदा योग्या योगानन्दयुगंधरा ॥ १८० ॥ इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिस्वरूपिणी । सर्वाधारा सुप्रतिष्ठा सदसद्रूपधारिणी ॥ १८१ ॥ अष्टमूर्तिरजाजैत्री लोकयात्राविधायिनी ।

एकाकिनी भूमरूपा निर्द्वैता द्वैतवर्जिता ॥ १८२ ॥ अन्नदा वसुदा वृद्धा ब्रह्मात्मैक्यस्वरूपिणी । बृहती ब्राह्मणी ब्राह्मी ब्रह्मानन्दा बलिप्रिया ॥ १८३ ॥ भाषारूपा बृहत्सेना भावाभावविवर्जिता । सुखाराध्या शुभकरी शोभना सुलभागतिः ॥ १८४ ॥ राजराजेश्वरी राज्यदायिनी राज्यवल्लभा । राजत्कृपा राजपीठनिवेशितनिजाश्रिता ॥ १८५ ॥ राज्यलक्ष्मीः कोशनाथा चतुरङ्गबलेश्वरी । साम्राज्य-दायिनी सत्यसंधा सागरमेखला ॥ १८६ ॥ दीक्षिता दैत्यशमनी सर्वलोकवशंकरी । सर्वार्थदात्री सावित्री सच्चिदानन्दरूपिणी ॥ १८७ ॥

इति ललितासहस्रनाम्नि सप्तमशतकं समाप्तम् ॥ ७ ॥

( ❀ नवमी विश्वा कला । ❀ ) देशकालापरिच्छिन्ना सर्वगा सर्व-मोहिनी । सरस्वती शास्त्रमयी गुहाम्बा गुह्यरूपिणी ॥ १८८ ॥ सर्वोपा-धिविनिर्मुक्ता सदाशिवपतिव्रता । संप्रदायेश्वरी साध्वी गुरुमण्डल-रूपिणी ॥ १८९ ॥ कुलोत्तीर्णा भगाराध्या माया मधुमती मही । गणाम्बा गुह्यकाराध्या कोमलाङ्गी गुरुप्रिया ॥ १९० ॥ स्वतन्त्रा सर्वतन्त्रेशी दक्षिणामूर्तिरूपिणी । सनकादिसमाराध्या शिवज्ञानप्रदायिनी ॥ १९१ ॥ चित्कलानन्दकलिका प्रेमरूपा प्रियंकरी । नामपारायणप्रीता नन्दिविद्या नटेश्वरी ॥ १९२ ॥ मिथ्याजगदधिष्ठाना मुक्तिदा मुक्तिरूपिणी । लास्यप्रिया लयकरी लज्जा रम्भादिवन्दिता ॥ १९३ ॥ भवदावसुधावृष्टिः पापारण्य-दवानला । दौर्भाग्यतूलवातूला जराध्वान्तरविप्रभा ॥ १९४ ॥ भाग्याब्धिचन्द्रिका भक्तचित्तकेकिघनाघना । रोगपर्वतदम्भो-लिर्मृत्युदारुकुठारिका ॥ १९५ ॥ महेश्वरी महाकाली महाग्रासा महाशना । अपर्णा चण्डिका चण्डमुण्डासुरनिषूदनी ॥ १९६ ॥ क्षराक्षरात्मिका सर्वलोकेशी विश्वधारिणी । त्रिवर्गदात्री

सुभगा त्र्यम्बका त्रिगुणात्मिका ॥ १९७ ॥ स्वर्गापवर्गदा शुद्धा जपापुष्पनिभाकृतिः । ओजोवती द्युतिधरा यज्ञरूपा प्रियव्रता ॥ १९८ ॥ दुराराध्या दुराधर्षा पाटलीकुसुमप्रिया । महती मेरुनिलया मन्दारकुसुमप्रिया ॥ १९९ ॥ वीराराध्या विराड्रूपा विरजा विश्वतोमुखी । प्रत्यग्रूपा पराकाशा प्राणदा प्राणरूपिणी ॥ २०० ॥ मार्तण्डभैरवाराध्या मन्त्रिणीन्यस्तराज्यधूः । त्रिपुरेशी जयत्सेना निस्त्रैगुण्या परापरा ॥ २०१ ॥ सत्यज्ञानानंदरूपा सामरस्यपरायणा । कपर्दिनी कलामाला कामधुक्कामरूपिणी ॥ २०२ ॥

इति ललितासहस्रनाम्नि अष्टमशतकं समाप्तम् ॥ ८ ॥

( ❀ दशमी बोधिनी कला । ❀ ) कलानिधिः काव्यकला रसज्ञा रसशेवधिः । पुष्टा पुरातना पूज्या पुष्करा पुष्करेक्षणा ॥ २०३ ॥ परंज्योतिः परंधाम परमाणुः परात्परा । पाशहस्ता पाशहन्त्री परमन्त्रविभेदिनी ॥ २०४ ॥ मूर्तामूर्ताऽनित्यतृप्ता मुनिमानसहंसिका । सत्यव्रता सत्यरूपा सर्वान्तर्यामिणी सती ॥ २०५ ॥ ब्रह्माणी ब्रह्मजननी बहुरूपा बुधार्चिता । प्रसवित्री प्रचण्डाऽऽज्ञा प्रतिष्ठा प्रकटाकृतिः ॥ २०६ ॥ प्राणेश्वरी प्राणदात्री पञ्चाशत्पीठरूपिणी । विशृङ्खला विविक्तस्था वीरमाता वियत्प्रसूः ॥ २०७ ॥ मुकुन्दा मुक्तिनिलया मूलविग्रहरूपिणी । भावज्ञा भवरोगघ्नी भवचक्रप्रवर्तिनी ॥ २०८ ॥ छन्दःसारा शास्त्रसारा मन्त्रसारा तलोदरी । उदारकीर्तिरुद्दामवैभवा वर्णरूपिणी ॥ २०९ ॥ जन्ममृत्युजरातप्तजनविश्रान्तिदायिनी । सर्वोपनिषदुद्घुष्टा शान्त्यतीता कलात्मिका ॥ २१० ॥ गम्भीरा गगनान्तःस्था गर्विता गानलोलुपा । कल्पनारहिता काष्ठाऽकान्ताकान्तार्धविग्रहा ॥ २११ ॥ कार्यकारणनिर्मुक्ता कामकेलितरङ्गिता । कनत्कनकताटङ्का लीलाविग्रह-

धारिणी ॥ २१२ ॥ अजा क्षयविनिर्मुक्ता मुग्धा क्षिप्रप्रसादिनी । अन्तर्मुखसमाराध्या बहिर्मुखसुदुर्लभा ॥ २१३ ॥ त्रयी त्रिवर्गनिलया त्रिस्था त्रिपुरमालिनी । निरामया निरालम्बा स्वात्मारामा सुधास्रुतिः ॥ २१४ ॥ संसारपङ्कनिर्मग्नसमुद्धरणपण्डिता । यज्ञप्रिया यज्ञकर्त्री यजमानस्वरूपिणी ॥ २१५ ॥ धर्माधारा धनाध्यक्षा धनधान्यविवर्धिनी । विप्रप्रिया विप्ररूपा विश्वभ्रमणकारिणी ॥ २१६ ॥ विश्वग्रासा विद्रुमाभा वैष्णवी विष्णुरूपिणी । अयोनिर्योनिनिलया कूटस्था कुलरूपिणी ॥ २१७ ॥

इति ललितासहस्रनाम्नि नवमशतकं समाप्तम् ॥ ९ ॥

( ❀ एकादशी धारिणी कला । ❀ ) वीरगोष्ठीप्रिया वीरा नैष्कर्म्या नादरूपिणी । विज्ञानकलना कल्या विदग्धा बैन्दवासना ॥ २१८ ॥ तत्त्वाधिका तत्त्वमयी तत्त्वमर्थस्वरूपिणी । सामगानप्रिया सौम्या सदाशिवकुटुम्बिनी ॥ २१९ ॥ सव्यापसव्यमार्गस्था सर्वापद्विनिवारिणी । स्वस्था स्वभावमधुरा धीरा धीरसमर्चिता ॥ २२० ॥ चैतन्यार्घ्यसमाराध्या चैतन्यकुसुमप्रिया । सदोदिता सदातुष्टा तरुणादित्यपाटला ॥ २२१ ॥ दक्षिणादक्षिणाराध्या दरस्मेरमुखाम्बुजा । कौलिनीकेवलाऽनर्घ्यकैवल्यपददायिनी ॥ २२२ ॥ स्तोत्रप्रिया स्तुतिमती श्रुतिसंस्तुतवैभवा । मनस्विनी मानवती महेशी मङ्गलाकृतिः ॥ २२३ ॥ विश्वमाता जगद्धात्री विशालाक्षी विरागिणी । प्रगल्भा परमोदारा परमोदा मनोमयी ॥ २२४ ॥ व्योमकेशी विमानस्था वज्रिणी वामकेश्वरी । पञ्चयज्ञप्रिया पञ्चप्रेतमञ्चाधिशायिनी ॥ २२५ ॥ पञ्चमी पञ्चभूतेशी पञ्चसंख्योपचारिणी । शाश्वती शाश्वतैश्वर्या शर्मदा शंभुमोहिनी ॥ २२६ ॥ धरा धरसुता धन्या धर्मिणी धर्मवर्धिनी । लोकातीता गुणातीता

सर्वातीता शमात्मिका ॥ २२७ ॥ बन्धूककुसुमप्रख्या बाला लीला-
विनोदिनी । सुमङ्गली सुखकरी सुवेषाढ्या सुवासिनी ॥ २२८ ॥
सुवासिन्यर्चनप्रीताऽऽशोभना शुद्धमानसा । बिन्दुतर्पणसंतुष्टा पूर्वजा
त्रिपुराम्बिका ॥ २२९ ॥ दशमुद्रासमाराध्या त्रिपुराश्रीव-
शंकरी । ज्ञानमुद्रा ज्ञानगम्या ज्ञानज्ञेयस्वरूपिणी ॥ २३० ॥ योनि-
मुद्रा त्रिखण्डेशी त्रिगुणाम्बा त्रिकोणगा । अनघाऽद्भुतचारित्रा
वाञ्छितार्थप्रदायिनी ॥ २३१ ॥ अभ्यासातिशयज्ञाता षडध्वातीत-
रूपिणी । अव्याजकरुणामूर्तिरज्ञानध्वान्तदीपिका ॥ २३२ ॥
आबालगोपविदिता सर्वानुल्लङ्घ्यशासना । श्रीचक्रराजनिलया
श्रीमत्त्रिपुरसुन्दरी ॥ २३३ ॥ श्रीशिवा शिवशक्त्यैक्यरूपिणी
ललिताम्बिका । श्रीमणिसध्रीविविधगुडदरान्देशैश्च पुष्टनादाभ्याम् ।
नामसु शतकारम्भा न स्तोभो नापि शब्दपुनरुक्तिः ॥ ३३ ॥
मतिवरदाकान्तादावकारयोगेन रक्तवर्णादौ । आकारस्य क्वचन तु
पदयोर्योगेन भेदयेन्नाम ॥ ३४ ॥ साध्वी तत्त्वमयीति द्वेधा त्रेधा
बुधो भिद्यात् । हंसवती चानर्घ्यैत्यर्धान्तादेकनामैव ॥ ३५ ॥ शक्ति-
र्निष्ठाधामज्योतिःपरपूर्वकं द्विपदम् । शोभनसुलभा सुगतिश्चिपदैक-
पदानि शेषाणि ॥ ३६ ॥ निधिरात्मा दम्भोलिः शेवधिरिति नाम
पुंलिङ्गम् । तद्ब्रह्मधाम साधुज्योतिः क्लीबेऽव्ययं स्वधा स्वाहा ॥ ३७ ॥

इति ललितासहस्रनाम्नि दशमशतकं समाप्तम् ॥ १० ॥

( ❀ क्षमाख्या द्वादशी कला । ❀ ) आविंशतितः सार्धान्नानाफल-
साधनत्वोक्तिः । तस्य क्रमशो विवृतिः षट्चत्वारिंशता श्लोकैः ॥३८॥
इत्येवं नामसाहस्रं कथितं ते घटोद्भव ॥ २३४ ॥ रहस्यानां रहस्यं
च ललिताप्रीतिदायकम् । अनेन सदृशं स्तोत्रं न भूतं न भविष्यति
॥ २३५ ॥ सर्वरोगप्रशमनं सर्वसंपत्प्रवर्धनम् । सर्वापमृत्युशमनं

कालमृत्युनिवारणम् ॥ २६६ ॥ सर्वज्वरार्तिशमनं दीर्घायुष्यप्रदायकम्। पुत्रप्रदमपुत्राणां पुरुषार्थप्रदायकम् ॥ २३७ ॥ इदं विशेषाच्छ्रीदेव्याः स्तोत्रं प्रीतिविधायकम्। जपेन्नित्यं प्रयत्नेन ललितोपास्तितत्परः ॥ २३८ ॥ प्रातः स्नात्वा विधानेन संध्याकर्म समाप्य च । पूजागृहं ततो गत्वा चक्रराजं समर्चयेत् ॥ २३९ ॥ विद्यां जपेत्सहस्रं वा त्रिशतं शतमेव वा। रहस्यनामसाहस्रमिदं पश्चात् पठेन्नरः ॥ २४० ॥ जन्ममध्ये सकृच्चापि य एवं पठते सुधीः। तस्य पुण्यफलं वक्ष्ये श‍ृणु त्वं कुम्भसंभव ॥ २४१ ॥ गङ्गादिसर्वतीर्थेषु यः स्नायात्कोटिजन्मसु । कोटिलिङ्गप्रतिष्ठां तु यः कुर्यादविमुक्तके ॥ २४२ ॥ कुरुक्षेत्रे तु यो दद्यात्कोटिवारं रविग्रहे। कोटिं सौवर्णभाराणां श्रोत्रियेषु द्विजन्मसु ॥ २४३ ॥ यः कोटिं हयमेधानामाहरेद्गाङ्गरोधसि। आचरेत्कूपकोटीर्यो निर्जले मरुभूतले ॥ २४४ ॥ दुर्भिक्षे यः प्रतिदिनं कोटिब्राह्मणभोजनम्। श्रद्धया परया कुर्यात्सहस्रपरिवत्सरान् ॥ २४५ ॥ तत्पुण्यं कोटिगुणितं लभेत्पुण्यमनुत्तमम् । रहस्यनामसाहस्रे नाम्नोऽप्येकस्य कीर्तनात् ॥ २४६ ॥ रहस्यनामसाहस्रे नामैकमपि यः पठेत् । तस्य पापानि नश्यन्ति महान्त्यपि न संशयः ॥ २४७ ॥ नित्यकर्माननुष्ठानान्निषिद्धकरणादपि । यत्पापं जायते पुंसां तत्सर्वं नश्यति द्रुतम् ॥ २४८ ॥ बहुनात्र किमुक्तेन श‍ृणु त्वं कलशीसुत। अत्रैकनाम्नो या शक्तिः पातकानां निवर्तने । तन्निवर्त्यमघं कर्तुं नालं लोकाश्चतुर्दश ॥ २४९ ॥ यस्त्यक्त्वा नामसाहस्रं पापहानिमभीप्सति । स हि शीतनिवृत्त्यर्थं हिमशैलं निषेवते ॥ २५० ॥ भक्तो यः कीर्तयन्नित्यमिदं नामसहस्रकम् । तस्मै श्रीललितादेवी प्रीताऽभीष्टं प्रयच्छति ॥ २५१ ॥ अकीर्तयन्निदं स्तोत्रं कथं भक्तो

भविष्यति ॥ २५२ ॥ नित्यं संकीर्तनाशक्तः कीर्तयेत्पुण्यवासरे । संक्रान्तौ विषुवे चैव स्वजन्मत्रितयेऽयने ॥ २५३ ॥ नवम्यां वा चतुर्दश्यां सितायां शुक्रवासरे । कीर्तयेन्नामसाहस्रं पौर्णमास्यां विशेषतः ॥ २५४ ॥ पौर्णमास्यां चन्द्रबिम्बे ध्यात्वा श्रीललिताम्बिकाम् । पञ्चोपचारैः संपूज्य पठेन्नामसहस्रकम् ॥ २५५ ॥ सर्वे रोगाः प्रणश्यन्ति दीर्घमायुश्च विन्दति । अयमायुष्करो नाम प्रयोगः कल्पनोदितः ॥ २५६ ॥ ज्वरार्तं शिरसि स्पृष्ट्वा पठेन्नामसहस्रकम् । तत्क्षणात्प्रशमं याति शिरस्तोदो ज्वरोऽपि च ॥ २५७ ॥ सर्वव्याधिनिवृत्त्यर्थं स्पृष्ट्वा भस्म जपेदिदम् । तद्भस्मधारणादेव नश्यन्ति व्याधयः क्षणात् ॥ २५८ ॥ जलं संमन्त्र्य कुम्भस्थं नामसाहस्रतो मुने । अभिषिञ्चेद्ग्रहग्रस्तान्ग्रहा नश्यन्ति तत्क्षणात् ॥ २५९ ॥ सुधासागरमध्यस्थां ध्यात्वा श्रीललिताम्बिकाम् । यः पठेन्नामसाहस्रं विषं तस्य विनश्यति ॥ २६० ॥ वन्ध्यानां पुत्रलाभाय नामसाहस्रमन्त्रितम् । नवनीतं प्रदद्यात्तु पुत्रलाभो भवेद्ध्रुवम् ॥ २६१ ॥ देव्याः पाशेन संबद्धामाकृष्टामङ्कुशेन च । ध्यात्वाऽभीष्टां स्त्रियं रात्रौ पठेन्नामसहस्रकम् ॥ २६२ ॥ आयाति स्वसमीपं सा यद्यप्यन्तःपुरं गता । राजाकर्षणकामश्चेद्राजावसथदिङ्मुखः ॥ २६३ ॥ त्रिरात्रं यः पठेदेतच्छ्रीदेवीध्यानतत्परः । स राजा पारवश्येन तुरङ्गं वा मतङ्गजम् ॥ २६४ ॥ आरुह्य याति निकटं दासवत्प्रणिपत्य च । तस्मै राज्यं च कोशं च दद्यादेव वशंगतः ॥ २६५ ॥ रहस्यनामसाहस्रं यः कीर्तयति नित्यशः । तन्मुखालोकमात्रेण मुह्येल्लोकत्रयं मुने ॥ २६६ ॥ यस्त्विदं नामसाहस्रं सकृत्पठति भक्तिमान् । तस्य ये शत्रवस्तेषां निहन्ता शरभेश्वरः ॥ २६७ ॥ यो वाऽभिचारं कुरुते नामसाहस्रपाठके । निवर्त्य तत्क्रियां हन्यात्तं वै प्रत्यङ्गिरा स्वयम्

॥ २६८ ॥ ये क्रूरदृष्ट्या वीक्षन्ते नामसाहस्रपाठकम् । तानन्धान् कुरुते क्षिप्रं स्वयं मार्तण्डभैरवः ॥ २६९ ॥ धनं यो हरते चोरैर्नामसाहस्रजापिनः । यत्र कुत्र स्थितं वापि क्षेत्रपालो निहन्ति तम् ॥ २७० ॥ विद्यासु कुरुते वादं यो विद्वान्नामजापिनः । तस्य वाक्स्तम्भनं सद्यः करोति नकुलीश्वरी ॥ २७१ ॥ यो राजा कुरुते वैरं नामसाहस्रजापिनः । चतुरङ्गबलं तस्य दण्डिनी संहरेत्स्वयम् ॥ २७२ ॥ यः पठेन्नामसाहस्रं षण्मासं भक्तिसंयुतः । लक्ष्मीश्चाञ्चल्यरहिता सदा तिष्ठति तद्गृहे ॥ २७३ ॥ मासमेकं प्रतिदिनं त्रिवारं यः पठेन्नरः । भारती तस्य जिह्वाग्रे रङ्गे नृत्यति नित्यशः ॥ २७४ ॥ यस्त्वेकवारं पठति पक्षमेकमतन्द्रितः । मुह्यन्ति कामवशगा मृगाक्ष्यस्तस्य वीक्षणात् ॥ २७५ ॥ यः पठेन्नामसाहस्रं जन्ममध्ये सकृन्नरः । तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वकिल्बिषैः ॥ २७६ ॥ यो वेत्ति नामसाहस्रं तस्मै देयं द्विजन्मने । अन्नं वस्त्रं धनं धान्यं नान्येभ्यस्तु कदाचन ॥ २७७ ॥ श्रीमन्त्रराजं यो वेत्ति श्रीचक्रं यः समर्चति । यः कीर्तयति नामानि तं सत्पात्रं विदुर्बुधाः ॥ २७८ ॥ तस्मै देयं प्रयत्नेन श्रीदेवीप्रीतिमिच्छता । यः कीर्तयति नामानि मन्त्रराजं न वेत्ति यः ॥ २७९ ॥ पशुतुल्यः स विज्ञेयस्तस्मै दत्तं निरर्थकम् । परीक्ष्य विद्याविदुषस्तेभ्यो दद्याद्विचक्षणः ॥ २८० ॥ श्रीमन्त्रराजसदृशो यथा मन्त्रो न विद्यते । देवता ललितातुल्या यथा नास्ति घटोद्भव ॥ २८१ ॥ रहस्यनामसाहस्रतुल्या नास्ति तथा स्तुतिः । लिखित्वा पुस्तके यस्तु नामसाहस्रमुत्तमम् ॥ २८२ ॥ समर्चयेत्सदा भक्त्या तस्य तुष्यति सुन्दरी । बहुनात्र किमुक्तेन शृणु त्वं कुम्भसंभव ॥ २८३ ॥ नानेन सदृशं स्तोत्रं सर्वतन्त्रेषु विद्यते । तस्मादुपासको नित्यं कीर्तयेदिदमादरात् ॥ २८४ ॥ एभिर्नामसहस्रैस्तु

श्रीचक्रं योऽर्चयेत्सकृत् । पद्मैर्वा तुलसीपुष्पैः कह्लारैर्वा कदम्बकैः ॥ २८५ ॥ चम्पकैर्जातिकुसुमैर्मल्लिकाकरवीरकैः । उत्पलैर्बिल्वपत्रैर्वा कुन्दकेसरपाटलैः ॥ २८६ ॥ अन्यैः सुगन्धिकुसुमैः केतकीमाधवीमुखैः । तस्य पुण्यफलं वक्तुं न शक्नोति महेश्वरः ॥ २८७ ॥ सा वेत्ति ललितादेवी स्वचक्रार्चनजं फलम् । अन्ये कथं विजानीयुर्ब्रह्माद्याः स्वल्पमेधसः ॥ २८८ ॥ प्रतिमासं पौर्णमास्यामेभिर्नामसहस्रकैः । रात्रौ यश्चक्रराजस्थामर्चयेत्परदेवताम् ॥ २८९ ॥ स एव ललितारूपस्तद्रूपा ललिता स्वयम् । न तयोर्विद्यते भेदो भेदकृत्पापकृद्भवेत् ॥ २९० ॥ महानवम्यां यो भक्तः श्रीदेवीं चक्रमध्यगाम् । अर्चयेन्नामसाहस्रैस्तस्य मुक्तिः करे स्थिता ॥ २९१ ॥ यस्तु नामसहस्रेण शुक्रवारे समर्चयेत् । चक्रराजे महादेवीं तस्य पुण्यफलं शृणु ॥ २९२ ॥ सर्वान्कामानवाप्येह सर्वसौभाग्यसंयुतः । पुत्रपौत्रादिसंयुक्तो भुक्त्वा भोगान्यथेप्सितान् ॥ २९३ ॥ अन्ते श्रीललितादेव्याः सायुज्यमतिदुर्लभम् । प्रार्थनीयं शिवाद्यैश्च प्राप्नोत्येव न संशयः ॥ २९४ ॥ यः सहस्रं ब्राह्मणानामेभिर्नामसहस्रकैः । समर्च्य भोजयेद्भक्त्या पायसापूपषड्रसैः ॥ २९५ ॥ तस्मै प्रीणाति ललिता स्वसाम्राज्यं प्रयच्छति । न तस्य दुर्लभं वस्तु त्रिषु लोकेषु विद्यते ॥ २९६ ॥ निष्कामः कीर्तयेद्यस्तु नामसाहस्रमुत्तमम् । ब्रह्मज्ञानमवाप्नोति येन मुच्येत बन्धनात् ॥ २९७ ॥ धनार्थी धनमाप्नोति यशोर्थी प्राप्नुयाद्यशः । विद्यार्थी चाप्नुयाद्विद्यां नामसाहस्रकीर्तनात् ॥ २९८ ॥ नानेन सदृशं स्तोत्रं भोगमोक्षप्रदं मुने । कीर्तनीयमिदं तस्माद्भोगमोक्षार्थिभिर्नरैः ॥ २९९ ॥ चतुराश्रमनिष्ठैश्च कीर्तनीयमिदं सदा । स्वधर्मसमनुष्ठानवैकल्यपरिपूर्तये ॥ ३०० ॥ कलौ पापैकबहुले धर्मानुष्ठानवर्जिते ।

नामानुकीर्तनं मुक्त्वा नृणां नान्यत्परायणम् ॥ ३०१ ॥ लौकिकाद्वचनान्मुख्यं विष्णुनामानुकीर्तनम् । विष्णुनामसहस्राच्च शिवनामैकमुत्तमम् ॥ ३०२ ॥ शिवनामसहस्राच्च देव्या नामैकमुत्तमम् । देवीनामसहस्राणि कोटिशः सन्ति कुम्भज ॥ ३०३ ॥ तेषु मुख्यं दशविधं नामसाहस्रमुच्यते । रहस्यनामसाहस्रमिदं शस्तं दशस्वपि ॥ ३०४ ॥ तस्मात्संकीर्तयेन्नित्यं कलिदोषनिवृत्तये । मुख्यं श्रीमातृनामेति न जानन्ति विमोहिताः ॥ ३०५ ॥ विष्णुनामपराः केचिच्छिवनामपराः परे । न कश्चिदपि लोकेषु ललितानामतत्परः ॥ ३०६ ॥ येनान्यदेवतानाम कीर्तितं जन्मकोटिषु । तस्यैव भवति श्रद्धा श्रीदेवीनामकीर्तने ॥ ३०७ ॥ चरमे जन्मनि यथा श्रीविद्योपासको भवेत् । नामसाहस्रपाठश्च तथा चरमजन्मनि ॥ ३०८ ॥ यथैव विरला लोके श्रीविद्याचारवेदिनः । तथैव विरलो गुह्यनामसाहस्रपाठकः ॥ ३०९ ॥ मन्त्रराजजपश्चैव चक्रराजार्चनं तथा । रहस्यनामपाठश्च नाल्पस्य तपसः फलम् ॥ ३१० ॥ अपठन्नामसाहस्रं प्रीणयेद्यो महेश्वरीम् । स चक्षुषा विना रूपं पश्येदेव विमूढधीः ॥ ३११ ॥ रहस्यनामसाहस्रं त्यक्त्वा यः सिद्धिकामुकः । स भोजनं विना नूनं क्षुन्निवृत्तिमभीप्सति ॥ ३१२ ॥ यो भक्तो ललितादेव्याः स नित्यं कीर्तयेदिदम् । नान्यथा प्रीयते देवी कल्पकोटिशतैरपि ॥ ३१३ ॥ तस्माद्रहस्यनामानि श्रीमातुः प्रयतः पठेत् । इति ते कथितं स्तोत्रं रहस्यं कुम्भसंभव ॥ ३१४ ॥ नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन । यथैव गोप्या श्रीविद्या तथा गोप्यमिदं मुने ॥ ३१५ ॥ पशुतुल्येषु न ब्रूयाज्जनेषु स्तोत्रमुत्तमम् । यो ददाति विमूढात्मा श्रीविद्यारहिताय तु ॥ ३१६ ॥ तस्मै कुप्यन्ति योगिन्यः सोऽनर्थः सुमहान्स्मृतः । रहस्यनामसाहस्रं

तस्मात्संगोपयेदिदम् ॥ ३१७ ॥ स्वतन्त्रेण मया नोक्तं तवापि कलशीभव । ललिताप्रेरणादेव मयोक्तं स्तोत्रमुत्तमम् ॥ ३१८ ॥ कीर्तनीयमिदं भक्त्या कुम्भयोने निरन्तरम् । तेन तुष्टा महादेवी तवाभीष्टं प्रदास्यति ॥ ३१९ ॥ सूत उवाच ॥ इत्युक्त्वा श्रीहयग्रीवो ध्यात्वा श्रीललिताम्बिकाम् । आनन्दमग्नहृदयः सद्यः पुलकितोऽभवत् ॥ ३२० ॥ इति श्रीब्रह्माण्डपुराणे ललितोपाख्याने हयग्रीवागस्त्यसंवादे ललितासहस्रनामस्तोत्रं संपूर्णम् ॥

## २४७. श्रीशाकम्भरीस्तवः[1] ।

श्रीगणेशाय नमः ॥ प्रातः स्मरामि तव शंकरि वक्त्रपद्मं कांतालकं मधुरमंदहसं प्रसन्नम् । काश्मीरदर्पमृगनाभिलसल्ललाटं लोकत्रयाभयदचारुविलोचनाढ्यम् ॥ १ ॥ प्रातर्भजामि तव शंकरि हस्तवृंदं माणिक्यहेमवलयादिविभूषणाढ्यम् । घंटात्रिशूलकरवालसुपुस्तखेटपात्रोत्तमांगडमरूल्लसितं मनोज्ञम् ॥ २ ॥ प्रातर्नमामि तव शंकरि पादपद्मं पद्मोद्भवादिसुमनोगणसेव्यमानम् । मंजुक्वणत्कनकनूपुरराजमानं नंदारुवृंदसुरवीरुधमार्यहृद्यम् ॥ ३ ॥ प्रातः स्तुवे च तव शंकरि दिव्यमूर्तिं कादंबकाननगतां करुणारसार्द्राम् । कल्याणधाम नवनीरदनीलभासां पंचास्ययानलसितां परमार्तिहंत्रीम् ॥ ४ ॥ प्रातर्वदामि तव शंकरि दिव्यनाम शाकंभरीति ललितेति शतेक्षणेति । दुर्गेति दुर्गमहासुरनाशिनीति श्रीमंगलेति कमलेति महेश्वरीति ॥ ५ ॥ यः श्लोकपंचकमिदं पठति प्रभाते शाकंभरीप्रियकरं दुरितौघनाशम् । तस्मै ददाति शिवदा वनशंकरी सा विद्यां प्रजां श्रियमुदारमतिं सुकीर्तिम् ॥ ६ ॥ इति श्रीशाकंभरीप्रातःस्मरणस्तवः संपूर्णः ॥

---

१ स्तोत्रमिदं क्वचित् 'श्रीवनशंकरीस्तव' इति नाम्नापि लभ्यते ।

## २४८. भगवत्यष्टकम् ।

श्रीगणेशाय नमः ॥ नमोऽस्तु ते सरस्वति त्रिशूलचक्रधारिणि सितांबरावृते शुभे मृगेंद्रपीठसंस्थिते। सुवर्णबंधुराधरे सुझल्लरीशिरोरुहे सुवर्णपद्मभूषिते नमोऽस्तु ते महेश्वरि ॥ १ ॥ पितामहादिभिर्नुते स्वकांतिलुसचंद्रभे सरत्नमालया वृते भवाब्धिकष्टहारिणि । तमालहस्तमंडिते तमालभालशोभिते गिरामगोचरे इले नमोऽस्तु० ॥ २ ॥ स्वभक्तवत्सलेऽनघे सदापवर्गभोगदे दरिद्रदुःखहारिणि त्रिलोकशंकरीश्वरि । भवानि भीमअम्बिके प्रचंडतेजउज्ज्वले भुजाकलापमंडिते नमोऽस्तु० ॥ ३ ॥ प्रपन्नभीतिनाशिके प्रसूनमाल्यकंधरे धियस्तमोनिवारिके विशुद्धबुद्धिकारिके । सुरार्चितांघ्रिपंकजे प्रचंडविक्रमेऽक्षरे विशालपद्मलोचने नमोऽस्तु० ॥ ४ ॥ हतस्त्वया स दैत्यधूम्रलोचनो यदा रणे तदा प्रसूनवृष्टयस्त्रिविष्टपे सुरैः कृताः । निरीक्ष्य तत्र ते प्रभामलज्जत प्रभाकरस्त्वयि दयाकरे ध्रुवे नमोऽस्तु० ॥ ५ ॥ ननाद केसरी यदा चचाल मेदिनी तदा जगाम दैत्यनायकः स्वसेनया द्रुतं भिया । सकोपकंपदच्छदे सचंडमुंडघातिके मृगेंद्रनादनादिते नमोऽस्तु० ॥ ६ ॥ कुचंदनार्चितालके सितोष्णवारणाधरे सवर्करानने वरे निशुंभशुंभमर्दिके । प्रसीद चंडिके अजे समस्तदोषघातिके शुभामतिप्रदेऽचले नमोऽस्तु० ॥ ७ ॥ त्वमेव विश्वधारिणी त्वमेव विश्वकारिणी त्वमेव सर्वहारिणी न गम्यसेऽजितात्मभिः । दिवौकसां हिते रता करोषि दैत्यनाशनं शताक्षि रक्तदंतिके नमोऽस्तु० ॥ ८ ॥ पठंति ये समाहिता इमं स्तवं सदा नरा अनन्यभक्तिसंयुताः अहर्मुखेऽनुवासरम् । भवंति ते तु पंडिताः सुपुत्रधान्यसंयुताः कलत्रभूतिसंयुता व्रजंति चामृतं सुखम् ॥ ९ ॥ इति श्रीमद्रामदासपूज्यपादशिष्यश्रीमद्धंसदासशिष्येणामरदासकविना विरचितं भगवत्यष्टकं समाप्तम् ॥

## २४९. संकष्टनाशनं सङ्कटाष्टकम् ।

श्रीगणेशाय नमः ॥ ॐनारद उवाच ॥ जैगीषव्य मुनिश्रेष्ठ सर्वज्ञ सुखदायक । आख्यातानि सुपुण्यानि श्रुतानि त्वत्प्रसादतः ॥ १ ॥ न तृप्तिमधिगच्छामि तव वागमृतेन च । वदस्वैकं महाभाग संकटाख्यानमुत्तमम् ॥ २ ॥ इति तस्य वचः श्रुत्वा जैगीषव्योऽब्रवीत्ततः । संकष्टनाशनं स्तोत्रं शृणु देवर्षिसत्तम ॥ ३ ॥ द्वापरे तु पुरा वृत्ते भ्रष्टराज्यो युधिष्ठिरः । भ्रातृभिः सहितो राज्यनिर्वेदं परमं गतः ॥ ४ ॥ तदानीं तु ततः काशीं पुरीं यातो महामुनिः । मार्कंडेय इति ख्यातः सह शिष्यैर्महायशाः ॥ ५ ॥ तं दृष्ट्वा स समुत्थाय प्रणिपत्य सुपूजितः । किमर्थं म्लानवदन एतत्त्वं मां निवेदय ॥ ६ ॥ युधिष्ठिर उवाच ॥ संकष्टं मे महत्प्राप्तमेतादृग्वदनं ततः । एतन्निवारणोपायं किंचिद्ब्रूहि मुने मम ॥ ७ ॥ मार्कंडेय उवाच ॥ आनंदकानने देवी संकटा नाम विश्रुता । वीरेश्वरोत्तरे भागे पूर्वं चन्द्रेश्वरस्य च ॥ ८ ॥ शृणु नामाष्टकं तस्याः सर्वसिद्धिकरं नृणाम् । संकटा प्रथमं नाम द्वितीयं विजया तथा ॥ ९ ॥ तृतीयं कामदा प्रोक्तं चतुर्थं दुःखहारिणी । शर्वाणी पंचमं नाम षष्ठं कात्यायनी तथा ॥ १० ॥ सप्तमं भीमनयना सर्वरोगहराऽष्टमम् । नामाष्टकमिदं पुण्यं त्रिसंध्यं श्रद्धयान्वितः ॥ ११ ॥ यः पठेत्पाठयेद्वापि नरो मुच्येत संकटात् । इत्युक्त्वा तु द्विजश्रेष्ठमृषिर्वाराणसीं ययौ ॥ १२ ॥ इति तस्य वचः श्रुत्वा नारदो हर्षनिर्भरः । ततः संपूजितां देवीं वीरेश्वरसमन्विताम् ॥ १३ ॥ भुजैस्तु दशभिर्युक्तां लोचनत्रयभूषिताम् । मालाकमंडलुयुतां पद्मशंखगदायुताम् ॥ १४ ॥ त्रिशूलडमरुधरां खड्गचर्मविभूषि-

ताम् । वरदाभयहस्तां तां प्रणम्य विधिनंदनः ॥ १५ ॥ वारत्रयं गृहीत्वा तु ततो विष्णुपुरं ययौ । एतत्स्तोत्रस्य पठनं पुत्रपौत्र-विवर्धनम् ॥ १६ ॥ संकष्टनाशनं चैव त्रिषु लोकेषु विश्रुतम् । गोपनीयं प्रयत्नेन महावंध्याप्रसूतिकृत् ॥ १७ ॥ इति श्रीपद्मपुराणे संकष्टनाशनं सङ्कटाष्टकं संपूर्णम् ॥

## २५०. श्रीकुञ्जिकास्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीकुञ्जिकास्तोत्रमंत्रस्य सदाशिव ऋषिः, अनुष्टुप् छंदः, श्रीत्रिगुणात्मिका देवता, ॐ ऐं बीजम्, ॐ ह्रीं शक्तिः, ॐ क्लीं कीलकम्, मम सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः ॥ शिव उवाच ॥ शृणु देवि प्रवक्ष्यामि कुञ्जिकास्तोत्र-मुत्तमम् । येन मंत्रप्रभावेण चण्डीजापः शुभो भवेत् ॥ १ ॥ न कवचं नार्गलास्तोत्रं कीलकं न रहस्यकम् । न सूक्तं नापि वा ध्यानं न न्यासो न वार्चनम् ॥ २ ॥ कुञ्जिकापाठमात्रेण दुर्गा-पाठफलं लभेत् । अतिगुह्यतरं देवि देवानामपि दुर्लभम् ॥ ३ ॥ गोपनीयं प्रयत्नेन स्वयोनिरिव पार्वति । मारणं मोहनं वश्यं स्तम्भ-नोच्चाटनादिकम् ॥ ४ ॥ पाठमात्रेण संसिद्ध्येत् कुञ्जिकास्तोत्रमुत्त-मम् । ॐ श्रूँ श्रूँ श्रूँ शं फट्ट ऐं ह्रीं क्लीं ज्वल उज्ज्वल प्रज्वल ह्रीं ह्रीं क्लीं स्रावय स्रावय शापं नाशय नाशय श्रीं श्रीं श्रीं जूं सः स्रावय आदय स्वाहा ॥ ५ ॥ ॐ श्लीं हूँ क्लीं ग्लां जूं सः ज्वल उज्ज्वल मन्त्रं प्रज्वल हं सं लं क्षं फट्ट स्वाहा ॥ ६ ॥ नमस्ते रुद्ररूपायै नमस्ते मधुमर्दिनि ॥ नमस्ते कैटभनाशिन्यै नमस्ते महिषार्दिनि ॥ नमस्ते शुम्भहन्त्र्यै च निशुम्भासुरसूदिनि ॥ ७ ॥ नमस्ते जाग्रते देवि जपे सिद्धिं कुरुष्व मे ॥ ऐंकारी

सृष्टिरूपिण्यै ह्रींकारी प्रतिपालिका ॥ ८ ॥ क्लीं काली काल-
रूपिण्यै बीजरूपे नमोऽस्तु ते ॥ चामुण्डा चण्डरूपा च यैंकारी
वरदायिनी ॥ ९ ॥ विच्चे त्वभयदा नित्यं नमस्ते मन्त्ररूपिणि ॥ धां
धीं धूं धूर्जटेः पत्नी वां वीं वागीश्वरी तथा ॥ १० ॥ क्रां क्रीं क्रूं
कुञ्जिका देवि श्रां श्रीं श्रूं मे शुभं कुरु ॥ हूं हूं हूंकाररूपिण्यै ज्रां
ज्रीं ज्रूं भालनादिनी ॥ ११ ॥ भ्रां भ्रीं भ्रूं भैरवी भद्रे भवान्यै ते नमो
नमः ॥ ॐ अं कं चं टं तं पं सां विदुरां विदुरां विमर्दय विमर्दय
ह्रीं क्षां क्षीं स्त्रीं जीवय जीवय त्रोटय त्रोटय जंभय जंभय दीपय
दीपय मोचय मोचय हूं फट् ज्रां वौषट् ऐं ह्रीं क्लीं रंजय रंजय
संजय संजय गुंजय गुंजय बंधय बंधय भ्रां भ्रीं भ्रूं भैरवी भद्रे
संकुच संकुच त्रोटय त्रोटय म्लीं स्वाहा ॥ १२ ॥ पां पीं पूं पार्वती
पूर्णा खां खीं खूं खेचरी तथा ॥ म्लां म्लीं म्लूं मूलविस्तीर्णा
कुञ्जिकास्तोत्रहेतवे ॥ अभक्ताय न दातव्यं गोपितं रक्ष पार्वति ॥
विहीना कुञ्जिकादेव्या यस्तु सप्तशतीं पठेत् ॥ न तस्य जायते
सिद्धिर्ह्यरण्ये रुदितं यथा ॥ १३ ॥ इति श्रीडामरतन्त्रे ईश्वरपार्वती-
संवादे कुञ्जिकास्तोत्रं संपूर्णम् ॥

## २५१. लघुसप्तशतीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ यत्कर्म धर्मनिलयं प्रवदन्ति तज्ज्ञा यज्ञादिकं
तदखिलं सकलं त्वयैव । त्वां चेतनायत इति प्रविचार्य चित्ते नित्यं
त्वदीयचरणौ शरणं प्रपद्ये ॥ १ ॥ पाथोधिनाथतनयापतिरेव शेष-
पर्यंकलालितवपुः पुरुषः पुराणः । त्वन्मोहपाशविवशो जगदंब
सोऽपि व्याघूर्णमाननयनः शयनं चकार ॥ २ ॥ तत्कौतुकं जननि
यस्य जनार्दनस्य कर्णप्रसूतमलजौ मधुकैटभाख्यौ । तस्यापि यौ न
भवतः सुलभौ विहंतुं त्वन्मायया कवलितौ विलयं गतौ तौ ॥ ३ ॥

यन्माहिषं वपुरपूर्वबलोपपन्नं यन्नाकनायकपराक्रमजित्वरं च। यल्लोक-शोकजननप्रतिबद्धहार्दं तल्लीलयैव दलितं गिरिजे भवत्या ॥ ४ ॥ यो धूम्रलोचन इति प्रथितः पृथिव्यां भस्मीबभूव समरे तव हुंकृतेन। सर्वासुरक्षयकरे गिरिराजकन्ये मन्ये स्वमन्युदहने कृत एष होमः ॥ ५ ॥ केषामपि त्रिदशनायकपूर्वकाणां जेतुं न जातु सुलभाविति चंडमुंडौ। तौ दुर्मदौ तु परमांबरतुल्यरूपे मातस्तवासि कुलिशात्पतितौ विशीर्णौ ॥ ६ ॥ दौत्येन ते शिव इति प्रथितप्रभावो देवोऽपि दानवपतेः सदनं जगाम। भूयोऽपि तस्य चरितं प्रथयांचकार सा त्वं प्रतीति शिवदूतिविजृंभितं तत् ॥ ७ ॥ चित्रं तदेतदमरैरपि ये न पेयाः शस्त्राभिघातपतिताद्रुधिरादपर्णे। भूमौ बभूवुरमिताः प्रतिरक्तबीजास्तेऽपि त्वयैव गगने गिलिताः समस्ताः ॥ ८ ॥ आश्चर्यमेतदखिलं यदभूः सुरारिस्त्रैलोक्यवैभवविलुंठनजुष्टपाणी। शस्त्रैर्निहत्य भुवि शुंभनिशुंभसंज्ञौ नीतौ त्वया जननि तावपि नाकलोकम् ॥ ९ ॥ त्वत्तेजसि प्रलयकालहुताशनेऽस्मिन्नस्तं प्रयांति भुवनान्यखिलानि सद्यः। तस्मिन्निपत्य शलभा इव दानवेंद्रा भस्मीभवंति हि भवानि किमत्र चित्रम् ॥ १० ॥ किं वर्णयामि भवतीं भवति प्रतापसंवर्धनप्रणयिनी प्रणमज्जनेषु। तत्किं पृणामि भवतीं भवति प्रतापसंवर्धनि प्रणयिनीं विपदास्थितेषु ॥ ११ ॥ वामे करे तदितरे च तथोपरिष्टात् पात्रं सुधारसयुतं वरमातुलिंगम्। खेटं गदां च दधतीं भवतीं भवानीं ध्यायंति येऽरुणनिभां कृतिनस्त एव ॥ १२ ॥ यद्वारुणात्परमिदं जगदंब यस्ते बीजं स्मरेदनुदिनं मदनादिरूढम्। मायांकितं तिलकितं तरुणेन्दुबिन्दु नादैरतींद्रमिह राज्यमसौ भुनक्ति ॥ १३ ॥ आवाहनं यजनवर्णनमग्निहोत्रं कर्मार्पणं तव विसर्जनमत्र देवि। मोहान्मया

## २५४. भ्रमरांबाष्टकम् ।

श्रीगणेशाय नमः ॥ चांचल्यारुणलोचनाञ्चितकृपाचंद्रार्कचूडामणिं चारुस्मेरमुखां चराचरजगत्संरक्षणीं तत्पदाम् । चञ्चच्चम्पकनासिकाग्रविलसन्मुक्तामणीरञ्जितां श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ १ ॥ कस्तूरीतिलकाञ्चितेन्दुविलसत्प्रोद्भासिभालस्थलीं कर्पूरद्रवमिश्रचूर्णखदिरामोदोल्लसद्वीटिकाम् । लोलापाङ्गतरङ्गितैरधिकृपासारैर्नतानन्दिनीं श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ २ ॥ राजन्मत्तमरालमन्दगमनां राजीवपत्रेक्षणां राजीवप्रभवादिदेवमुकुटै राजत्पदाम्भोरुहाम् । राजीवायतमन्दमण्डितकुचां राजाधिराजेश्वरीं श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ३ ॥ षट्तारां गणदीपिकां शिवसतीं षड्वैरिवर्गापहां षट्चक्रान्तरसंस्थितां वरसुधां षड्योगिनीवेष्टिताम् । षट्चक्राञ्चितपादुकाञ्चितपदां षड्भावगां षोडशीं श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ४ ॥ श्रीनाथादृतपालितत्रिभुवनां श्रीचक्रसंसारिणीं ज्ञानासक्तमनोजयौवनलसद्गन्धर्वकन्यादृताम् । दीनानामतिवेलभाग्यजननीं दिव्यांबरालंकृतां श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ५ ॥ लावण्याधिकभूषितांगतिलकां लाक्षालसद्रागिणीं सेवायातसमस्तदेववनितां सीमंतभूषान्विताम् । भावोल्लासवशीकृतप्रियतमां भण्डासुरच्छेदिनीं श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ६ ॥ धन्यां सोमविभावनीयचरितां धाराधरश्यामलां मुन्याराधनमेधिनीं सुमवतां मुक्तिप्रदानव्रताम् । कन्यापूजनसुप्रसन्नहृदयां काञ्चीलसन्मध्यमां श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ७ ॥ कर्पूरागरुकुंकुमांकितकुचां कर्पूरवर्णस्थितां कृष्टोत्कृष्टसुकृष्टकर्मदहनां कामेश्वरीं

कामिनीम् । कामाक्षीं करुणारसार्द्रहृदयां कल्पांतरस्थायिनीं श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ८ ॥ गायत्रीं गरुडध्वजां गगनगां गान्धर्वगानप्रियां गम्भीरां गजगामिनीं गिरिसुतां गन्धाक्षतालंकृताम् । गङ्गागौतमगर्गसंनुतपदां गां गौतमीं गोमतीं श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥ ९ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ भ्रमरांबाष्टकं संपूर्णम् ॥

## २५'१. तांत्रिकं देवीसूक्तम् ।

श्रीगणेशाय नमः ॥ नमो देव्यै महादेव्यै शिवायै सततं नमः । नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ १ ॥ रौद्रायै नमो नित्यायै गौर्यै धात्र्यै नमो नमः । ज्योत्स्नायै चेंदुरूपिण्यै सुखायै सततं नमः ॥ २ ॥ कल्याण्यै प्रणतां वृद्ध्यै सिद्ध्यै कुर्मो नमो नमः । नैर्ऋत्यै भूभृतां लक्ष्म्यै शर्वाण्यै ते नमो नमः ॥ ३ ॥ दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै । ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः ॥ ४ ॥ अतिसौम्यातिरौद्रायै नतास्तस्यै नमो नमः । नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ॥ ५ ॥ या देवी सर्वभूतेषु विष्णुमायेति शब्दिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ६ ॥ या देवी सर्वभूतेषु चेतनेत्यभिधीयते । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ७ ॥ या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ८ ॥ या देवी सर्वभूतेषु निद्रारूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ९ ॥ या देवी सर्वभूतेषु क्षुधारूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १० ॥ या देवी सर्वभूतेषु छायारूपेण संस्थिता ।

नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ११ ॥ या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १२ ॥ या देवी सर्वभूतेषु तृष्णारूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १३ ॥ या देवी सर्वभूतेषु क्षांतिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १४ ॥ या देवी सर्वभूतेषु जातिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १५ ॥ या देवी सर्वभूतेषु लज्जारूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १६ ॥ या देवी सर्वभूतेषु शांतिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १७ ॥ या देवी सर्वभूतेषु श्रद्धारूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १८ ॥ या देवी सर्वभूतेषु कांतिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १९ ॥ या देवी सर्वभूतेषु लक्ष्मीरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २० ॥ या देवी सर्वभूतेषु वृत्तिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २१ ॥ या देवी सर्वभूतेषु स्मृतिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २२ ॥ या देवी सर्वभूतेषु दयारूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २३ ॥ या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २४ ॥ या देवी सर्वभूतेषु मातृरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २५ ॥ या देवी सर्वभूतेषु भ्रांतिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥२६॥ इंद्रियाणामधिष्ठात्री भूतानां चाखिलेषु या । भूतेषु सततं तस्यै व्याप्त्यै देव्यै नमो नमः ॥ २७ ॥ चितिरूपेण या कृत्स्नमेतद्व्याप्य

स्थिता जगत् । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २८ ॥
स्तुता सुरैः पूर्वमभीष्टसंश्रयात्तथा सुरेंद्रेण दिनेषु सेविता । करोतु
सा नः शुभहेतुरीश्वरी शुभानि भद्राण्यभिहंतु चापदः ॥ २९ ॥
या सांप्रतं चोद्धतदैत्यतापितैरस्माभिरीशा च सुरैर्नमस्यते । या च
स्मृता तत्क्षणमेव हंति नः सर्वापदो भक्तिविनम्रमूर्तिभिः ॥ ३० ॥
इति तान्त्रिकं देवीसूक्तं संपूर्णम् ॥

## २५६. प्राधानिकरहस्यम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीसप्तशतीरहस्यत्रयस्य ब्रह्मविष्णुरुद्रा ऋषयः, महाकालीमहालक्ष्मीमहासरस्वत्यो देवताः, अनुष्टुप् छंदः, नवदुर्गामहालक्ष्मीर्बीजं, श्रीं शक्तिः, ममाभीष्टफलसिद्ध्ये जपे विनियोगः ॥ राजोवाच ॥ भगवन्नवतारा मे चंडिकायास्त्वयोदिताः ॥ एतेषां प्रकृतिं ब्रह्मन् प्रधानं वक्तुमर्हसि ॥ १ ॥ आराध्यं यन्मया देव्याः स्वरूपं येन वै द्विज ॥ विधिना ब्रूहि सकलं यथावत्प्रणतस्य मे ॥ २ ॥ ऋषिरुवाच ॥ इदं रहस्यं परममनाख्येयं प्रचक्षते ॥ भक्तोऽसीति न मे किंचित्तवावाच्यं नराधिप ॥ ३ ॥ सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी ॥ लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता ॥ ४ ॥ मातुलिंगं गदां खेटं पानपात्रं च बिभ्रती ॥ नागं लिंगं च योनिं च बिभ्रती नृप मूर्धनि ॥ ५ ॥ तप्तकांचनवर्णाभा तप्तकांचनभूषणा ॥ शून्यं तदखिलं स्वेन पूरयामास तेजसा ॥ ६ ॥ शून्यं तदखिलं लोकं विलोक्य परमेश्वरी ॥ बभार रूपमपरं तमसा केवलेन हि ॥ ७ ॥ सा भिन्नांजनसंकाशा दंष्ट्रांचितवरानना ॥ विशाललोचना नारी बभूव तनुमध्यमा ॥ ८ ॥ खड्गपात्रशिरःखेटैरलंकृतचतुर्भुजा ॥ कबंधहारं शिरसा बिभ्राणा हि शिरःस्रजम् ॥ ९ ॥ तां प्रोवाच महालक्ष्मीस्तामसीं प्रमदोत्तमाम् ॥ ददामि तव नामानि यानि कर्माणि

तानि ते ॥ १० ॥ महामाया महाकाली महामारी क्षुधा तृषा। निद्रा तृष्णा चैकवीरा कालरात्रिर्दुरत्यया ॥ ११ ॥ इमानि तव नामानि प्रतिपाद्यानि कर्मभिः। एभिः कर्माणि ते ज्ञात्वा योऽधीते सोऽश्नुते सुखम् ॥ १२ ॥ तामित्युक्त्वा महालक्ष्मीः स्वरूपमपरं नृप ॥ सत्त्वाख्येनातिशुद्धेन गुणेनेंदुप्रभं दधौ ॥ १३ ॥ अक्षमालांकुशधरा वीणापुस्तकधारिणी ॥ सा बभूव वरा नारी नामान्यस्यै च सा ददौ ॥ १४॥ महाविद्या महावाणी भारती वाक् सरस्वती ॥ आर्या ब्राह्मी कामधेनुर्वेदगर्भा सुरेश्वरी ॥ १५ ॥ अथोवाच महालक्ष्मीर्महाकालीं सरस्वतीम् ॥ युवां जनयतां देव्यौ मिथुने स्वानुरूपतः ॥ १६ ॥ इत्युक्त्वा ते महालक्ष्मीः ससर्ज मिथुनं स्वयम् ॥ हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनौ ॥ १७ ॥ ब्रह्मन्विधे विरिंचेति धातरित्याह तं नरम् ॥ श्रीः पद्मे कमले लक्ष्मीत्याह माता स्त्रियं च ताम् ॥ १८ ॥ महाकाली भारती च मिथुने सृजतः सह ॥ एतयोरपि रूपाणि नामानि च वदामि ते ॥ १९ ॥ नीलकंठं रक्तबाहुं श्वेतांगं चंद्रशेखरम् ॥ जनयामास पुरुषं महाकाली सितां स्त्रियम् ॥ २० ॥ स रुद्रः शंकरः स्थाणुः कपर्दी च त्रिलोचनः ॥ त्रयीविद्याकामधेनुः सा स्त्री भाषास्वराक्षरा ॥ २१ ॥ सरस्वती स्त्रियं गौरीं कृष्णं च पुरुषं नृप ॥ जनयामास नामानि तयोरपि वदामि ते ॥ २२ ॥ विष्णुः कृष्णो हृषीकेशो वासुदेवो जनार्दनः ॥ उमा गौरी सती चंडी सुंदरी सुभगा शुभा ॥ २३ ॥ एवं युवतयः सद्यः पुरुषत्वं प्रपेदिरे ॥ चक्षुष्मंतो नु पश्यंति नेतरे तद्विदो जनाः ॥२४॥ ब्रह्मणे प्रददौ पत्नीं महालक्ष्मीर्नृप त्रयीम् ॥ रुद्राय गौरीं वरदां वासुदेवाय च श्रियम् ॥ २५ ॥ स्वरया सह संभूय विरिंचोऽण्डमजीजनत् ॥ बिभेद भगवान् रुद्रस्तद्गौर्या सह वीर्यवान् ॥ २६ ॥ अंडमध्ये प्रधानादि कार्यजातमभून्नृप ॥ महाभूतात्मकं सर्वं जगत्स्थावर-

जंगमम् ॥२७॥ पुपोष पालयामास तल्लक्ष्म्या सह केशवः ॥ महालक्ष्मी-रेवमजा राजन् सर्वेश्वरेश्वरी ॥ २८ ॥ निराकारा च साकारा सैव नाना-भिधानभृत् ॥ नामांतरैर्निरूप्यैषा नाम्ना नान्येन केनचित् ॥ २९ ॥ इति श्रीमार्कंडेयपुराणे प्राधानिकं रहस्यं संपूर्णम् ॥

## २५७. वैकृतिकं रहस्यम् ।

श्रीगणेशाय नमः ॥ ऋषिरुवाच ॥ त्रिगुणा तामसी देवी सात्त्विकी या त्वयोदिता ॥ सा शर्वा चंडिका दुर्गा भद्रा भगवतीर्यते ॥ १ ॥ योगनिद्रा हरेरुक्ता महाकाली तमोगुणा ॥ मधुकैटभनाशार्थं यां तुष्टावांबुजासनः ॥ २ ॥ दशवक्त्रा दशभुजा दशपादांजनप्रभा ॥ विशालया राजमाना त्रिंशल्लोचनमालया ॥ ३ ॥ स्फुरद्दशनदंष्ट्रा सा भीमरूपापि भूमिप ॥ रूपसौभाग्यकांतीनां सा प्रतिष्ठां महाश्रियाम् ॥ ४ ॥ खड्गबाणगदाशूलशंखचक्रभुशुंडिभृत् ॥ परिघं कार्मुकं शीर्षं निश्च्योतद्रुधिरं दधौ ॥ ५ ॥ एषा सा वैष्णवी माया महाकाली दुरत्यया ॥ आराधिता वशीकुर्यात्पूजाकर्तुश्चराचरम् ॥ ६ ॥ सर्वदेवशरीरेभ्यो याविर्भूताऽमितप्रभा ॥ त्रिगुणा सा महालक्ष्मीः साक्षान्महिषमर्दिनी ॥ ७ ॥ श्वेतानना नीलभुजा सुश्वेतस्तनमंडला ॥ रक्तमध्या रक्तपादा रक्तजंघोरुरुन्मदा ॥ ८ ॥ सुचित्रजघना चित्रमाल्यांबरविभूषणा ॥ चित्रानुलेपना कांतिरूपसौभाग्यशालिनी ॥ ९ ॥ अष्टादशभुजा पूज्या सा सहस्रभुजा सती ॥ आयुधान्यत्र वक्ष्यंते दक्षिणाधःकरक्रमात् ॥ १० ॥ अक्षमाला च कमलं बाणोऽसिः कुलिशं गदा ॥ चक्रं त्रिशूलं परशुः शंखो घंटा च पाशकः ॥ ११ ॥ शक्तिर्दंडश्चर्म चापं पानपात्रं कमंडलुः ॥ अलंकृतभुजामेभिरायुधैः कमलासनाम् ॥ १२ ॥ सर्वदेवमयीमीशां महालक्ष्मीमिमां नृप ॥ पूजयेत्सर्वलोकानां स देवानां प्रभु-

र्भवेत् ॥१३॥ गौरीदेहात्समुद्भूता या सत्त्वैकगुणाश्रया ॥ साक्षात्सरस्वती प्रोक्ता शुंभासुरनिबर्हिणी ॥ १४ ॥ दधौ चाष्टभुजा बाणान्मुसलं शूलचक्रभृत् ॥ शंखं घंटां लांगलं च कार्मुकं वसुधाधिप ॥ १५ ॥ एषा संपूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति ॥ निशुंभमथिनी देवी शुंभासुरनिबर्हिणी ॥१६॥ इत्युक्तानि स्वरूपाणि मूर्तीनां तव पार्थिव ॥ उपासनं जगन्मातुः पृथगासां निशामय ॥ १७ ॥ महालक्ष्मीर्यदा पूज्या महाकाली सरस्वती ॥ दक्षिणोत्तरयोः पूज्ये पृष्ठतो मिथुनत्रयम् ॥ १८ ॥ विरंचिः स्वरया मध्ये रुद्रो गौर्या च दक्षिणे ॥ वामे लक्ष्म्या हृषीकेशः पुरतो देवतात्रयम् ॥ १९ ॥ अष्टादशभुजा मध्ये वामे चास्या दशानना ॥ दक्षिणेऽष्टभुजा लक्ष्मीर्महतीति समर्चयेत् ॥ २० ॥ अष्टादशभुजा चैषा यदा पूज्या नराधिप ॥ दशानना चाष्टभुजा दक्षिणोत्तरयोस्तदा ॥ २१ ॥ कालमृत्यू च संपूज्यौ सर्वारिष्टप्रशांतये ॥ यदा चाष्टभुजा पूज्या शुंभासुरनिबर्हिणी ॥ २२ ॥ नवास्याः शक्तयः पूज्यास्तदा रुद्रविनायकौ ॥ नमो देव्या इति स्तोत्रैर्महालक्ष्मीं समर्चयेत् ॥ २३ ॥ अवतारत्रयार्चायां स्तोत्रमंत्रास्तदाश्रयाः ॥ अष्टादशभुजा चैषा पूज्या महिषमर्दिनी ॥ २४ ॥ महालक्ष्मीर्महाकाली सैव प्रोक्ता सरस्वती ॥ ईश्वरी पुण्यपापानां सर्वलोकमहेश्वरी ॥ २५ ॥ महिषांतकरी येन पूजिता स जगत्प्रभुः ॥ पूजयेज्जगतां धात्रीं चंडिकां भक्तवत्सलाम् ॥ २६ ॥ अर्घादिभिरलंकारैर्गंधपुष्पैस्तथोत्तमैः ॥ धूपैर्दीपैश्च नैवेद्यैर्नानाभक्ष्यसमन्वितैः ॥ २७ ॥ रुधिराक्तेन बलिना मांसेन सुरया नृप ॥ प्रणामाचमनीयेन चंदनेन सुगंधिना ॥ २८ ॥ सकर्पूरैश्च तांबूलैर्भक्तिभावसमन्वितैः ॥ वामभागेऽग्रतो देव्याश्छिन्नशीर्षं महासुरम् ॥ २९ ॥ पूजयेन्महिषं येन प्राप्तं सायुज्यमीशया ॥ दक्षिणे पुरतः सिंहं समग्रं धर्ममीश्वरम् ॥ ३० ॥

वाहनं पूजयेद्देव्या धृतं येन चराचरम् ॥ ततः कृतांजलिर्भूत्वा स्तुवीत चरितैरिमैः ॥ ३१ ॥ एकेन वा मध्यमेन नैकेनेतरयोरिह ॥ चरितार्धं तु न जपेज्जपञ्छिद्रमवाप्नुयात् ॥ ३२ ॥ स्तोत्रमंत्रैः स्तुवीतेमां यदि वा जगदंबिकाम् ॥ प्रदक्षिणानमस्कारान्कृत्वा मूर्ध्नि कृतांजलिः ॥३३॥ क्षमापयेज्जगद्धात्रीं मुहुर्मुहुरतंद्रितः ॥ प्रतिश्लोकं च जुहुयात्पायसं तिलसर्पिषा ॥ ३४ ॥ जुहुयात्स्तोत्रमंत्रैर्वा चंडिकायै शुभं हविः ॥ नमोनमःपदैर्देवीं पूजयेत्सुसमाहितः ॥ ३५ ॥ प्रयतः प्रांजलिः प्रह्वः प्राणानारोप्य चात्मनि ॥ सुचिरं भावयेद्देवीं चंडिकां तन्मयो भवेत् ॥ ३६ ॥ एवं यः पूजयेद्भक्त्या प्रत्यहं परमेश्वरीम् ॥ भुक्त्वा भोगान् यथाकामं देवीसायुज्यमाप्नुयात् ॥ ३७ ॥ यो न पूजयते नित्यं चंडिकां भक्तवत्सलाम् ॥ भस्मीकृत्यास्य पुण्यानि निर्दहेत्परमेश्वरी ॥ ३८ ॥ तस्मात्पूजय भूपाल सर्वलोकमहेश्वरीम् ॥ यथोक्तेन विधानेन चंडिकां सुखमाप्स्यसि ॥ ३९ ॥ इति श्रीमार्कंडेयपुराणे वैकृतिकं रहस्यं संपूर्णम् ॥

## २५८. मूर्तिरहस्यम् ।

श्रीगणेशाय नमः ॥ ऋषिरुवाच ॥ नंदा भगवती नाम या भविष्यति नंदजा ॥ सा स्तुता पूजिता भक्त्या वशीकुर्याज्जगत्त्रयम् ॥ १ ॥ कनकोत्तमकांतिः सा सुकांतिः कनकांबरा ॥ देवी कनकवर्णाभा कनकोत्तमभूषणा ॥ २ ॥ कमलांकुशपाशाब्जैरलंकृतचतुर्भुजा ॥ इंदिरा कमला लक्ष्मीः सा श्री रुक्मांबुजासना ॥ ३ ॥ या रक्तदंतिका नाम देवी प्रोक्ता मयानघ ॥ तस्याः स्वरूपं वक्ष्यामि शृणु सर्वभयापहम् ॥ ४ ॥ रक्तांबरा रक्तवर्णा रक्तसर्वांगभूषणा ॥ रक्तायुधा रक्तनेत्रा रक्तकेशातिभीषणा ॥ ५ ॥ रक्ततीक्ष्णनखा रक्तरसना रक्तदंष्ट्रिका ॥ पतिं नारीवानुरक्ता देवी भक्तं भजेज्जनम् ॥ ६ ॥ वसुधेव विशाला

सा सुमेरुयुगलस्तनी ॥ दीर्घौ लंबावतिस्थूलौ तावतीव मनोहरौ ॥७॥
कर्कशावतिकांतौ तौ सर्वानंदपयोनिधी ॥ भक्तान्संपाययेद्देवी सर्व-
कामदुघौ स्तनौ ॥ ८ ॥ खङ्गपात्रं च मुसलं लांगलं च बिभर्ति सा ॥
आख्याता रक्तचामुंडा देवी योगेश्वरीति च ॥ ९ ॥ अनया व्याप्तम-
खिलं जगत्स्थावरजंगमम् ॥ इमां यः पूजयेद्भक्त्या स व्याप्नोति चरा-
चरम् ॥ १० ॥ अधीते य इमं नित्यं रक्तदंत्या वपुःस्तवम् ॥ तं सा
परिचरेद्देवी पतिं प्रियमिवांगना ॥ ११ ॥ शाकंभरी नीलवर्णा नीलो-
त्पलविलोचना ॥ गंभीरनाभिस्त्रिवलीविभूषिततनूदरी ॥ १२ ॥
सुकर्कशसमोत्तुंगवृत्तपीनघनस्तनी ॥ मुष्टिं शिलीमुखैः पूर्णं कमलं
कमलालया ॥ १३ ॥ पुष्पपल्लवमूलादिफलाढ्यं शाकसंचयम् ॥
काम्यानंतरसैर्युक्तं क्षुत्तृण्मृत्युजरापहम् ॥ १४ ॥ कार्मुकं च स्फुर-
त्कांति बिभर्ति परमेश्वरी ॥ शाकंभरी शताक्षी सा सैव दुर्गा
प्रकीर्तिता ॥ १५ ॥ शाकंभरीं स्तुवन्ध्यायन् जपन्संपूजयन्नमन् ॥
अक्षय्यमश्नुते शीघ्रमन्नपानादि सर्वशः ॥ १६ ॥ भीमापि नीलवर्णा
सा दंष्ट्रादशनभासुरा ॥ विशाललोचना नारी वृत्तपीनघनस्तनी ॥१७॥
चंद्रहासं च डमरुं शिरःपात्रं च बिभ्रती ॥ एकवीरा कालरात्रिः
सैवोक्ता कामदा स्तुता ॥ १८ ॥ तेजोमंडलदुर्धर्षा भ्रामरी चित्र-
कांतिभृत् ॥ चित्रभ्रमरसंकाशा महामारीति गीयते ॥ १९ ॥ इत्येता
मूर्तयो देव्या व्याख्याता वसुधाधिप ॥ जगन्मातुश्चंडिकायाः कीर्तिताः
कामधेनवः ॥ २० ॥ इदं रहस्यं परमं न वाच्यं यस्य कस्यचित् ॥
व्याख्यानं दिव्यमूर्तीनामधीष्वावहितः स्वयम् ॥ २१ ॥ देव्या ध्यानं
तवाख्यातं गुह्याद्गुह्यतरं महत् ॥ तस्मात्सर्वप्रयत्नेन सर्वकामफलप्रदम्
॥ २२ ॥ इति श्रीमार्कंडेयपुराणे खिलांशे मूर्तिरहस्यं संपूर्णम् ॥

## २५९. भगवतीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नमामि त्वां मातर्द्रविणरहितोऽहं तव सुतो जगद्वन्द्यां स्वर्गे भुवि बलिगृहे चापि विदिताम् । पृथिव्यां कल्याणी मम भयहरा त्वं न च परा यतोऽहं यातस्त्वां भवगतभयात्सांप्रतमुमे ॥ १ ॥ प्रसीदेशे नित्यं भगवति भवाम्भोधितरणे शरण्ये नास्त्यन्या विपदघहरा कापि जगति । जडो मूर्खोऽहं ते जननि नहि जाने विलसितमतोऽहं संयातस्तव पदपयोजे गिरिसुते ॥ २ ॥ अहो संसारेऽस्मिन् जननि तव तुल्या नहि परा खलं दुष्टं पुत्रं जगति जननी रक्षति निजम् । परित्यक्त्वेदानीं सकलसुरवृन्दं गिरिसुते नमामि त्वां देवीं भवभयहरां मङ्गलकराम् ॥ ३ ॥ जगन्मातर्दुर्गे भवभयविभङ्गैकनिपुणे मया संसारेऽस्मिन् तव चरणपूजाऽपि न कृता । न पुष्पाणां हारस्तव शिरसि शुभ्रोऽर्पित इति क्षमस्वागो मातर्मम बहुविधं शैलतनये ॥ ४ ॥ धनाद्धीनं दीनं परिजनविहीनं बहुशुचं तथा शत्रुग्रस्तं विविधभययुक्तं जडमतिम् । भवत्याः संयातं निकटमयि भूमीधरसुते समाश्वस्तं दृष्ट्या कुरु जगति कीर्त्या च विदितम् ॥ ५ ॥ त्वमेका संसारे जनिमदघनाशे प्रभुरहो त्वमेवैका मातर्भवभयलयाधाननिपुणा । तवाशा मे शश्वज्जननि निजदुःखैकदलने विहाय त्वां मातः कमिह ननु संयामि शरणम् ॥६॥ तथा पूर्वे काले प्रबलतरवीर्यौ दितिसुतौ प्रसिद्धौ सोदर्यौ भुविदिविगतौ भीषणतरौ । निशुम्भः शुम्भश्च प्रविततमहामोहगहनौ विनष्टौ त्वां प्राप्यामरवरनुते शम्भुदयिते ॥ ७ ॥ सुरास्त्वां संयाता हरिहरनुतां दैत्यदलिताः सुराणां रक्षार्थे असुरकुलनाशं कृतवती । अहो मूर्तिर्धन्या सकलसुरसंसेव्यचरणा त्वमेवैका मातर्जगति बहुरूपा विजयसे ॥ ८ ॥ भगवत्या इदं स्तोत्रं योगानन्देन निर्मितम् । यः पठेद्भक्तिभावेन फलमिष्टं लभेत सः ॥ ९ ॥ इति भगवतीस्तोत्रं संपूर्णम् ॥

## २६०. देव्यष्टकम्।

श्रीगणेशाय नमः॥ महादेवीं महाशक्तिं भवानीं भववल्लभाम्। भवार्तिभञ्जनकरीं वन्दे त्वां लोकमातरम्॥ १॥ भक्तप्रियां भक्तिगम्यां भक्तानां कीर्तिवर्धिकाम्। भवप्रियां सतीं देवीं वन्दे त्वां भक्तवत्सलाम्॥ २॥ अन्नपूर्णां सदापूर्णां पार्वतीं पर्वपूजिताम्। महेश्वरीं वृषारूढां वंदे त्वां परमेश्वरीम्॥ ३॥ कालरात्रिं महारात्रिं मोहरात्रिं जनेश्वरीम्। शिवकान्तां शम्भुशक्तिं वंदे त्वां जननीमुमाम्॥ ४॥ जगत्कर्त्रीं जगद्धात्रीं जगत्संहारकारिणीम्। मुनिभिः संस्तुतां भद्रां वंदे त्वां मोक्षदायिनीम्॥ ५॥ देवदुःखहरामंबां सदा देवसहायकाम्। मुनिदेवैः सदासेव्यां वंदे त्वां देवपूजिताम्॥ ६॥ त्रिनेत्रां शंकरीं गौरीं भोगमोक्षप्रदां शिवाम्। महामायां जगद्बीजां वंदे त्वां जगदीश्वरीम्॥ ७॥ शरणागतजीवानां सर्वदुःखविनाशिनीम्। सुखसंपत्करीं नित्यां वंदे त्वां प्रकृतिं पराम्॥ ८॥ शरणागतजीवानां सर्वदुःखविनाशिनीम्। सुखसंपत्करां नित्यां वंदे त्वां प्रकृतिं पराम् ॥ ९॥ देव्यष्टकमिदं पुण्यं योगानन्देन निर्मितम्। यः पठेद्भक्तिभावेन लभते स परं सुखम्॥ १०॥ इति देव्यष्टकं संपूर्णम्॥

## २६१. देवीस्तोत्रम्।

श्रीगणेशाय नमः॥ नमस्तेऽस्तु दुर्गे सदानन्दरूपे सुरैः स्तूयमाने मुनीनां सुपूज्ये। नमस्ते जगद्वन्द्यपादारविन्दे नमस्ते भवाम्भोधिसंतारदक्षे॥ १॥ नमस्ते नमस्ते सदा दैवतेज्ये तथा दीनदुःखे दयाक्रान्तचित्ते। नमस्ते महादेवमान्ये भवानि सुदीनं स्वदासं जनं पाहि शश्वत्॥ २॥ नमस्ते जगद्व्यापिके विश्वरूपे सदा योगिगम्ये स्वभक्त्यैकलभ्ये। रमाशारदाशम्भुकान्तास्वरूपे नमस्ते महाकालिके शुद्धरूपे॥ ३॥ नमस्तेऽम्बिके भक्तसंसेव्यपादे नमस्तेऽघवि-

ध्वंसिके सर्वशक्ते । जगत्कानने क्रोधकामादिहिंस्रैः परीतोऽस्मि मातः सदा रक्ष रक्ष ॥ ४ ॥ नमस्ते जगद्बीजरूपे महेशि स्वभक्तेषु रक्ते शरण्ये त्रिनेत्रे । त्वदन्या न चास्ते विपन्नाशकारी सुसंपत्प्रदां त्वां सदा संनतोऽस्मि ॥ ५ ॥ अहं देवि याचे पदाम्भोजसेवां भवत्यास्तथा भक्तिभावं भवेऽद्य । प्रसीदाम्ब दासे सदा शैलपुत्रि शिवां शङ्करीं पार्वतीं त्वां भजामि ॥ ६ ॥ त्वदन्यो न मान्यो न चान्यश्च गण्यस्त्वमेकाऽसि मातर्जगज्जालहेतुः । जगन्नाशिका पालिका च त्वमेव गिरेर्बालिकां कालिकां संनतोऽहम् ॥ ७ ॥ श्रियं शारदां शम्भुशक्तिं महेशीं त्रिनेत्रीं च दुर्गां तथा कालरात्रिम् । तुषाराद्रिपुत्रीं जगद्दुःखहन्त्रीं स्मरन् दुःखनाशो भवेन्मानवानाम् ॥ ८ ॥ इदं स्तोत्रं महादेव्या योगानन्देन निर्मितम् । यः पठेत्प्रातरुत्थाय स नरो वाञ्छितं लभेत् ॥ ९ ॥ इति योगानन्दप्रणीतं देवीस्तोत्रं संपूर्णम् ॥

## २६२. कल्याणवृष्टिस्तवः ।

श्रीगणेशाय नमः ॥ कल्याणवृष्टिभिरिवामृतपूरिताभिर्लक्ष्मीस्वयंवरणमङ्गलदीपिकाभिः । सेवाभिरम्ब तव पादसरोजमूले नाकारि किं मनसि भाग्यवतां जनानाम् ॥ १ ॥ एतावदेव जननि स्पृहणीयमास्ते त्वद्वन्दनेषु सलिलस्थगिते च नेत्रे । सांनिध्यमुद्यदरुणायुतसोदरस्य त्वद्विग्रहस्य परया सुधयाप्लुतस्य ॥ २ ॥ ईशत्वनामकलुषाः कति वा न सन्ति ब्रह्मादयः प्रतिभवं प्रलयाभिभूताः । एकः स एव जननि स्थिरसिद्धिरास्ते यः पादयोस्तव सकृत्प्रणतिं करोति ॥ ३ ॥ लब्ध्वा सकृत्त्रिपुरसुन्दरि तावकीनं कारुण्यकन्दलितकान्तिभरं कटाक्षम् । कन्दर्पकोटिसुभगास्त्वयि भक्तिभाजः संमोहयन्ति तरुणीर्भुवनत्रयेऽपि ॥ ४ ॥ ह्रींकारमेव तव नाम

गृणन्ति वेदा मातस्त्रिकोणनिलये त्रिपुरे त्रिनेत्रे। त्वत्संस्मृतौ यम-
भटाभिभवं विहाय दीव्यन्ति नन्दनवने सह लोकपालैः ॥ ५ ॥
हन्तुः पुरामधिगलं परिपीयमानः क्रूरः कथं न भविता गरलस्य
वेगः । नाश्वासनाय यदि मातरिदं तवार्धं देवस्य शश्वदमृताप्लुत-
शीतलस्य ॥ ६ ॥ सर्वज्ञतां सदसि वाक्पटुतां प्रसूते देवि त्वदङ्घ्रि-
सरसीरुहयोः प्रणामः । किं च स्फुरन्मुकुटमुज्ज्वलमातपत्रं द्वे चामरे
च महतीं वसुधां ददाति ॥ ७ ॥ कल्पद्रुमैरभिमतप्रतिपादनेषु
कारुण्यवारिधिभिरम्ब भवत्कटाक्षैः । आलोकय त्रिपुरसुन्दरि माम-
नाथं त्वय्येव भक्तिभरितं त्वयि बद्धतृष्णम् ॥ ८ ॥ हन्तेतरेष्वपि
मनांसि निधाय चान्ये भक्तिं वहन्ति किल पामरदैवतेषु । त्वामेव
देवि मनसा समनुस्मरामि त्वामेव नौमि शरणं जननि त्वमेव ॥ ९ ॥
लक्ष्येषु सत्स्वपि कटाक्षनिरीक्षणानामालोकय त्रिपुरसुन्दरि मां
कदाचित् । नूनं मया तु सदृशः करुणैकपात्रं जातो जनिष्यति
जनो न च जायते वा ॥ १० ॥ ह्रीं ह्रामिति प्रतिदिनं जपतां
तवाख्यां किं नाम दुर्लभमिह त्रिपुराधिवासे । मालाकिरीटमद-
वारणमाननीया तान्सेवते वसुमती स्वयमेव लक्ष्मीः ॥ ११ ॥
संपत्कराणि सकलेन्द्रियनन्दनानि साम्राज्यदाननिरतानि सरोरु-
हाक्षि । त्वद्वन्दनानि दुरिताहरणोद्यतानि मामेव मातरनिशं
कलयन्तु नान्यम् ॥ १२ ॥ कल्पोपसंहृतिषु कल्पिततांडवस्य
देवस्य खण्डपरशोः परभैरवस्य । पाशाङ्कुशैक्षवशरासनपुष्पबाणा
सा साक्षिणी विजयते तव मूर्तिरेका ॥ १३ ॥ लग्नं सदा भवतु
मातरिदं तवार्धं तेजः परं बहुलकुङ्कुमपङ्कशोणम् । भास्वत्किरीट-
ममृतांशुकलावतंसं मध्ये त्रिकोणनिलयं परमामृतार्द्रम् ॥ १४ ॥

ह्रींकारमेव तव नाम तदेव रूपं त्वन्नाम दुर्लभमिह त्रिपुरे गृणन्ति। त्वत्तेजसा परिणतं वियदादिभूतं सौख्यं तनोति सरसीरुहसंभवादेः ॥ १५ ॥ ह्रींकारत्रयसंपुटेन महता मन्त्रेण संदीपितं स्तोत्रं यः प्रतिवासरं तव पुरो मातर्जपेन्मन्त्रवित्। तस्य क्षोणिभुजो भवन्ति वशगा लक्ष्मीश्चिरस्थायिनी वाणी निर्मलसूक्तिभारभरिता जागर्ति दीर्घं वयः ॥ १६ ॥ इति श्रीमच्छंकराचार्यकृतः कल्याणवृष्टिस्तवः संपूर्णः ॥

## २६३. नामरत्ननवरत्नमालिका।

श्रीगणेशाय नमः ॥ हारनूपुरकिरीटकुण्डलविभूषितावयवशोभिनीं कारणेशवरमौलिकोटिपरिकल्प्यमानपदपीठिकाम्। कालकालफणिपाशबाणधनुरंकुशामरुणमेखलां फालभूतिलकलोचनां मनसि भावयामि परदेवताम् ॥ १ ॥ गन्धसारघनसारचारुनवनागवल्लिरसवासिनीं सान्ध्यरागमधुराधराभरणसुन्दराननशुचिस्मिताम्। मन्थरायतविलोचनाममलबालचंद्रकृतशेखरीमिन्दिरारमणसोदरीं मनसि भावयामि परदेवताम् ॥ २ ॥ स्मेरचारुमुखमंडलां विमलगण्डलम्बिमणिमण्डलां हारदामपरिशोभमानकुचभारभीरुतनुमध्यमाम्। वीरगर्वहरनूपुरां विविधकारणेशवरपीठिकां मारवैरिसहचारिणीं मनसि भावयामि परदेवताम् ॥ ३ ॥ भूरिभारधरकुण्डलीन्द्रमणिबद्धभूवलयपीठिकां वारिराशिमणिमेखलावलयवह्निमण्डलशरीरिणीम्। वारिसारवहकुण्डलां गगनशेखरीं च परमात्मिकां चारुचन्द्ररविलोचनां मनसि भावयामि परदेवताम् ॥ ४ ॥ कुण्डलत्रिविधकोष्ठमण्डलविहारषड्दलसमुल्लसत्पुण्डरीकमुखभेदिनीं च प्रचण्डभानुभासमुज्ज्वलाम्। मण्डलेन्दुपरिवाहितामृततरङ्गिणीमरुणरूपिणीं मण्डलान्तमणिदीपिकां मनसि भावयामि

परदेवताम् ॥ ५ ॥ वारणाननमयूरवाहमुखदाहवारणपयोधरां चारणादिसुरसुन्दरीचिकुरशेखरीकृतपदाम्बुजाम् । कारणाधिपतिचम्पकप्रकृतिकारणप्रथममातृकां वारणान्तमुखपारणां मनसि भावयामि परदेवताम् ॥ ६ ॥ पद्मकान्तिपदपाणिपल्लवपयोधराननसरोरुहां पद्मरागमणिमेखलावलयनीविशोभितनितंबिनीम् । पद्मसंभवसदाशिवान्तमयपञ्चरत्नपदपीठिकां पद्मिनीं प्रणवरूपिणीं मनसि भावयामि परदेवताम् ॥ ७ ॥ आगमप्रणवपीठिकाममलवर्णमङ्गलशरीरिणीमागमावयवशोभिनीमखिलवेदसारकृतशेखरीम् । मूलमन्त्रमुखमण्डलां मुदितनादबिन्दुनवयौवनां मातृकां त्रिपुरसुन्दरीं मनसि भावयामि परदेवताम् ॥ ८ ॥ कालिकां तिमिरकुन्तलान्तघनभृङ्गमङ्गलविराजिनीं चूलिकाशिखरमालिकावलयमल्लिकासुरभिसौरभाम् । बालिकामधुरगण्डमण्डलमनोहराननसरोरुहां कालिकामखिलनायिकां मनसि भावयामि परदेवताम् ॥ ९ ॥ नित्यमेव नियमेन जल्पतां भुक्तिमुक्तिफलदामभीष्टदाम् । शंकरेण रचितां सदा जपेन्नामरत्नवरत्नमालिकाम् ॥ १० ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ नामरत्नवरत्नमालिका संपूर्णा ॥

## २६४. मीनाक्षीपंचरत्नस्तोत्रम् ।

श्रीगणेशाय नमः ॥ उद्यद्भानुसहस्रकोटिसदृशां केयूरहारोज्ज्वलां बिम्बोष्ठीं स्मितदन्तपङ्क्तिरुचिरां पीताम्बरालंकृताम् । विष्णुब्रह्मसुरेन्द्रसेवितपदां तत्त्वस्वरूपां शिवां मीनाक्षीं प्रणतोऽस्मि संततमहं कारुण्यवारांनिधिम् ॥ १ ॥ मुक्ताहारलसत्किरीटरुचिरां पूर्णेन्दुवक्त्रप्रभां शिञ्जन्नूपुरकिङ्किणीमणिधरां पद्मप्रभाभासुराम् । सर्वाभीष्टफलप्रदां गिरिसुतां वाणीरमासेवितां मीनाक्षीं प्रणतोऽस्मि संततमहं कारुण्यवारांनिधिम् ॥ २ ॥ श्रीविद्यां शिववामभागनिलयां

ह्रींकारमन्त्रोज्ज्वलां श्रीचक्राङ्कितबिन्दुमध्यवसतिं श्रीमत्सभानायकीम् । श्रीमत्षण्मुखविघ्नराजजननीं श्रीमज्जगन्मोहिनीं मीनाक्षीं प्रणतोऽस्मि संततमहं कारुण्यवारांनिधिम् ॥ ३ ॥ श्रीमत्सुन्दरनायकीं भयहरां ज्ञानप्रदां निर्मलां श्यामाभां कमलासनार्चितपदां नारायणस्यानुजाम् । वीणावेणुमृदङ्गवाद्यरसिकां नानाविधाडम्बिकां मीनाक्षीं प्रणतोऽस्मि संततमहं कारुण्यवारांनिधिम् ॥ ४ ॥ नानायोगिमुनीन्द्रहृन्निवसतीं नानार्थसिद्धिप्रदां नानापुष्पविराजिताङ्घ्रियुगलां नारायणेनार्चिताम् । नादब्रह्ममयीं परात्परतरां नानार्थतत्त्वात्मिकां मीनाक्षीं प्रणतोऽस्मि संततमहं कारुण्यवारांनिधिम् ॥ ५ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ मीनाक्षीपंचरत्नं संपूर्णम् ॥

## २६५. मीनाक्षीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीविद्ये शिववामभागनिलये श्रीराजराजार्चिते श्रीनाथादिगुरुस्वरूपविभवे चिन्तामणीपीठिके । श्रीवाणीगिरिजानुताङ्घ्रिकमले श्रीशाम्भवि श्रीशिवे मध्याह्ने मलयध्वजाधिपसुते मां पाहि मीनाम्बिके ॥ १ ॥ चक्रस्थेऽचपले चराचरजगन्नाथे जगत्पूजिते आर्तालीवरदे नताभयकरे वक्षोजभारान्विते । विद्ये वेदकलापमौलिविदिते विद्युल्लताविग्रहे मातः पूर्णसुधारसार्द्रहृदये मां पाहि मीनाम्बिके ॥ २ ॥ कोटीराङ्गदरत्नकुण्डलधरे कोदण्डबाणाञ्चिते कोकाकारकुचद्वयोपरिलसत्प्रालम्बहाराञ्चिते । शिञ्जन्नूपुरपादसारसमणीश्रीपादुकालंकृते मद्दारिद्र्यभुजङ्गगारुडखगे मां पाहि मीनाम्बिके ॥ ३ ॥ ब्रह्मेशाच्युतगीयमानचरिते प्रेतासनान्तःस्थिते पाशोदङ्कुशचापबाणकलिते बालेन्दुचूडाञ्चिते । बाले बालकुरङ्गलोलनयने

बालार्ककोट्युज्ज्वले मुद्राराधितदैवते मुनिसुते मां पाहि मीनाम्बिके ॥ ४ ॥ गन्धर्वामरयक्षपन्नगनुते गङ्गाधरालिङ्गिते गायत्रीगरुडासने कमलजे सुश्यामले सुस्थिते । खातीते खलदारुपावकशिखे खद्योतकोट्युज्ज्वले मन्त्राराधितदैवते मुनिसुते मां पाहि मीनाम्बिके ॥ ५ ॥ नादे नारदतुम्बुराद्यविनुते नादान्तनादात्मिके नित्ये नीललतात्मिके निरुपमे नीवारशूकोपमे । कान्ते कामकले कदम्बनिलये कामेश्वराङ्कस्थिते मद्विद्ये मदभीष्टकल्पलतिके मां पाहि मीनाम्बिके ॥ ६ ॥ वीणानादनिमीलितार्धनयने विस्रस्तचूलीभरे ताम्बूलारुणपल्लवाधरयुते ताटङ्कहारान्विते । श्यामे चन्द्रकलावतंसकलिते कस्तूरिकाफालिके पूर्णे पूर्णकलाभिरामवदने मां पाहि मीनाम्बिके ॥ ७ ॥ शब्दब्रह्ममयी चराचरमयी ज्योतिर्मयी वाङ्मयी नित्यानंदमयी निरञ्जनमयी तत्त्वंमयी चिन्मयी । तत्त्वातीतमयी परात्परमयी मायामयी श्रीमयी सर्वैश्वर्यमयी सदाशिवमयी मां पाहि मीनाम्बिके ॥ ८ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ मीनाक्षीस्तोत्रं संपूर्णम् ॥

## २६६. देवीशतकम् ।

श्रीगणेशाय नमः ॥ अनन्तमहिमव्याप्तविश्वां वेधा न वेद याम् । या च मातेव भजते प्रणते मानवे दयाम् ॥ १ ॥ नतापनीतक्लेशायाः सुरारिजनतापनी । न तापनी तनुर्यस्यास्तुल्या नादीनतापनी ॥ २ ॥ वक्त्रपद्मा विधेर्भान्ति यया सर्गलयो दया । या साक्षाद्या च जनितस्थितिसर्गलयोदया ॥ ३ ॥ याश्रिता पावनतया यातनाच्छिदनीचया । याचनीया धिया मायायामायासं स्तुता श्रिया ॥ ४ ॥ तमांसि ध्वंसमायान्ति यस्याः स्तुत्यादरेण वः । तस्याः सिद्ध्यै धियं मातुः कल्पन्तां पादरेणवः ॥ ५ ॥ ऋषीणां

सादयामास या तमांसि त्रयीमयी । पायाद्वः सा दयामाधिच्छिदं जगति बिभ्रती ॥ ६ ॥ स्मरद्विषा या ययाचे यया चेयं विधेः क्रिया। यां चाच्युतोऽपि तुष्टाव तुष्टा वः साऽस्तु पार्वती ॥ ७ ॥ या दमावनयागेन स्वाराधा नयसारया । हरिकैतवहास्याय सायामा विजिता यया ॥ ८ ॥ यायताजिविमाया सा यस्या हा बत कैरिह । या रसायनधारा स्वा न गेयानवमा दया ॥ ९ ॥ सा बुद्धि-रुत्तमालोकः सतामर्या पुनातु वः । यद्भक्तेरुत्तमा लोकः प्राप्नोत्येष विशुद्धताम् ॥ १० ॥ अयुद्ध साधुत्राणाय सामरा या सहारिणा । खड्गेन दीप्रा देवानां सामरायासहारिणा ॥ ११ ॥ चरणाघात-निहतकासरा च रणाजिरे । रराज या नयजयैरराजसजनानता ॥ १२ ॥ सावताद्वोऽम्बिकाऽभ्यर्च्यनामा न न यशोभितः । तनोति प्रणतो यस्या ना माननयशोभितः ॥ १३ ॥ संयतं याचमानेन यस्याः प्रापि द्विषा वधः । संयतं या च मानेन युनक्ति प्रणतं जनम् ॥ १४ ॥ या दमानवमानन्दपदमाननमानदा । दानमानक्षमानित्यधनमानव-मानिता ॥ १५ ॥ सा रक्षतादपारा ते रसकृद्गौरबाधिका । सारक्ष-तादपारातेरसकृद्गौरवाधिका ॥ १६ ॥ अनुत्तमोहराशयो भवन्ति यामनाश्रिताः । अनुत्तमो हराशयो यया चिरं च रञ्जितः ॥ १७ ॥ अनन्तरागतापायास्तारयित्री भवापदः । अनन्तरागतापायाः सा वो गौरी ह्रियात्क्रियाः ॥ १८ ॥ यामयासजिदासक्तशोकजालस्य पातिनी । या माता सर्वदा भक्तलोकजालस्य पालनी ॥ १९ ॥ सामरागमनायासं त्यक्त्वा सार्धं सुरारिभिः । सामरा गमनायास-न्नुद्यता युधि यद्गणाः ॥ २० ॥ सामोदयाजया शातैः शस्त्रैः शत्रौ हते यया । सामोदया जयाशा तैर्गीर्वाणैर्गर्वतो जहे ॥ २१ ॥ ययायायाय्यया यूयं यो योऽयं येययैय याम् । ययुयायिययेयाय

ययेऽयायाय याययुक् ॥ २२ ॥ साऽव्याद्गौरी सदा युष्मान्सदायु-ष्मान्स्मृच्यति । शरणं यां नरो गच्छन्न रोगच्छन्दमेति च ॥ २३ ॥ कृतास्पदा यया संपदघानि सुरवैरिपु । हन्ति या वाङ्मयी दूराद-घानि सुरवैरिपुः ॥ २४ ॥ जितानया या नताजितारसाततसारता । न सावना नावसानयातनारिरिना तया ॥ २५ ॥ मनोभवारातिम-नोभिरामया जरामयापाकरणैकदक्षया । मदक्षयान्निर्मलतां ददानया सदा नयास्था क्रियतां तवार्यया ॥ २६ ॥ समाययाविन्द्रहिताय या रणे समायया या न जितारिसेनया । स मा ययाचे हरमाश्रितः स्फुटं समा यया मुग्धतया मनोज्ञताः ॥ २७ ॥ सा भावक्षालवर्या नुतविभवितनुर्या वलक्षावभासा जानानस्याशयप्रा नवनलिनवनप्रा-यशस्याननाजा । सातं वर्माननस्था रहसि रसिहरस्थाननर्मावतंसा पायादक्ता रणत्रा मतनमनतमत्राणरक्ता दयापा ॥ २८ ॥ उपासते कृष्टिकृतोदयां यां जना सदाराधनमीहमानाः । शंभोः प्रसिद्धा तनुतां वहन्ती गौरी हितं सा भवतां विधेयात् ॥ २९ ॥ यां सद्य एव त्रिदशैः पुमांसः समा नमस्यन्ति सदानभोगाः । अघानि यस्याः प्रणता विपक्षैः समानमस्यन्ति सदा नभोगाः ॥ ३० ॥ यस्याः प्रभावो द्युसदां विपक्षसेना वधानन्दयिताहरस्य । मनोम्बुजस्यावहतु श्रियै वः सेनावधानं दयिता हरस्य ॥ ३१ ॥ सुरा जिता भावित-देवराजद्विपक्षमा यात रणादभीतम् । स्वापं न वो धाम हितं न नाम सदैवसेना भवतोहितानाम् ॥ ३२ ॥ सुराजिता भावितदेव-राजद्विपक्षमाया तरणादभीतम् । स्वापन्नबोधामहितं ननाम सदैव सेना भवतो हितानाम् ॥ ३३ ॥ सुरानिति द्वेषिजनैरभिद्रुतानुदाहरद्या स्वयमाहवोद्यता । शिवोऽद्य तापप्रशमस्तया तव प्रशस्तया तत्त्वदृशा विधीयताम् ॥ ३४ ॥ वक्त्रं बिभ्रत्युपहितचन्द्रायासं या संमोहप्रशमन-

सूर्याकारा। कारानीतामरमरिमाचिक्षेप क्षेपत्यक्ता रणभुवि सा वः पायात् ॥ ३५ ॥ हितेहितेऽस्तु ते स्तुते जिताजितासितामिता। जयाजया जनोऽजनो यथा ययावलं बलम् ॥ ३६ ॥ सक्तिं वः सुकृतार्जने विदधती सत्रा यतां त्रायतां दुर्गा दुर्ग्रहदूषितोद्धतधियामायासदा या सदा। साधूत्साहविधानसक्तमनसां मुख्या ततां ख्याततां संस्मृत्यैव ...... मत्सरभरस्फीतापदां तापदाम् ॥ ३७ ॥ या मूर्तिं किमपि स्मरारिवपुषा धत्ते समायोजितां यां दृष्ट्वैव विनाशमाप सहसा शुम्भः समायोऽजिताम्। या नम्रैः सुरसिद्धकिंनरनरैः खेदं विना शस्यते सा हेतुर्भवतां त्रिलोचनवधूरश्रीविनाशस्य ते ॥ ३८ ॥ सायासायास्त्रिलोक्याः शरणमकरुणक्षुण्णदैत्यप्रवीरा स्वैरं स्वैरंशसर्गैर्गहनतममहामोहहार्दं हरन्ती। शस्याशस्यादधाना सकलमभिहितं भक्तिभाजः स्मृतैव स्तादस्तादभ्रदोषा द्विषदुपशमनी सर्वतः पार्वती वः ॥ ३९ ॥ सुरसुरचितचितनवनवभवभवनानादरादरायेये। लयलयचरणौ चरणौ न न मामि नतेन नमामि न ते ॥ ४० ॥ या विस्मयं स्मरभिदा चक्रेऽङ्कारोपिता नवं नारीणाम्। विदधे यच्चापस्य न च क्रेंकारोऽपि तानवं नारीणाम् ॥ ४१ ॥ या हन्तां च प्रयाता विहायसा कंसमाह तारातिबलेन। कृष्णस्तव परमाया विहाय साकं समाहतारातिबलेन ॥ ४२ ॥ तां नमत या च समरेष्वनेकशो भाति भद्रकाली नतया। ख्याति यया जनतोज्ज्वलविवेकशोभातिभद्राकालीनतया ॥ ४३ ॥ तां स्मरत या स्मृतैव हि मानवतामरसमानता राति बलात्। यत्प्रणतं श्रीः श्रयते मानवतामरसमानतारातिबलात् ॥ ४४ ॥ अनवरागसमुद्भवदेहतामुपगता ददृशे गिरिशेन या। अनवरागसमुद्भवदेह तामवनतोऽस्मि जगत्प्रियतां सतीम् ॥ ४५ ॥ मेने नूनमनेन माननमुमानाम्ना नु मेनोन्मना नुन्नेनोनमने निमानममुना नो नाम नानानुमे। मौनेनाममम-

ननिघ्नमननान्नानामिनानूनिम्ने मुन्मिन्नाननमा नमी मुनिभनोमानाननो-न्नामिनि ॥ ४६ ॥ तां वन्देऽहं नवं देहं ज्ञानरूपं विधाय या। सुधीरस्यति धीरस्य महामोहमयीं त्वचम् ॥ ४७ ॥ यां नुत्वा यान्ति हृद्यार्थसज्जायां गिरि शस्यताम् । नौम्यहं भक्तिमास्थाय सज्जायां गिरिशस्य ताम् ॥ ४८ ॥ यदानतोऽयदानतो न यात्ययं नयात्ययम् । शिवे हितां शिवेहितां स्मरामितां स्मरामि ताम् ॥ ४९ ॥ सर स्वतिप्रसादं मे स्थितिं चित्तसरस्वति । सरस्वति कुरु क्षेत्रकुरुक्षेत्रसरस्वति ॥ ५० ॥ त्वद्भक्तिभावितधियो जगतामत्र ये त्रये । जन्मवत्तामहं मन्ये तेषामेवा-नृणां नृणाम् ॥ ५१ ॥ जगतः सातिरेका त्वं गतिरस्य स्थिराधिका । तरस्यत्रासतारारेः सास्यत्रासरसस्थिति ॥ ५२ ॥ त्वन्नामस्मरणादेव न लक्ष्मीश्चपलायते । सर्वतः पार्वति क्षिप्रमलक्ष्मीश्च पलायते ॥ ५३ ॥ जयन्ति भक्ता वित्तेशसमरायस्तवाहवे । तुभ्यं नमस्त्रिलोक्यर्थसमरायस्त-वाहवे ॥ ५४ ॥ सत्त्वं सम्यक्त्वसुन्मील्य हृदि भासि विराजसे । द्विषामरीणां त्वं सेनां वाहिनीमुदकम्पयः ॥ ५५ ॥ दूरागतरसा धन्यः सेवते यस्तव स्तुतीः। दूरागत रसाधन्यः कल्पन्ते तस्य सिद्धयः ॥५६॥ मोहं हत्वास्पदं यासि सात्त्वमम्बरवासिना । या न संस्तूयसे केन सा त्वम्बरवासिना ॥ ५७ ॥ प्रकाश्य गृह्यपुंसस्यखेदच्छेदाम्बुदावली । प्रज्ञात्मनेनबिमला स्थिता दृश्यसि विद्वताम् ॥ ५८ ॥ भवानि ये निरन्तरं तव प्रणामलालसाः । 'मनस्तमोमलालसा भवन्ति नैव तु क्वचित् ॥ ५९ ॥ विभावनाकुला त्वयि क्रमेण देवि भावना । वपुष्प-तिस्थिरेतरे नितान्तमेव पुष्यति ॥ ६० ॥ महोऽदयानामवधी रणेन महोदयानामवधीरणेन। महोदयानामव धीरणेनमहोदयानामवधीरणेन ॥ ६१ ॥ न मज्जनेन तीर्थानां तदिह प्राप्यते शुभम् । नमज्जनेन तीर्थानां सेवया यत्तवाम्बिके ॥ ६२ ॥ प्रयाति मोहे निःसारभारती-

व्रतमेत्ययम् । त्वत्प्रसादाज्जनः सारभारतीव्रतमेत्ययम् ॥ ६३ ॥ शास्त्रप्रभावहसिताः सतां या निर्मला गिरः । शास्त्रप्रभावहसितास्त्वमम्ब तिमिरच्छिदः ॥ ६४ ॥ शमीह ते समानतो विभावितोऽत्रसन्न यः । विभावितोऽत्र सन्नयः शमीहते स मानतः ॥ ६५ ॥ मातरं त्वा पदं सद्य आश्रितास्ते कथं जनाः । मा तरन्त्वापदं सद्य आद्यं श्रेयः समाश्रिताः ॥ ६६ ॥ भाति त्वत्तनुसंश्लेषे सत्यम्ब वपुरनुत्तरम् । संसाराब्धौ सदाहुस्ते सत्यं वपुरनुत्तरम् ॥ ६७ ॥ यच्छ मे नित्यसंसङ्गि यच्छमे तदिदं मनः । स्वच्छलो भक्तियोगस्ते स्वच्छलोकविवेकसूः ॥ ६८ ॥ के वलन्ते वितन्वन्तकृतस्त्वत्प्रणता भवे । केवलं ते वितन्वन्त आसते विमलां धियम् ॥ ६९ ॥ देवि निर्दग्धकामस्य त्वं निरावरणात्मनः । हरस्यशुभसंतानं तेनासौ भ्राजते तथा ॥ ७० ॥ द्विषद्भिया सपदि विमुच्यते यतस्त्वानतो जननि जयाशया न कः । स्तवानतो जननिजया शयानकः करोति ते युधि मधुसूदनस्वसः ॥ ७१ ॥ ज्यायोनिष्ठारिवर्याधिनियमनवरस्वैरदत्तायताज्ञा स्वाराधत्वासमध्यानियजनजननि ज्ञेयसुस्थावभासा । नानापुण्यागमस्था जननमनमयज्ञाननन्द्या वरा धीर्याता नव्या विभुत्वं नुतसरलमनस्तामसस्यावहास्ये ॥ ७२ ॥ स्येहाव स्या समस्तानमलरसतनु त्वं भुवि व्यानतार्या धीरा वन्द्या न न ज्ञा यमनमननजस्थामगण्या पुनाना । सा भावस्था सुयज्ञेऽनिनजनजयनि ध्यामसत्त्वाधरास्वा ज्ञातायत्तादरस्वैरवनमनिधिर्या वरिष्ठानियोज्या ॥ ७३ ॥ अलोलकमले चित्तललामकमलालये । पाहि चण्डि महामोहभङ्गभीमबलामले ॥ ७४ ॥ दुर्गापि मातः सुलभासि भक्त्या भवानुकूलापि भवं क्षिणोषि । अध्येयतां यासि सदैव देवि ध्येयासि चित्रं चरितं तवैतत् ॥ ७५ ॥ महदेसुरसंधम्मे तमवसमासङ्गमागमाहरणे । हरबहुसरणं तं चित्तमोहमवसर उमे सहसा ॥ ७६ ॥

वन्ध्या प्रभातसंध्येव सूर्यालोकप्रवर्तिनी । निवर्तयसि देवि त्वं महामोहमयीं निशाम् ॥ ७७ ॥ संवादिसारसंपत्तीसदागोरिजयेसुदे । तवसत्तीरदे सन्तु संसारे सुसमानदे ॥७८॥ आगममणिसुदमहिमसमसंमदकुदपरजस्सु । किर सविभयवदितो समय उज्जलभावसहस्सु ॥ ७९ ॥ त्वं वादे शास्त्रसङ्गिन्यां भासि वाचि दिवौकसः । तवादेशास्त्रसंस्काराज्जयन्ति वरदे द्विषः ॥ ८० ॥ सदाव्याजवशिध्याताः सदात्तजपशिक्षिताः । ददास्यजस्रं शिवताः सूदात्ताजदिशि स्थिताः ॥ ८१ ॥ हरेः स्वसारं देवि त्वा जनताश्रित्य तत्त्वतः । वेत्ति स्वसारं देवित्वा योगेन क्षपिताशुभा ॥ ८२ ॥ सदाप्नोति यतिर्ज्योतिस्तादृशं त्वत्प्रभावतः । प्रभावतः समो येन कल्पते मोहनुत्तितः ॥ ८३ ॥ त्वं सद्गतिः सितापारा परा विद्योत्तितीर्षतः । संसारादत्र चाम्ब त्वं सत्त्वं पासि विपत्तितः ॥ ८४ ॥ परमा या तपोवृत्तिरार्यायास्तां स्मृतिं जनाः । परमायात पोषाय धियां शरणमादृताः ॥ ८५ ॥ प्रवादिमतभेदेषु दृश्यस्ते महिमाश्रयः । भान्ति त्वत्रिशिखस्येव शिखानामसमाश्रयः ॥ ८६ ॥ यच्चेष्टया तव स्फीतमुदारवसु धामतः । यच्चेतो यात्यवहितमुदा रवसुधामतः ॥ ८७ ॥ सुरदेशस्य ते कीर्तिं मण्डनत्वं नयन्ति यैः । वरदे शस्यते धीरैर्भवती भुवि देवता ॥ ८८ ॥ तत्त्वं वीतावततत्तुत्त्वं ततवती ततः । वित्तं वित्तव वित्तत्वं वीतावीतवतां बत ॥ ८९ ॥ तारे शरणमुद्यन्ती सुरेशरणमुद्यमैः । त्वं दोषापासिनोदग्रस्वदोषा पासि नोदने ॥ ९० ॥ सुमातरक्षयालोक रक्षयात्तमहामनाः । त्वं धैर्यजननी पासि जननीतिगुणस्थितीः ॥ ९१ ॥ ख्यातिकल्पनदक्षैका त्वं सामग्र्यजुषामितः । सदा सरक्षसांमुख्यदानवानामसुस्थितिः ॥ ९२ ॥ सिता संसत्सु सत्तास्ते स्तुतेस्ते सततं सतः । तवास्तितैति तस्तेति सूतिः सूतिस्त-

तोऽसि सा ॥ ९३ ॥ त्वदाज्ञया जगत्सर्वं भासितं मलनुद्यतः । सदा त्वया सगन्धर्वं समिद्धमरिनुत्तितः ॥ ९४ ॥ यतो याति ततोऽत्येति यया तां तायतां यतैः । मातामितोत्तमतमा तमोतीतां मतिं मम ॥ ९५ ॥ महत्तां त्वं श्रिता दासजनं मोहच्छिदा वस । यच्छुद्धत्वं गतः पापमन्यस्य प्रसभं जय ॥ ९६ ॥ त्वं साज्ञासु जगन्मातः स्पष्टं ज्ञाता सुवर्त्मसु । प्रज्ञा मुख्या समुद्भासि तत्पृथुत्वं प्रदर्शय ॥ ९७ ॥ आज्ञासु जगन्मातः स्पष्टं ज्ञाता सुवर्त्मसु प्रज्ञा । भासि त्वं सा मुख्या समुत्पृथुत्वं प्रदर्शय तत् ॥ ९८ ॥ ह्रयो रुषः क्षमा एता सदक्षोभास्तमुन्नतः । सतेहितः सेवते ताः सततं यः स ते हितः ॥ ९९ ॥ करोषि तास्त्वमुत्खात-मोहस्थाने स्थिरा मतीः । पदं यतिः सुतपसा लभतेऽतः सशुक्तिम ॥ १०० ॥ देव्या स्वप्नोद्गमादिष्टदेवीशतकसंज्ञया । देशितानुप-मामाधादतो नोणसुतो नुतिम् ॥ १०१ ॥ हार्दध्वान्तनियन्तृ-भास्वरवपुः स्ववासिनां सर्वतो दुर्वारारिपरिक्षयं विदधती ध्यातैव निर्वाणसूः । देहार्धे निहिता भवेन भुवनत्राणैकतानात्मना देवि त्वं त्वमिवापरा जगति का सत्केसरीन्द्रस्थितिः ॥ १०२ ॥ क्लेशोन्मा-थकरी सतां भवहरानन्दैकहेतो गुरुर्माता त्वं जगतां भवन्ति विभवाः सर्वे तवानुग्रहात् । दुर्गे न क्वचिदेव सीदति जनस्त्वद्भ-क्तिपूताशयः स्तुत्या भर्तुरभिन्नयेति विबुधैस्त्वं स्तूयसे श्रीरिव ॥ १०३ ॥ येनानन्दकथायां त्रिदशानन्दे च लालिता वाणी । तेन सुदुष्करमेतत्स्तोत्रं देव्याः कृतं भक्त्या ॥ १०४ ॥ इति श्रीमदा-नन्दवर्धनाचार्यविरचितं देवीशतकं संपूर्णम् ॥

## २६७. त्रिपुरसुन्दरीप्रातःस्मरणस्तोत्रम्।

श्रीगणेशाय नमः ॥ कस्तूरिकाकृतमनोज्ञललामभास्वदर्धेन्दुमुग्धनिटिलाञ्चलनीलकेशीम् । प्रालम्बमाननवमौक्तिकहारभूषां प्रातः स्मरामि ललितां कमलायताक्षीम् ॥ १ ॥ एणाङ्कचूडसमुपार्जितपुण्यराशिमुत्तप्तहेमतनुकान्तिझरीपरीताम् । एकाग्रचित्तमुनिमानसराजहंसीं प्रातः स्मरामि ललितापरमेश्वरीं ताम् ॥ २ ॥ ईषद्विकासिनयनान्तनिरीक्षणेन साम्राज्यदानचतुरां चतुराननेड्याम् । ईशाङ्कवाससरसिकां रससिद्धिदात्रीं प्रातः स्मरामि मनसा ललिताधिनाथाम् ॥ ३ ॥ लक्ष्मीशपद्मभवनादिपदैश्चतुर्भिः संशोभिते च फलकेन सदाशिवेन । मञ्चे वितानसहिते ससुखं निषण्णां प्रातः स्मरामि मनसा ललिताधिनाथाम् ॥ ४ ॥ ह्रींकारमन्त्रजपतर्पणहोमतुष्टां ह्रीङ्कारमन्त्रजलजातसुराजहंसीम् । ह्रीङ्कारहेमनवपञ्जरसारिकां तां प्रातः स्मरामि मनसा ललिताधिनाथाम् ॥ ५ ॥ हल्लीसलास्यमृदुगीतिरसं पिबन्तीमाकूणिताक्षमनवद्यगुणांबुराशिम् । सुप्तोत्थितां श्रुतिमनोहरकीरवाग्भिः प्रातः स्मरामि मनसा ललिताधिनाथाम् ॥ ६ ॥ सच्चिन्मयीं सकललोकहितैषिणीं च संपत्करीहयमुखीमुखदेवतेड्याम् । सर्वानवद्यसुकुमारशरीररम्यां प्रातः स्मरामि मनसा ललिताधिनाथाम् ॥ ७ ॥ कन्याभिरर्धशशिमुग्धकिरीटभास्वचूडाभिरङ्कगतहृद्यविपञ्चिकाभिः । संस्तूयमानचरितां सरसीरुहाक्षीं प्रातः स्मरामि मनसा ललिताधिनाथाम् ॥ ८ ॥ हत्वाऽसुरेन्द्रमतिमात्रबलावलिप्तभण्डासुरं समरचण्डमघोरसैन्यम् । संरक्षितार्तजनतां तपनेन्दुनेत्रां प्रातः स्मरामि मनसा ललिताधिनाथाम् ॥ ९ ॥ लज्जावनम्ररमणीयमुखेन्दुबिम्बां लाक्षारुणाङ्घ्रिसरसीरुहशोभमानाम् । रोलम्ब-

जालसमनीलसुकुन्तलाढ्यां प्रातः स्मरामि मनसा ललिताधिनाथाम् ॥ ॥ १० ॥ ह्रींकारिणीं हिममहीधरपुण्यराशिं ह्रीङ्कारमन्त्रमहनीयमनोज्ञरूपाम् । ह्रीङ्कारगर्भमनुसाधकसिद्धिदात्रीं प्रातः स्मरामि मनसा ललिताधिनाथाम् ॥ ११ ॥ सञ्जातजन्ममरणादिभयेन देवीं संफुल्लपद्मनिलयां शरदिन्दुशुभ्राम् । अर्धेन्दुचूडवनितामणिमादिवन्द्यां प्रातः स्मरामि मनसा ललिताधिनाथाम् ॥ १२ ॥ कल्याणशैलशिखरेषु विहारशीलां कामेश्वराङ्कनिलयां कमनीयरूपाम् । काद्यर्णमन्त्रमहनीयमहानुभावां प्रातः स्मरामि मनसा ललिताधिनाथाम् ॥ १३ ॥ लम्बोदरस्य जननीं तनुरोमराजीं बिम्बाधरां च शरदिन्दुमुखीं मृडानीम् । लावण्यपूर्णजलधिं जलजातहस्तां प्रातः स्मरामि मनसा ललिताधिनाथाम् ॥ १४ ॥ ह्रीङ्कारपूर्णनिगमैः प्रतिपाद्यमानां ह्रीङ्कारपद्मनिलयां हतदानवेन्द्राम् । ह्रीङ्कारगर्भमनुराजनिषेव्यमाणां प्रातः स्मरामि मनसा ललिताधिनाथाम् ॥ १५ ॥ श्रीचक्रराजनिलयां श्रितकामधेनुं श्रीकामराजजननीं शिवभागधेयाम् । श्रीमद्गुहस्य कुलमङ्गलदेवतां तां प्रातः स्मरामि मनसा ललिताधिनाथाम् ॥ १६ ॥ इति त्रिपुरसुन्दरीप्रातःस्मरणस्तोत्रं समाप्तम् ॥

## २६८. त्रिपुरसुन्दरीसान्निध्यस्तवः ।

श्रीगणेशाय नमः ॥ कल्पभानुसमानभास्वरधाम लोचनगोचरं किं किमित्यतिविस्मिते मयि पश्यतीह समागताम् । कालकुन्तलभारनिर्जितनीलमेघकुलां पुरश्चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥१॥ एकदन्तषडाननादिभिरावृतां जगदीश्वरीमेनसां परिपन्थिनीमहमेकभक्तिमदर्चिताम् । एकहीनशतेषु जन्मसु संचितात्सुकृतादिमां चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ २ ॥ ईदृशीति च वेदकुन्तल-

वाग्भिरप्यनिरूपितामीशपङ्कजनाभसृष्टिकृदादिवन्द्यपदाम्बुजाम् । ईक्षणान्तनिरीक्षणेन मदिष्टदां पुरतोऽधुना चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ ३ ॥ लक्षणोज्ज्वलहारशोभिपयोधरद्वयकैतवाल्लीलयैव दयारसस्रवदुज्ज्वलत्कलशान्विताम् । लाक्षयाङ्कितपादपातिमिलिन्दसन्ततिमग्रतश्चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ ४ ॥ ह्रीमिति प्रतिवासरं जपसुस्थिरोऽहमुदारया योगिमार्गनिरूढयैक्यसुभावनां गतया धिया । वत्स हर्षमवाप्तवत्यहमित्युदारगिरं पुरश्चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ ५ ॥ हंसवृन्दमलक्तकारुणपादपङ्कजनूपुरक्वाणमोहितमादरादनुधावितं मृदु शृण्वतीम् । हंसमन्त्रमहार्थतत्त्वमयीं पुरो मम भाग्यतश्चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ ६ ॥ सङ्गतं जलमभ्रवृन्दसमुद्भवं धरणीधराद्धारया वहदञ्जसा भ्रममाप्य सैकतनिर्गतम् । एवमादिमहेन्द्रजालसुकोविदां पुरतोऽधुना चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ ७ ॥ कम्बुसुन्दरकन्धरां कचवृन्दनिर्जितवारिदां कण्ठदेशलसत्सुमङ्गलहेमसूत्रविराजिताम् । कादिमन्त्रमुपासतां सकलेष्टदां मम संनिधौ चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ ८ ॥ हस्तपद्मलसन्त्रिखण्डसुमुद्रिकामहमद्रिजां हस्तिकृत्तिपरीतकार्मुकवल्लरीसमचिल्लिकाम् । हर्यजस्तुतवैभवां भवकामिनीं मम भाग्यतश्चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ ९ ॥ लक्षणोल्लसदङ्गकान्तिझरीनिराकृतविद्युतं लास्यलोलसुवर्णकुण्डलमण्डितां जगदम्बिकाम् । लीलयाखिलसृष्टिपालनकर्षणादिवितन्वतीं चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ १० ॥ ह्रीमिति त्रिपुरामनुस्थिरचेतसा बहुधार्चितां ह्रादिमन्त्रमहाम्बुजातविराजमानसुहंसिकाम् । हेमकुम्भघनस्तनाञ्चललोलमौक्तिकभूषणां चक्रराजनिवा-

सिनीं त्रिपुरेश्वरीमवलोकये ॥ ११ ॥ सर्वलोकनमस्कृतां जितशर्वरीरमणाननां शर्वदेवनमनःप्रियां नवयौवनोन्मदगर्विताम् । सर्वमङ्गलविग्रहां मम पूर्वजन्मतपोबलाच्चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ १२ ॥ कन्दमूलफलाशिभिर्बहुयोगिभिश्च गवेषितां कुन्दकुड्मलदन्तपङ्क्तिविराजितामपराजिताम् । कन्दमागमवीरुधां सुरसुन्दरीभिरिहागतां चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ १३ ॥ लत्रयाङ्कितमन्त्रराट्समलंकृतां जगदम्बिकां लोलनीलसुकुन्तलावलिनिर्जितालिकदम्बकाम् । लोभमोहविदारिणीं करुणामयीमरुणां शिवां चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ १४ ॥ ह्रींपदाख्यमहामनोरधिदेवतां भुवनेश्वरीं हृत्सरोजनिवासिनीं हरवल्लभां बहुरूपिणीम् । हारकुण्डलनूपुरादिभिरन्वितां पुरतोऽधुना चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ १५ ॥ श्रीं सुपञ्चदशाक्षरीमपि षोडशाक्षररूपिणीं श्रीसुधार्णवमध्यशोभिसरोजकाननचारिणीम् । श्रीगुहस्तुतवैभवां परदेवतां मम सन्निधौ चक्रराजनिवासिनीं त्रिपुरेश्वरीमवलोकये ॥ १६ ॥ इति श्रीमत्रिपुरसुन्दरीसान्निध्यस्तवः संपूर्णः ॥

## २६९. त्रिपुरसुन्दरीषोडशोपचारपूजास्तोत्रम् ।

श्रीगणेशाय नमः ॥ कल्पलतादिसुरद्रुमवाटीकल्पितरत्नगृहाधिनिवासाम् । कल्पशतार्जितपुण्यविशेषाच्चेतसि भावनयाहमुपासे ॥ १ ॥ एणधराश्मकृतोन्नतधिष्ण्यं हेमविनिर्मितपादमनोज्ञम् । शोणशिलाफलकं च विशालं देवि सुखासनमद्य ददामि ॥ २ ॥ ईशमनोहररूपविलासे शीतलचन्दनकुङ्कुममिश्रम् । हृद्यसुवर्णघटे परिपूर्णं पाद्यमिदं त्रिपुरेशि गृहाण ॥ ३ ॥ लब्धभवत्करुणोऽहमिदानीं रत्नसुमाक्षतयुक्तमनर्घम् । रुक्मविनिर्मितपात्रविशेषेष्वर्घ्यमिदं त्रिपुरेशि ददामि ॥ ४ ॥

ह्रीमिति मन्त्रजपेन सुगम्ये हेमलतोज्ज्वलदिव्यशरीरे। योगिमनःसमशीतजलेन ह्याचमनं त्रिपुरेऽद्य विधेहि ॥ ५॥ हस्तलसत्कटकादिसुभूषा आदरतोऽम्ब वरोप्यनिधाय। चन्दनवासितमन्त्रिततोयैः स्नानमयि त्रिपुरेशि विधेहि ॥ ६ ॥ सञ्चितमम्ब मया ह्यतिमूल्यं कुङ्कुमशोणमतीव मृदु त्वम्। शङ्करतुङ्गतराङ्कनिवासे वस्त्रयुगं त्रिपुरे परिधेहि ॥ ७ ॥ कन्दलदंशुकिरीटमनर्घं कङ्कणकुण्डलनूपुरहारम्। अङ्गदमङ्गुलिभूषणमम्ब स्वीकुरु देवि पुराधिनिवासे ॥ ८ ॥ हस्तलसच्चतुरायुधजाले शस्ततरं मृगनाभिसमेतम् । सद्घनसारसुकुङ्कुममिश्रं चन्दनपङ्कमिदं च गृहाण ॥ ९ ॥ लब्धविकासकदम्बकजातीचम्पकपङ्कजकेतकयुक्तैः। पुष्पचयैर्मनसावचितैस्त्वामम्ब पुरेशि भवानि भजामि ॥ १० ॥ ह्रींपदशोभिमहामनुरूपे धूरसिमन्त्रवरेण मनोज्ञम्। अष्टसुगन्धरजःकृतमाद्ये धूपमिदं त्रिपुरेशि ददामि ॥ ११ ॥ सन्तमसापहमुज्ज्वलपात्रे गव्यघृतैः परिवर्धितदेहम् । चम्पककुड्मलवृन्दसमानं दीपगणं त्रिपुरेऽद्य गृहाण ॥ १२ ॥ कल्पितमद्य धियाऽमृतकल्पं दुग्धसितायुतमन्नविशेषम्। माषविनिर्मितपूपसहस्रं स्वीकुरु देवि निवेदनमाद्ये ॥ १३ ॥ लङ्घितकेतकवर्णविशेषैः शोधितकोमलनागदलैश्च। मौक्तिकचूर्णयुतैः क्रमुकाद्यैः पूर्णतराम्ब पुरस्तव पात्री ॥ १४ ॥ ह्रींत्रयपूरितमन्त्रविशेषं पञ्चदशीमपि षोडशरूपम्। संचितपापहरं च जपित्वा मन्त्रसुमाञ्जलिमम्ब ददामि ॥ १५ ॥ श्रींपदपूर्णमहामनुरूपे श्रीशिवकाममहेश्वरजाये। श्रीगुहवन्दितपादपयोजे श्रीललितापरमेशि नमस्ते ॥ १६ ॥ इति श्रीमत्रिपुरसुन्दरीषोडशोपचारपूजास्तोत्रं संपूर्णम् ॥

## २७०. त्रिपुरसुन्दरीविजयस्तवः ।

श्रीगणेशाय नमः ॥ कल्पान्तोदितचण्डभानुविलसद्देहप्रभामण्डिता कालाम्भोदसमानकुन्तलभरा कारुण्यवारांनिधिः । काद्यर्णाङ्कितमन्त्रराजविलसत्कूटत्रयोपासिता श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥ १ ॥ एतत्प्राभवशालिनीति निगमैरप्याप्यनालोकिता हेमाम्भोजमुखी चलत्कुवलयप्रस्पर्धमानेक्षणा । एणाङ्कांशसमानफालफलकप्रोल्लासिकस्तूरिका श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥ २ ॥ ईषत्फुल्लकदम्बकुड्मलमहालावण्यगर्वापहस्निग्धस्वच्छसुदन्तकान्तिविलसन्मन्दस्मितालंकृता । ईशित्वाद्यखिलेष्टसिद्धिफलदा भक्त्या नतानां सदा श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥ ३ ॥ लक्ष्यालक्ष्यवलग्नदेशविलसद्रोमावलीवल्लरीवृत्तस्निग्धफलद्वयभ्रमकरोत्तुङ्गस्तनी सुन्दरी । रक्ताशोकसुमप्रपाटलदुकूलाच्छादिताङ्गी मुदा श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥ ४ ॥ ह्रीङ्कारी सुरवाहिनीजलगभीरावर्तनाभिर्घनश्रोणीमंडलभारमन्दगमना काञ्चीकलापोज्ज्वला । शुण्डादण्डसुवर्णकदलीकाण्डोपमोरुद्वयी श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥ ५ ॥ हस्तप्रोज्ज्वलदिक्षुकार्मुकलसत्पुष्पेषुपाशाङ्कुशा ह्राद्यर्णाङ्कितमन्त्रराजनिलया हारादिभिर्भूषिता । हस्तप्रान्तरणत्सुवर्णवलया हर्यक्षसंपूजिता श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥ ६ ॥ संरक्ताम्बुजपादयुग्मविलसन्मञ्जुक्वणन्नूपुरा संसारार्णवकारणैकतरणिर्लावण्यवारांनिधिः । लीलालोलतमं शुकं मधुरया संलालयन्ती गिरा श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥ ७ ॥ कल्याणी करुणारसार्द्रहृदया कल्याणसंदायिनी काद्यर्णाङ्कितमन्त्रलक्षिततनुस्तन्वी तमोनाशिनी । कामेशाङ्कविलासिनी कलगिरामावासभूमिः शिवा श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥ ८ ॥

हन्तुं दानवपुङ्गवं रणभुवि प्रोच्चण्डभण्डाभिधं हर्यक्षाद्यमरार्थिता भगवती दिव्यां तनूमाश्रिता । श्रीमाता ललितेत्यचिन्त्यविभवैर्नाम्नां सहस्रैः स्तुता श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥ ९ ॥ लक्ष्मीवागगजादिभिर्बहुविधै रूपैः स्तुतापि स्वयं नीरूपा गुणवर्जिता त्रिजगतां माता च चिद्रूपिणी । भक्तानुग्रहकारणेन ललितं रूपं समासादिता श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥१०॥ ह्रीङ्कारैकपरायणार्तजनतासंरक्षणे दीक्षिता हार्दं संतमसं व्यपोहितुमलंभूष्णुर्हरप्रेयसी । हत्यादिप्रकटाघसंघदलने दक्षा च दाक्षायणी श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥ ११ ॥ सर्वानन्दमयी समस्तजगतामानन्दसंदायिनी सर्वोत्तुङ्गसुवर्णशैलनिलया सा सारसाक्षी सती । सर्वैर्योगिचयैः सदैव विचिता साम्राज्यदानक्षमा श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥ १२ ॥ कन्यारूपधरा गलाब्जविलसन्मुक्तालतालङ्कृता कादिक्षान्तमनुप्रविष्टहृदया कल्याणशीलान्विता । कल्पान्तोद्भटताण्डवप्रमुदिता श्रीकामजित्साक्षिणी श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥ १३ ॥ लक्ष्या भक्तिरसार्द्रहृत्सरसिजे सद्भिः सदाराधिता सान्द्रानन्दमयी सुधाकरकलाखण्डोज्ज्वलन्मौलिका । शर्वाणी शरणागतार्तिशमनी सच्चिन्मयी सर्वदा श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥ १४ ॥ ह्रीङ्कारत्रयसंपुटातिमहता मन्त्रेण संपूजिता होत्री चन्द्रसमीरणाग्निजलभूभास्वन्नभोरूपिणी । हंसः सोऽहमिति प्रकृष्टधिषणैराराधिता योगिभिः श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥ १५ ॥ श्रीङ्काराम्बुजहंसिका श्रितजनक्षेमङ्करी शङ्करी श्रृङ्गारैकरसाकरस्य मदनस्योज्जीविका वल्लरी । श्रीकामेशरहःसखी च ललिता श्रीमद्गुहाराधिता श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ॥ १६ ॥ इति श्रीमत्रिपुरसुन्दरीविजयस्तवः संपूर्णः ॥

## २७१. त्रिपुरसुन्दरीपुष्पाञ्जलिस्तवः ।

श्रीगणेशाय नमः ॥ कल्याणदात्रि कमनीयतनूलते त्वां कं चापि कालमनुचिन्त्य हृदब्जमध्ये । कामं प्रहर्षभरितेन मया तवाद्य पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥ १ ॥ एतन्मदीयसुकृतं परमं पुराणं यत्त्वामहं प्रतिदिनं मनसा भजामि । साक्षात्कृतेन तव रूपमनेन चाद्य पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥ २ ॥ ईशादिदेवमहनीयमहानुभावे दीनं त्विमं भवभयेन परिस्फुरन्तम् । दीनार्तिहर्त्रि दयया परिपालयाशु पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥ ३ ॥ लज्जां विहाय बहुधा बहवोऽपि देवाः संपूजिता जडधिया नतु कोऽपि दृष्टः । लब्धं तवैव रमणीयवपुर्दृशा मे पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥ ४ ॥ ह्रीङ्कारमन्त्रनिलये बहुशो भवाब्धौ मग्नः परंतु न कदापि गतोऽस्मि पारम् । तत्तारणे निपुणयोस्त्रिपुरे मयाद्य पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥ ५ ॥ हस्तेषु पाशमहनीयसितेक्षुचापे पुष्पास्त्रमङ्कुशवरं ललितं दधाने । हेमाद्रितुङ्गतरशृङ्गनिवासशीले पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥ ६ ॥ सर्वेषु देवि समयेषु गतिस्त्वमेव नान्यं कदापि मनसा समनुस्मरामि । सर्वत्र रूपमतुलं तव पश्यताद्य पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥ ७ ॥ कस्ते पुरेशि विधिवत्तु समर्हणायां शक्तः समस्तपरिबर्हयुतोऽपि धीमान् । हृत्पङ्कजेन भवतीं भजता मयाद्य पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥ ८ ॥ हन्तातिरूक्षभवपावकशोषितेन कुत्राप्यलब्धशरणेन सरोजवक्त्रे । अन्ते मयात्रभवतीं शरणं गतेन पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥ ९ ॥ लक्ष्यासि देवि बहुजन्मतपोबलेन लक्ष्मीशधातृपरिपूज्यपदाम्बुजाते । आलक्ष्य रूपमरुणं तव विस्मितेन पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥ १० ॥ ह्रीङ्कारमेव शरणं

जगतां वदन्ति ह्रीङ्कारमेव परमं भुवने रहस्यम् । ह्रीङ्कारमेव सततं स्मरता मयाद्य पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥ ११ ॥ सर्वस्य देवि भुवनस्य निदानभूता त्वय्येव सर्वमनघे विलयं गतं स्यात् । संचिन्त्य चैतदधुना त्रिपुरे मया ते पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥ १२ ॥ कश्चिद्यदा भवनिहन्त्रि विचिन्तयेत्त्वां दीनं तदैव हि कटाक्षयसे दृशा त्वम् । एवं विचिन्त्य भवतीं स्मरता मयाद्य पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥ १३ ॥ लब्ध्वा त्वदीयचरणाम्बुजमम्ब जन्तुर्नावर्तते पुनरपि प्रभवाय लोके । वेदोक्तिमेवमसकृत्स्मरता मयाद्य पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥ १४ ॥ ह्रीङ्कारमेव जपता प्रतिवासरं च ह्रीङ्कारमेव भजता सकलेष्टसिद्ध्यै । ह्रीङ्कारमेव परमं शरणं गतेन पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥ १५ ॥ श्रीङ्कारमन्त्रकनकाञ्जनिवासशीले श्रीरूपधारिणि शिवे श्रितकल्पवल्लि । श्रीमद्गुरुस्तुतमहाविभवे पुरेशि पुष्पाञ्जलिश्चरणयोरयमम्ब कीर्णः ॥१६॥ इति श्रीमत्त्रिपुरसुन्दरीपुष्पाञ्जलिस्तवः संपूर्णः ॥

## २७२. त्रिपुरसुन्दरीचक्रराजस्तवः ।

श्रीगणेशाय नमः ॥ कर्तुं देवि जगद्विलासविधिना सृष्टेन ते मायया सर्वानन्दमयेन मध्यविलसच्छ्रीबिन्दुनालंकृतम् । श्रीमत्सद्गुरुपूज्यपादकरुणासंवेद्यतत्त्वात्मकं श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ १ ॥ एकस्मिन्नणिमादिभिर्विलसितं भूमीगृहे सिद्धिभिर्ब्राह्म्याद्याभिरुपाश्रितं च दशभिर्मुद्राभिरुद्भासितम् । चक्रेश्या प्रकटेड्यया त्रिपुरया त्रैलोक्यसंमोहनं श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ २ ॥ ईड्याभिर्नवविद्रुमच्छविसमाभिख्याभिरङ्गीकृतं कामाकर्षणिकादिभिः स्वरदले गुप्ताभिधाभिः सदा । सर्वाशापरि-

पूरके परिलसद्देव्या पुरेश्या युतं श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ ३ ॥ लब्धप्रोज्ज्वलयौवनाभिरभितोऽनङ्गप्रसूनादिभिः सेव्यं गुप्ततराभिरष्टकमले संक्षोभकाख्ये सदा। चक्रेश्या पुरसुन्दरीति जगति प्रख्यातया संगतं श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ ४ ॥ ह्रीङ्काराङ्कितमन्त्रराजनिलयं श्रीसर्वसंक्षोभिणीमुख्याभिश्चलकुन्तलाभिरुषितं मन्वस्रचक्रे शुभे । यत्र श्रीपुरवासिनी विजयते श्रीसर्वसौभाग्यदे श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ ५ ॥ हस्ते पाशगदादिशस्त्रनिचयं दीप्रं वहन्तीभिरुत्तीर्णाख्याभिरुपास्यया ऽतिशुभदे सर्वार्थसिद्धिप्रदे । चक्रे बाह्यदशारके विलसितं देव्या पुरश्र्याख्यया श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ ६ ॥ सर्वज्ञादिभिरिन्दुकान्तिधवलाकाराभिरारक्षिते चक्रेऽन्तर्दशकोणकेऽतिविमले नाम्ना च रक्षाकरे । यत्र श्रीपुरमालिनी विजयते नित्यं निगर्भास्तुता श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ ७ ॥ कर्तुं मूकमनर्गलस्त्रवदतिद्राक्षादिवाग्वैभवं दक्षाभिर्वशिनीमुखाभिरभितो वाग्देवताभिर्युतम् । अष्टारे पुरसिद्धया विलसितं रोगप्रणाशे शुभे श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ ८ ॥ हन्तुं दानवसङ्घमाहवभुवि स्वेच्छासमाकल्पितैः शस्त्रैरस्त्रचयैश्च चापनिवहैरत्युग्रतेजोभरैः । आर्तत्राणपरायणैररिकुलप्रध्वंसिभिः संवृतं श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ ९ ॥ लक्ष्मीवागगजातमभिः करलसत्पाशासिघण्टादिभिः कामेश्यादिभिरावृतं शुभकरं श्रीसर्वसिद्धिप्रदम् । चक्रेशी च पुराम्बिका विजयते यत्र त्रिकोणे मुदा श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ १० ॥ ह्रीङ्कारं परमं जपद्भिरनिशं मित्रेशनाथादिभिर्दिव्यौघैर्मनुजौघसिद्धनिवहैः सारूप्यमुक्तिं

गतैः । नानामन्त्ररहस्यविद्भिरखिलैरन्वासितं योगिभिः श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ ११ ॥ सर्वोत्कृष्टवपुर्धराभिरभितो देवीसमाभिर्जगत्संरक्षार्थमुपागताभिरसकृन्नित्याभिधाभिर्मुदा । कामेश्यादिभिराज्ञयैव ललितादेव्याः समुद्भासितं श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ १२ ॥ कर्तुं श्रीललिताङ्गरक्षणविधिं लावण्यपूर्णां तनूमास्थायास्त्रवरोल्लसत्करपयोजाताभिरध्यासितम् । देवीभिर्हृदयादिभिश्च परितो बिन्दुं सदानन्ददं श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ १३ ॥ लक्ष्मीशादिपदैर्युतेन महता मञ्चेन संशोभितं षट्त्रिंशद्भिरनर्घरत्नखचितैः सोपानकैर्भूषितम् । चिन्तारत्नविनिर्मितेन महता सिंहासनेनोज्ज्वलं श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ १४ ॥ ह्रीङ्कारैकमहामनुं प्रजपता कामेश्वरेणोषितं तस्याङ्के च निषण्णया त्रिजगतां मात्रा चिदाकारया । कामेश्या करुणारसैकनिधिना कल्याणदात्र्या युतं श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ १५ ॥ श्रीमत्पञ्चदशाक्षरैकनिलयं श्रीषोडशीमन्दिरं श्रीनाथादिभिरर्चितं च बहुधा देवैः समाराधितम् । श्रीकामेशरहःसखीनिलयनं श्रीमद्गुहाराधितं श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ॥ १६ ॥ इति श्रीमत्रिपुरसुन्दरीचक्रराजस्तवः संपूर्णः ॥

## २७३. श्रीमत्त्रिपुरसुन्दर्यपराधक्षमापनस्तवः ।

श्रीगणेशाय नमः ॥ कञ्जमनोहरपादचलन्मणिनूपुरहंसविराजिते कञ्जभवादिसुरौघपरिष्टुतलोकविसृत्वरवैभवे । मञ्जुलवाङ्मयनिर्जितकीरकुलेऽचलराजसुकन्यके पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ १ ॥ एणधरोज्ज्वलफालतलोल्लसदैणमदाङ्कसमन्विते शोणपरागविचित्रितकन्दुकसुन्दरसुस्तनशोभिते । नीलपयोधर-

कालसुकुन्तलनिर्जितभृङ्गकदम्बके पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ २ ॥ ईतिविनाशनि भीतिनिवारणि दानवहन्त्रि दयापरे शीतकराङ्कितरत्नविभूषितहेमकिरीटसमन्विते । दीप्ततरायुधभण्डमहासुरगर्वनिहन्त्रि पुराम्बिके पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ३ ॥ लब्धवरेण जगत्त्रयमोहनदक्षलतान्तमहेषुणा लब्धमनोहरसालनिषण्णसुदेहभुवा परिपूजिते । लङ्घितशासनदानवनाशनदक्षमहायुधराजिते पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ४ ॥ ह्रींपदभूषितपञ्चदशाक्षरषोडशवर्णसुदेवते ह्रीमति हादिमहामनुमन्दिररत्नविनिर्मितदीपिके । हस्तिवराननदर्शितयुद्धसमादरसाहसतोषिते पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ५ ॥ हस्तलसन्नवपुष्पशरेक्षुशरासनपाशमहाङ्कुशे हर्यजशंभुमहेश्वरपादचतुष्टयमञ्चनिवासिनि । हंसपदार्थमहेश्वरि योगिसमूहसमादृतवैभवे पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ६ ॥ सर्वजगत्करणावननाशनकर्त्रि कपालिमनोहरे स्वच्छमृणालमरालतुषारसमानसुहारविभूषिते । सज्जनचित्तविहारिणि शङ्करि दुर्जननाशनतत्परे पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ७ ॥ कञ्जदलाक्षि निरञ्जनि कुञ्जरगामिनि मञ्जुलभाषिते कुङ्कुमपङ्कविलेपनशोभितदेहलते त्रिपुरेश्वरि । दिव्यमतङ्गसुताधृतराज्यभरे करुणारसवारिधे पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ८ ॥ हल्लकचम्पकपङ्कजकेतकपुष्पसुगन्धितकुन्तले हाटकभूधरशृङ्गविनिर्मितसुन्दरमन्दिरवासिनि । हस्तिमुखाम्ब वराहमुखीधृतसैन्यवरे गिरिकन्यके पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ९ ॥ लक्ष्मणसोदरसादरपूजितपादयुगे वरदे शिवे लोहमयादिबहून्नतसालनिषण्णबुधेश्वरसंवृते ।

लोलमदालसलोचननिर्जितनीलसरोजसुमालिके पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ १० ॥ ह्रीमिति मन्त्रमहाजपसुस्थिरसाधकमानसहंसिके हेपितशीतकराननशोभिनि हेमलतेव सुभास्वरे । हार्दतमोगुणनाशनि पाशविमोचनि मोक्षसुखप्रदे पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ ११ ॥ सच्चिदभेदसुखामृतवर्षिणि तत्त्वमसीति सदादृते सद्गुणशालिनि साधुसमर्चितपादयुगे परशाम्भवि । सर्वजगत्परिपालनदीक्षितबाहुलतायुगशोभिते पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ १२ ॥ कम्बुगले वरकुन्दरदे रसरञ्जितपादसरोरुहे काममहेश्वरकामिनि कोकिलकोमलभाषिणि भैरवि । चिन्तितसर्वमनोरथपूरणकल्पलते करुणार्णवे पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ १३ ॥ हस्तकशोभिकरोज्ज्वलकङ्कणकान्तिसुदीपितदिङ्मुखे शस्ततरत्रिदशालयकार्यसमादृतदिव्यतनूज्ज्वले । कश्चतुरो भुवि देवि पुरेशि भवानि तव स्तवने भवेत्पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ १४ ॥

ह्रींपदलाञ्छितमन्त्रपयोनिधिमन्थनजातपरामृते हव्यवहानिलभूयजमानकखेन्दुदिवाकररूपिणि । हर्यजरुद्रमहेश्वरसंस्तुतवैभवशालिनि सिद्धिदे पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ १५ ॥ श्रीपुरवासिनि हस्तलसद्वरचामरवाक्कमलानुते श्रीगुहपूर्वभवार्जितपुण्यफले भवमत्तविलासिनि । श्रीवशिनीविमलादिसदानतपादचलन्मणिनूपुरे पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ॥ १६ ॥

इति श्रीमत्रिपुरसुन्दर्यपराधक्षमापनस्तवः संपूर्णः ॥

## २७४. त्रिपुरसुन्दरीवेदसारस्तवः ।

श्रीगणेशाय नमः ॥ कस्तूरीपङ्कभास्वद्गलचलदमलस्थूलमुक्ताव-

लीका ज्योत्स्नाशुद्धावदाता शशिशिशुमुकुटालंकृता ब्रह्मपत्नी । साहित्याम्भोजभृङ्गी कविकुलविनुता सात्विकीं वाग्विभूतिं देयान्मे शुभ्रवस्त्रा करचलवलया वल्लकीं वादयन्ती ॥ १ ॥ एकान्ते योगिवृन्दैः प्रशमितकरणैः क्षुत्पिपासाविमुक्तैः सानन्दं ध्यानयोगाद्बिसगुणसदृशी दृश्यते चित्तमध्ये । या देवी हंसरूपा भवभयहरणं साधकानां विधत्ते सा नित्यं नादरूपा त्रिभुवनजननी मोदमाविष्करोतु ॥ २ ॥ ईक्षित्री सृष्टिकाले त्रिभुवनमथ या तत्क्षणेऽनुप्रविश्य स्थेमानं प्रापयन्ती निजगुणविभवैः सर्वथा व्याप्य विश्वम् । संहर्त्री सर्वभासां विलयनमसमये स्वात्मनि स्वप्रकाशा सा देवी कर्मबन्धं मम भवकरणं नाशयत्वादिशक्तिः ॥ ३ ॥ लक्ष्या या चक्रराजे नवपुरलसिते योगिनीवृन्दगुप्ते सौवर्णे शैलशृङ्गे सुरगणरचिते तत्त्वसोपानयुक्ते । मन्त्रिण्या मेचकाङ्ग्या कुचभरनतया कोलमुख्या च सार्धं साम्राज्ञी सा मदीया मदगजगमना दीर्घमायुस्तनोतु ॥ ४ ॥ ह्रीङ्काराम्भोजभृङ्गी हयमुखविनुता हानिवृद्ध्यादिहीना हंसोऽहंमन्त्रराज्ञी हरिहयवरदा हादिमन्त्रार्थरूपा । हस्ते चिन्मुद्रिकाढ्या हतबहुदनुजा हस्तिकृत्तिप्रिया मे हार्दं शोकातिरेकं शमयतु ललिताधीश्वरी पाशहस्ता ॥ ५ ॥ हस्ते पङ्केरुहाभे सरससरसिजं बिभ्रती लोकमाता क्षीरोदन्वत्सुकन्या करिवरविनुता नित्यपुष्टाब्जगेहा । पद्माक्षी हेमवर्णा मुररिपुदयिता शेवधिः सम्पदां या सा मे दारिद्र्यदोषं दमयतु करुणादृष्टिपातैरजस्रम् ॥ ६ ॥ सच्चिद्ब्रह्मस्वरूपां सकलगुणयुतां निर्गुणां निर्विकारां रागद्वेषादिहन्त्रीं रविशशिनयनां राज्यदानप्रवीणाम् । चत्वारिंशत्त्रिकोणे चतुरधिकसमे चक्रराजे लसन्तीं कामाक्षीं कामितानां वितरणचतुरां चेतसा भावयामि ॥ ७ ॥ कन्दर्पे त्रिनयननयनज्योतिषा देववृन्दैः साशङ्कं

साश्रुपातं सविनयकरुणं याचिता कामपत्न्या। या देवी दृष्टिपातैः पुनरपि मदनं जीवयामास सद्यः सा नित्यं रोगशान्त्यै प्रभवतु ललिताधीश्वरी चित्प्रकाशा ॥ ८ ॥ हव्यैः कव्यैश्च सर्वैः श्रुतिचय-विहितैः कर्मभिः कर्मशीला ध्यानाद्यैरष्टभिश्च प्रशमितकलुषा योगिनः पर्णभक्षाः । यामेवानेकरूपां प्रतिदिनमवनौ संश्रयन्ते विधिज्ञाः सा मे मोहान्धकारं बहुभवजनितं नाशयत्वादिमाता ॥ ९ ॥ लक्ष्या मूलत्रिकोणे गुरुतरकरुणालेशतः कामपीठे यस्या विश्वं समस्तं बहुतरविततं जायते कुण्डलिन्याः । यस्याः शक्ति-प्ररोहादविरलममृतं विन्दते योगिवृन्दं तां वन्दे नादरूपां प्रणव-पदमयीं प्राणिनां प्राणदात्रीम् ॥ १० ॥ ह्रीङ्काराम्भोधिलक्ष्मीं हिमगिरितनयामीश्वरीमीश्वराणां ह्रींमन्त्राराध्यदेवीं श्रुतिशतशिखरै-र्मृग्यमाणां मृगाक्षीम् । ह्रींमन्त्रान्तैस्त्रिकूटैः स्थिरतरमतिभिर्धार्य-माणां ज्वलन्तीं ह्रीं ह्रीं ह्रीमित्यजस्रं हृदयसरसिजे भावयेऽहं भवानीम् ॥ ११ ॥ सर्वेषां ध्यानमात्रात्सवितुरुदरगा चोदयन्ती मनीषां सावित्री तत्पदार्था शशियुतमुकुटा पञ्चशीर्षा त्रिनेत्रा । हस्ताग्रैः शङ्खचक्राद्यखिलजनपरित्राणदक्षायुधानां बिभ्राणा वृन्द-मम्बा विशदयतु मतिं मामकीनां महेशी ॥ १२ ॥ कर्त्री लोकस्य लीलाविलसितविधिना कारयित्री क्रियाणां भर्त्री स्वानुप्रवेशा-द्वियदनिलमुखैः पञ्चभूतैः स्वसृष्टैः । हर्त्री स्वेनैव धाम्ना पुनरपि विलये कालरूपं दधाना हन्यादामूलमस्मत्कलुषभरमुमा भुक्ति-मुक्तिप्रदात्री ॥ १३ ॥ लक्ष्या या पुण्यजालैर्गुरुवरचरणाम्भोज-सेवाविशेषादृश्या स्वान्ते सुधीभिर्दरदलितमहापद्मकोशेन तुल्ये । लक्षं जप्त्वापि यस्या मनुवरमणिमासिद्धिमन्तो महान्तः सा नित्यं मामकीने हृदयसरसिजे वासमङ्गीकरोतु ॥ १४ ॥ ह्रींश्रीमैंमन्त्ररूपा

हरिहरविनुताऽगस्त्यपत्नीप्रदिष्टा हादिः काद्यर्णतत्त्वा सुरपतिवरदा कामराजप्रदिष्टा। दुष्टानां दानवानां मदभरहरणा दुःखहन्त्री बुधानां साम्राज्ञी चक्रराज्ञी प्रदिशतु कुशलं मह्यमोङ्काररूपा ॥ १५ ॥ श्रीमन्त्रार्थस्वरूपा श्रितजनदुरितध्वान्तहन्त्री शरण्या श्रौतस्मार्तक्रियाणामविकलफलदा फालनेत्रस्य दाराः। श्रीचक्रान्तर्निषण्णा गुहवरजननी दुष्टहन्त्री वरेण्या श्रीमत्सिंहासनेशी प्रदिशतु विपुलां कीर्तिमानन्दरूपा ॥ १६ ॥ श्रीचक्रवरसाम्राज्ञी श्रीमत्त्रिपुरसुन्दरी। श्रीगुहान्वयसौवर्णदीपिका दिशतु श्रियम् ॥ १७ ॥ इति श्रीमत्त्रिपुरसुन्दरीवेदसारस्तवः संपूर्णः ॥

## २७५. श्रेयस्करीस्तोत्रम्।

श्रीगणेशाय नमः ॥ श्रेयस्करि श्रमनिवारिणि सिद्धविद्ये स्वानन्दपूर्णहृदये करुणातनो मे। चित्ते वस प्रियतमेन शिवेन सार्धं माङ्गल्यमातनु सदैव मुदैव मातः ॥ १ ॥ श्रेयस्करि श्रितजनोद्धरणैकदक्षे दाक्षायणि क्षपितपातकतूलराशे। शर्मण्यपादयुगले जलजप्रमोदे मित्रे त्रयीप्रसृमरे रमतां मनो मे ॥ २ ॥ श्रेयस्करि प्रणतपामरपारदानज्ञानप्रदानसरणिश्रितपादपीठे। श्रेयांसि सन्ति निखिलानि सुमङ्गलानि तत्रैव मे वसतु मानसराजहंसः ॥ ३ ॥ श्रेयस्करीति तव नाम गृणाति भक्त्या श्रेयांसि तस्य सदने च करी पुरस्तात्। किं किं न सिध्यति सुमङ्गलनाममालां धृत्वा सुखं स्वपिति शेषतनौ रमेशः ॥ ४ ॥ श्रेयस्करीति वरदेति दयापरेति वेदोदरेति विधिशङ्करपूजितेति। वाणीति शम्भुरमणीति च तारिणीति श्रीदेशिकेन्द्रकरुणेति गृणामि नित्यम् ॥ ५ ॥ श्रेयस्करि प्रकटमेव तवाभिधानं यत्रास्ति तत्र रविवत्प्रथमानवीर्यम्। ब्रह्मेन्द्ररुद्रमरुदादिगृहाणि

सौख्यैः पूर्णानि नाममहिमा प्रथितस्त्रिलोक्याम् ॥ ६ ॥ श्रेयस्करि प्रणतवत्सलता त्वयीति वाचं शृणुष्व सरलां सरसां च सत्याम् । भक्त्या नतोऽस्मि विनतोऽस्मि सुमङ्गले त्वत्पादाम्बुजे प्रणिहिते मयि सन्निधत्स्व ॥ ७ ॥ श्रेयस्करीचरणसेवनतत्परेण कृष्णेन भिक्षुवपुषा रचितं पठेद्यः । तस्य प्रसीदति सुरारिविमर्दनीयमम्बा तनोति सदनेषु सुमङ्गलानि ॥ ८ ॥ यथामतिकृतस्तुतौ मुदमुपैति माता न किं यथाविभवदानतो मुदमुपैति पात्रं न किम् । भवानि तव संस्तुतिं विरचितुं न चाहं क्षमस्तथापि मुदमेष्यसि प्रदिशसीष्टमम्ब त्वरात् ॥ ९ ॥ इति श्रीमत्परमहंसश्रीकृष्णानंदसरस्वतीप्रणीतं श्रेयस्करीसुमङ्गलस्तोत्रं संपूर्णम् ॥

## २७६. दुर्गापदुद्धारस्तवराजः ।

श्रीगणेशाय नमः ॥ नमस्ते शरण्ये शिवे सानुकम्पे नमस्ते जगद्व्यापिके विश्वरूपे । नमस्ते जगद्वन्द्यपादारविन्दे नमस्ते जगत्तारिणि त्राहि दुर्गे ॥ १ ॥ नमस्ते जगच्चिन्त्यमानस्वरूपे नमस्ते महायोगिनि ज्ञानरूपे । नमस्ते नमस्ते सदानन्दरूपे नमस्ते० ॥ २ ॥ अनाथस्य दीनस्य तृष्णातुरस्य भयार्तस्य भीतस्य बद्धस्य जन्तोः । त्वमेका गतिर्देवि निस्तारकर्त्री नमस्ते० ॥ ३ ॥ अरण्ये रणे दारुणे शत्रुमध्येऽनले सागरे प्रान्तरे राजगेहे । त्वमेका गतिर्देवि निस्तारनौका नमस्ते० ॥ ४ ॥ अपारे महादुस्तरेऽत्यन्तघोरे विपत्सागरे मज्जतां देहभाजाम् । त्वमेका गतिर्देवि निस्तारहेतुर्नमस्ते० ॥ ५ ॥ नमश्चण्डिके चण्डदुर्दण्डलीलासमुत्खण्डिताखण्डिताशेषशत्रो । त्वमेका गतिर्देवि निस्तारबीजं नमस्ते० ॥ ६ ॥ त्वमेवाघभावाधृतासत्यवादीर्न जाताजितक्रोधनात्क्रोधनिष्ठा । इडा पिङ्गला त्वं सुषुम्णा च नाडी नमस्ते० ॥ ७ ॥

हरिहरविनुताऽगस्त्यपत्नीप्रदिष्टा हादिः काद्यर्णतत्त्वा सुरपतिवरदा कामराजप्रदिष्टा । दुष्टानां दानवानां मदभरहरणा दुःखहन्त्री बुधानां साम्राज्ञी चक्रराज्ञी प्रदिशतु कुशलं मह्यमोङ्काररूपा ॥ १५ ॥ श्रीमन्त्रार्थस्वरूपा श्रितजनदुरितध्वान्तहन्त्री शरण्या श्रौतस्मार्तक्रियाणामविकलफलदा फालनेत्रस्य दाराः । श्रीचक्रान्तर्निषण्णा गुहवरजननी दुष्टहन्त्री वरेण्या श्रीमत्सिंहासनेशी प्रदिशतु विपुलां कीर्तिमानन्दरूपा ॥ १६ ॥ श्रीचक्रवरसाम्राज्ञी श्रीमत्त्रिपुरसुन्दरी । श्रीगुहान्वयसौवर्णदीपिका दिशतु श्रियम् ॥ १७ ॥ इति श्रीमत्त्रिपुरसुन्दरीवेदसारस्तवः संपूर्णः ॥

## २७५. श्रेयस्करीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रेयस्करि श्रमनिवारिणि सिद्धविद्ये स्वानन्दपूर्णहृदये करुणातनो मे । चित्ते वस प्रियतमेन शिवेन सार्धं माङ्गल्यमातनु सदैव मुदैव मातः ॥ १ ॥ श्रेयस्करि श्रितजनोद्धरणैकदक्षे दाक्षायणि क्षपितपातकतूलराशे । शर्मण्यपादयुगले जलजप्रमोदे मित्रे त्रयीप्रसृमरे रमतां मनो मे ॥ २ ॥ श्रेयस्करि प्रणतपामरपारदानज्ञानप्रदानसरणिश्रितपादपीठे । श्रेयांसि सन्ति निखिलानि सुमङ्गलानि तत्रैव मे वसतु मानसराजहंसः ॥ ३ ॥ श्रेयस्करीति तव नाम गृणाति भक्त्या श्रेयांसि तस्य सदने च करी पुरस्तात् । किं किं न सिध्यति सुमङ्गलनाममालां धृत्वा सुखं स्वपिति शेषतनौ रमेशः ॥ ४ ॥ श्रेयस्करीति वरदेति दयापरेति वेदोदरेति विधिशङ्करपूजितेति । वाणीति शम्भुरमणीति च तारिणीति श्रीदेशिकेन्द्रकरुणेति गृणामि नित्यम् ॥ ५ ॥ श्रेयस्करि प्रकटमेव तवाभिधानं यत्रास्ति तत्र रविवत्प्रथमानवीर्यम् । ब्रह्मेन्द्ररुद्रमरुदादिगृहाणि

सौख्यैः पूर्णानि नाममहिमा प्रथितस्त्रिलोक्याम् ॥ ६ ॥ श्रेयस्करि प्रणतवत्सलता त्वयीति वाचं शृणुष्व सरलां सरसां च सत्याम् । भक्त्या नतोऽस्मि विनतोऽस्मि सुमङ्गले त्वत्पादाम्बुजे प्रणिहिते मयि सन्निधत्स्व ॥ ७ ॥ श्रेयस्करीचरणसेवनतत्परेण कृष्णेन भिक्षु-वपुषा रचितं पठेद्यः । तस्य प्रसीदति सुरारिविमर्दनीयमम्बा तनोति सदनेषु सुमङ्गलानि ॥ ८ ॥ यथामतिकृतस्तुतौ मुदमुपैति माता न किं यथाविभवदानतो मुदमुपैति पात्रं न किम् । भवानि तत्र संस्तुतिं विरचितुं न चाहं क्षमस्तथापि मुदमेष्यसि प्रदिशसीष्टमम्ब त्वरात् ॥ ९ ॥ इति श्रीमत्परमहंसश्रीकृष्णानंदसरस्वतीप्रणीतं श्रेयस्करीसुमङ्गलस्तोत्रं संपूर्णम् ॥

## २७६. दुर्गापदुद्धारस्तवराजः ।

श्रीगणेशाय नमः ॥ नमस्ते शरण्ये शिवे सानुकम्पे नमस्ते जगद्व्यापिके विश्वरूपे । नमस्ते जगद्वन्द्यपादारविन्दे नमस्ते जगत्तारिणि त्राहि दुर्गे ॥ १ ॥ नमस्ते जगच्चिन्त्यमानस्वरूपे नमस्ते महायोगिनि ज्ञानरूपे । नमस्ते नमस्ते सदानन्दरूपे नमस्ते० ॥ २ ॥ अनाथस्य दीनस्य तृष्णातुरस्य भयार्तस्य भीतस्य बद्धस्य जन्तोः । त्वमेका गतिर्देवि निस्तारकर्त्री नमस्ते० ॥ ३ ॥ अरण्ये रणे दारुणे शत्रुमध्येऽनले सागरे प्रान्तरे राजगेहे । त्वमेका गतिर्देवि निस्तारनौका नमस्ते० ॥ ४ ॥ अपारे महादुस्तरेऽत्यन्तघोरे विपत्सागरे मज्जतां देहभाजाम् । त्वमेका गतिर्देवि निस्तारहेतुर्नमस्ते० ॥ ५ ॥ नमश्चण्डिके चण्डदुर्दण्डलीलासमुत्खण्डिताखण्डिताशेषशत्रो । त्वमेका गतिर्देवि निस्तारबीजं नमस्ते० ॥ ६ ॥ त्वमेवाघभावाधृतासत्यवादीर्न जाताजित-क्रोधनात्क्रोधनिष्ठा । इडा पिङ्गला त्वं सुषुम्णा च नाडी नमस्ते० ॥ ७ ॥

नमो देवि दुर्गे शिवे भीमनादे सरस्वत्यरुन्धत्यमोघस्वरूपे। विभूतिः शची कालरात्रिः सतिः त्वं नमस्ते० ॥ ८ ॥ शरणमसि सुराणां सिद्धविद्याधराणां मुनिमनुजपशूनां दस्युभिस्त्रासितानाम्। नृपतिगृहगतानां व्याधिभिः पीडितानां त्वमसि शरणमेका देवि दुर्गे प्रसीद ॥ ९ ॥ इदं स्तोत्रं मया प्रोक्तमापदुद्धारहेतुकम्। त्रिसन्ध्यमेकसन्ध्यं वा पठनाद् घोरसङ्कटात् ॥ १० ॥ मुच्यते नात्र सन्देहो भुवि स्वर्गे रसातले। सर्वं वा श्लोकमेकं वा यः पठेद्भक्तिमान् सदा ॥ ११ ॥ स सर्वं दुष्कृतं त्यक्त्वा प्राप्नोति परमं पदम्। पठनादस्य देवेशि किं न सिध्यति भूतले ॥ १२ ॥ स्तवराजमिमं देवि संक्षेपात्कथितं मया ॥ १३ ॥ इति श्रीसिद्धेश्वरीतन्त्रे उमामहेश्वरसंवादे श्रीदुर्गापदुद्धारस्तवराजः संपूर्णः ॥

## २७७. वाग्वादिनीस्तोत्रम्।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीवाग्वादिनीमन्त्रस्य ब्रह्मा ऋषिः, देवीविजयागायत्री छंदः, वाग्वादिनी देवता, ॐ बीजम्, मौं शक्तिः ह्रीं कीलकम्, श्रीवाग्वादिनीदेवताप्रीत्यर्थे जपे विनियोगः। एतैर्न्यासं कृत्वा संविदपठनीयो मन्त्रं "ॐ वद वद ह्रीं वाग्वादिनीं मौं स्वाहा," इत्यनेन सप्तभिर्गृहीत्वा मंत्रं भक्षयेत्। अथवा 'ॐ जय जय विजय परब्रह्मस्वरूपिणि सर्वजनं मे वशमानय आनंदय जंभू स्वाहा' इत्यनेन वा जप्त्वा भक्षयेत्। अथवा स्वगृहीतमंत्रेण जपित्वा भक्षयेत्। अथानंतरतो देवीसमयास्तोत्रमुत्तमम्। यैः स्तुता सिद्धिदा मूली भक्षिता फलदा भवेत् ॥ १ ॥ संविदे ब्रह्मसंभूते ब्रह्मपुत्रि सदानघे। भैरवानंदप्रीत्यर्थं पवित्रा भव सर्वदा ॥ २ ॥ नमामि कामिनीं नाथलेखालंकृतकुण्डलाम्। भवानीं

भवसंतापनिर्वापणसुधानिधिम् ॥ ३ ॥ सिद्धिमूलिप्रिये देवि हीन-बोधप्रबोधिनि । राजप्रजावशंकरि कालकंठे त्रिशूलिनि ॥ ४ ॥ अज्ञाने-ऽनधीतेऽपि ज्ञानाग्निज्वालरूपिणि । आनंदाद्याहुतिः प्रीतिः सम्य-ग्ज्ञानं प्रयच्छ मे ॥ ५ ॥ दंडादिरूढपरिपूरितमोक्षभोगान् शुण्डक्रमेण मदनांचनकामिनीं ताम् । आराधयामि बहुशत्रुपराजयंतीं विश्वेश्वरीं त्रिभुवनां विजयादिदेवीम् ॥ ६ ॥ आनंदनंदिनीनंदे सदा वंदे पद-द्वयम् । उल्लासकदलीकंदे स्वच्छंदे बोधरूपिणि ॥ ७ ॥ कवयः कवितालहरीं कृते तत्त्वार्थदर्शनात् । आसदूरितदुरितनिलयं किं न करोति सा ॥ ८ ॥ संविदासवयोर्मध्ये संविदेव गरीयसी । भक्षिता भवनाशाय निर्गंधबोधरूपिणी ॥ ९ ॥ सुसंविच्छूलिनी देवी विजया संविदेश्वरी । वैष्णवी तुलसी तुंगा तेजोवल्ली रसेश्वरी ॥ १० ॥ वीरसूर्देवरला च वीरलक्ष्मीर्महेश्वरी । शमया मोहनं चैव सिद्ध-मूली महौषधी ॥ ११ ॥ मातुलानी ज्ञानरूपा सिद्धविद्या सरस्वती । यानि चैतानि नामानि सेवयेत्सिद्धमूलिकाम् ॥ १२ ॥ स प्राप्नोति परां विद्यां भुक्तिं मुक्तिं च वाञ्छितम् । पाण्डित्यं च कवित्वं च मंत्रसिद्धिं च विंदति ॥ १३ ॥ इति श्रीरुद्रयामलतंत्रे वाग्वादिनी-स्तोत्रं संपूर्णम् ॥

## २७८. मंत्रमातृकापुष्पमालास्तवः ।

श्रीगणेशाय नमः ॥ कल्लोलोल्लसितामृताब्धिलहरीमध्ये विराजन्म-णिद्वीपे कल्पकवाटिकापरिवृते कादम्बवाट्युज्ज्वले । रत्नस्तम्भसह-स्रनिर्मितसभामध्ये विमानोत्तमे चिन्तारत्नविनिर्मितं जननि ते सिंहासनं भावये ॥ १ ॥ एणाङ्कानलभानुमण्डललसच्छ्रीचक्रमध्ये स्थितां बालार्कद्युतिभासुरां करतलैः पाशाङ्कुशौ बिभ्रतीम् । चापं

बाणमपि प्रसन्नवदनां कौसुम्भवस्त्रान्वितां तां त्वां चन्द्रकलावतंस-
मुकुटां चारुस्मितां भावये ॥ २ ॥ ईशानादिपदं शिवैकफलदं
रत्नासनं ते शुभं पाद्यं कुङ्कुमचन्दनादिभरितैरर्घ्यं सरत्नाक्षतैः ।
शुद्धैराचमनीयकं तव जलैर्भक्त्या मया कल्पितं कारुण्यामृत-
वारिधे तदखिलं संतुष्टये कल्पताम् ॥ ३ ॥ लक्ष्ये योगिजनस्य
रक्षितजगज्जाले विशालेक्षणे प्रालेयाम्बुपटीरकुङ्कुमलसत्कर्पूर-
मिश्रोदकैः । गोक्षीरैरपि नारिकेलसलिलैः शुद्धोदकैर्मन्त्रितैः स्नानं
देवि धिया मयैतदखिलं संतुष्टये कल्पताम् ॥ ४ ॥ ह्रींकारा-
ङ्कितमन्त्रलक्षिततनो हेमाचलात्संचितै रत्नैरुज्वलमुत्तरीयसहितं
कौसुम्भवर्णांशुकम् । मुक्तासंततियज्ञसूत्रममलं सौवर्णतंतूद्भवं
दत्तं देवि धिया मयैतदखिलं संतुष्टये कल्पताम् ॥ ५ ॥
हंसैरप्यतिलोभनीयगमने हारावलीमुज्ज्वलां हिन्दोलद्युतिहीर-
पूरिततरे हेमाङ्गदे कङ्कणे । मञ्जीरौ मणिकुण्डले मुकुटमप्यर्धेन्दु-
चूडामणिं नासामौक्तिकमङ्गुलीयकटकौ काञ्चीमपि स्वीकुरु ॥ ६ ॥
सर्वाङ्गे घनसारकुङ्कुमघनश्रीगन्धपङ्काङ्कितं कस्तूरीतिलकं च फाल-
फलके गोरोचनापत्रकम् । गण्डादर्शनमण्डले नयनयोर्दिव्याञ्जनं
तेऽञ्चितं कंठाब्जे मृगनाभिपङ्कममलं त्वत्प्रीतये कल्पताम् ॥ ७ ॥
कह्लारोत्पलमल्लिकामरुबकैः सौवर्णपङ्केरुहैर्जातीचम्पकमालती-
वकुलकैर्मन्दारकुन्दादिभिः । केतक्या करवीरकैर्बहुविधैः क्लृप्ताः
स्रजोमालिकाः संकल्पेन समर्पयामि वरदे संतुष्टये गृह्यताम्
॥ ८ ॥ हन्तारं मदनस्य नन्दयसि यैरङ्गैरनङ्गोज्वलैर्यैर्भृङ्गावलि-
नीलकुन्तलभरैर्बध्नासि तस्याशयम् । तानीमानि तवाम्ब कोमलतरा-
ण्यामोदलीलागृहाण्यामोदाय दशाङ्गगुग्गुलुवृतैर्धूपैरहं धूपये ॥ ९ ॥
लक्ष्मीमुज्ज्वलयामि रत्ननिवहोद्भास्वत्तरे मन्दिरे मालारूपविलम्बि-

तैर्मणिमयस्तम्भेषु संभावितैः । चित्रैर्हाटकपुत्रिकाकरधृतैर्गव्यैर्घृतैर्वर्धितैर्दिव्यैर्दीपगणैर्धिया गिरिसुते संतुष्टये कल्पताम् ॥ १० ॥ ह्रींकारेश्वरि तप्तहाटककृतैः स्थालीसहस्रैर्भृतं दिव्यान्नं घृतसूपशाकभरितं चित्रान्नभेदं तथा । दुग्धान्नं मधुशर्करादधियुतं माणिक्यपात्रे स्थितं माषापूपसहस्रमम्ब सफलं नैवेद्यमावेदये ॥ ११ ॥ सच्छायैर्वरकेतकीदलरुचा ताम्बूलवल्लीदलैः पूगैर्भूरिगुणैः सुगन्धिमधुरैः कर्पूरखण्डोज्ज्वलैः । मुक्ताचूर्णविराजितैर्बहुविधैर्वक्त्राम्बुजामोदनैः पूर्णा रत्नकलाचिका तव मुदे न्यस्ता पुरस्तादुमे ॥ १२ ॥ कन्याभिः कमनीयकान्तिभिरलंकारामलारार्तिका पात्रे मौक्तिकचित्रपङ्क्तिविलसत्कर्पूरदीपावलिः । तत्तत्तालमृदङ्गगीतसहितं नृत्यत्पदाम्भोरुहं मन्त्राराधनपूर्वकं सुविहितं नीराजनं गृह्यताम् ॥ १३ ॥ लक्ष्मीर्मौक्तिकलक्षकल्पितसितच्छत्रं तु धत्ते रसादिन्द्राणी च रतिश्च चामरवरे धत्ते स्वयं भारती । वीणामेणविलोचनाः सुमनसां नृत्यन्ति तद्रागवद्भावैरांगिकसात्विकैः स्फुटरसं मातस्तदाकर्ण्यताम् ॥ १४ ॥ ह्रींकारत्रयसंपुटेन मनुनोपास्ये त्रयीमौलिभिर्वाक्यैर्लक्ष्यतनो तव स्तुतिविधौ को वा क्षमेताम्बिके । सँल्लापाः स्तुतयः प्रदक्षिणशतं संचार एवास्तु ते संवेशो मनसः सहस्रमखिलं त्वत्प्रीतये कल्पताम् ॥ १५ ॥ श्रीमंत्राक्षरमालया गिरिसुतां यः पूजयेच्चेतसा संध्यासु प्रतिवासरं सुनियतस्तस्यामलं स्यान्मनः । चित्ताम्भोरुहमण्डपे गिरिसुता नृत्तं विधत्ते रसाद्वाणी वक्त्रसरोरुहे जलधिजा गेहे जगन्मंगला ॥ १६ ॥ इति गिरिवरपुत्रीपादराजीवभूषाभुवनममलयन्ती सूक्तिसौरभ्यसारैः । शिवपदमकरन्दस्यन्दिनीयं निबद्धा मदयतु कविभृङ्गान्मातृकापुष्पमाला ॥ १७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकराचार्यकृतौ मंत्रमातृकापुष्पमालास्तवः संपूर्णः ॥

## २७९. चण्डीकुचपञ्चाशिकास्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रियं नौमि देवीं परां पारिजातां पदाम्भोजरेणूपसेवापराणाम् । यदाद्याक्षरस्याभिधेयेन शूली प्रलीढोऽपि मृत्युप्रजेता गरेण ॥ १ ॥ आशादासीभिरूर्ध्वं करविधृतचतुष्कोणभागाभखण्डैः खण्डैराढ्या पटानां विधुरविघटिता शुष्कतावासयेया । स्वात्मानाधः पतन्तीं सजवमसकृदाकर्षणक्लान्तिपङ्क्तिश्वासोच्छ्वासौघपूर्णा हिमगिरिदुहितुः पातु वोऽपूर्वकन्था ॥ २ ॥ आसीद्विरिञ्चिवरदा सुरसार्थतीर्थं तेजोमयी मखभुजामखिलास्ति शक्तिः । एवं भविष्यति पुरोऽपि पुरारिपत्नी त्रैकालिकं यदिति तन्मह आद्यमीडे ॥ ३ ॥ मध्ये पीयूषसिन्धोर्धनकुसुमलसत्कल्पवृक्षान्तराले दिव्ये मण्यन्तरीपे त्रिदशपरिवृढप्रौढगीर्वाणवर्ण्या । शर्वाणी पूर्णमण्याभरणरणरणत्पाणिनाभ्यर्णवाणीं तूर्णं चिन्तामणेर्मामपि सदसि सदाश्लिष्य सिंहासनेऽस्ति ॥ ४ ॥ वन्दारुवृन्दारकसुन्दरीणां सीमन्तभृङ्गाञ्चितपादपद्मा । संस्तोतृपद्मापतिपद्मजन्मस्वाराट्कपिकाल्याभ्रगुणा विभाति ॥ ५ ॥ यत्रोदग्रहरिन्मणिप्रविलसत्सौधाङ्कुराणां गणैरुद्गीर्णैर्निजगर्भतश्च चणकैः साम्यं गतानां नवैः । मुक्तानाममृतद्युतेरपि भरं वीक्ष्य स्थितानां हृदि भ्रान्त्याखू रभसोत्पपात हृदये सारङ्ग एतन्मुधा ॥ ६ ॥ पादारविन्दस्य पुरंदरोऽपि सेवां विधाताऽस्म्यहमेव देव्याः । नार्हस्त्वमस्मिन्निति वज्रपाणिर्व्याक्षिप्यते यत्र गणैर्विचित्रम् ॥ ७ ॥ बिडौजसि पदाम्बुजे निबिडतेजसि त्र्यम्बकस्त्रियाः प्रणतिमीप्सितप्रतिपदासये निर्जरैः । हरावपि हरे विधौ प्रणतिकर्मकार्मीणके जयाम्ब जगदम्बिके जय जयेति

यत्र ध्वनिः ॥ ८ ॥ तत्रैकदा निखिललोकचरित्रविद्भिः संप्रार्थिता भगवती प्रणिधीनवर्गैः। विज्ञाप्यमस्ति किमपीति रहस्यमस्मदृग्यायिनः कविवरस्य कृतेर्विचित्रम् ॥ ९ ॥ किं कुङ्कुमोऽस्ति कलितामरभोज्यवीचीसारप्रसारवचसां प्रमुखः कवीनाम् । यत्काव्यमन्यकवितां विधुनोति जीर्णां जायामिवाभिनवमुग्धवधूस्तनश्रीः ॥ १० ॥ असह्यभरसह्यभूधरमणौ महाराष्ट्रके महाबलजटाढ्यनिष्प्रथितकृष्णवेणी धुनी । तदम्बुलहरीप्लुता जयति वाजिसंज्ञा पुरी स लक्ष्मणकवीश्वरो वसति तत्र वृत्त्या स्वया ॥ ११ ॥ वेणीमाधव एव यस्य जनकः प्रख्यातकीर्तिस्तथा राधा यज्जननी सती गुणवती रामोऽपि यत्सोदरः । अत्रिर्गोत्रपुमांश्च यस्य कविता चेतोहरा सामगोपाह्वो यः किल राजते चरणयोर्देव्या भवान्याः स्वयम् ॥ १२ ॥ यस्य गुरुर्यो जातो दण्डकराभिन्नपर्वतान्वयतः । रघुनाथमन्दराद्रिर्मथितुं तर्कादिशास्त्रचयजलधिम् ॥ १३ ॥ स त्वत्पदपङ्कजस्फुरदमन्दानन्दसंदोहदस्यन्दन्मञ्जुमरन्दसुन्दरमधुव्यालोलरोलम्बकः । सत्पोतेतरताविनीतवनितासंभोगशून्यः पुनर्योऽसौ संप्रति कथ्यते मम गुणप्रौढिप्रबद्धात्मकः ॥ १४ ॥ तस्यैव चेत्किमपि काव्यमकव्ययेच्छोरस्मत्सभापरिसरे पठनीयमस्ति । यन्मत्पदाम्बुजमधुप्रतिषेचनेऽस्य मृद्वीकयापि न कयापि न मृद्विकासः ॥ १५ ॥ श्रुत्वादेशं दूतवर्गैर्भवान्या न्यासान्धन्यान्वीक्ष्य वाचः कवेस्तान् । न्यस्तो मूर्धा स्वामिनीपादपद्मे कर्त्रैत्युक्तं तत्कृतेर्यत्कृतेऽत्र ॥ १६ ॥ सावधाना ततो देवी काव्यश्रवणकर्मणि । जातेत्यालोच्य सहगवर्गैः काव्यं प्रवर्ण्यते ॥ १७ ॥ यद्यपि पदनुतिरादौ कार्या मातुस्तथापि विश्वस्य । मुख्य-

मिति स्तनपानं लक्ष्मणबालेन तत्स्तुतिर्विहिता ॥ १८ ॥ प्रालेयशैलजनुषः सुहिरण्यवल्ल्या गौर्याः पयोधरविचित्रफलं पिबामि। यत्स्पर्शनादपि बभूव स शूलिनोऽपि मृत्युंजयत्वविभवैकपदेऽभिषेकः ॥ १९ ॥ कल्याणावलिमातनोतु नितरां कर्पूरपूराधिकप्रालेयं तुहिनालिशैलदुहितुस्तुङ्गं तदङ्गं हृदः। येनाकारि पुरारिभालनयनज्वालाकरालावलीबाढोल्लीढतनुस्तदीयहृदि सोऽनङ्गोऽपि रङ्गे नटः ॥ २० ॥ आजीवं तदुपास्महेऽद्रिदुहितुः कर्पूरगौरं कुचद्वन्द्वं नीलगलं सुचन्दनयुतं तत्प्राङ्मुखेन्द्वङ्कितम्। यद्वीक्ष्यैव ममर्द किं नवमिदं जीवत्यशेषे मयि प्रारूढं शिवयुग्ममन्यदबलाहृन्मर्मणीतीर्ष्यया ॥ २१ ॥ प्रत्यूहावलिमालुनातु दयया यश्चार्धनारीकुचप्रान्तोत्तुङ्गपटीरपङ्कमदनीमीनैकमुद्राङ्कुरः। यं कृत्वा स्वयमेव मन्मथरिपुः पाणिश्रितस्वेदतो यातः सात्त्विकतां हि तत्कज इति ध्यात्वा स्मरार्तोऽभवत् ॥ २२ ॥ शर्वाणीकुचकूलमूलविलसत्कर्पूरकस्तूरिकाकाश्मीरत्रितयावलेपरचनाचातुर्यचर्याव्रतात्। यामुद्दिश्य महेशमानसमहाहंसः प्रयागस्थिता वेण्येवेत्यवधारयन्निव ममज्जानन्यवृत्तिश्चिरम् ॥ २३ ॥ नित्यं पायादपायाज्जगदिह तु शरच्चन्द्रगौरप्रभासौ गौर्या वक्षोजयुग्मद्वयशिखरचरत्तारहीरालिमाला। चण्ड्या मे नाथचेतोविहरणनिपुणेतीर्ष्यया तत्र बद्धां गङ्गां निश्चित्य भर्गः करमपि च ददौ यत्पदे मोक्षकामः ॥ २४ ॥ नुमोऽपर्णारामस्थलहृदयकासारतटगप्रवल्गद्वक्षोजच्छलमिलितचक्राह्वयुगलम्। दरालोकाच्छंभोः शिशिरशशिरेखानखगता स्मरन्ती सापत्न्यं व्यथयति नितान्तं यदिह सा ॥ २५ ॥ वन्दे तत्कुसुमायुधान्तकवधूतुङ्गस्तनाब्जद्वयं दुग्धामन्दमरन्दमन्दिरमिदं चूचालिलीढं परम्। नित्यास्येन्दुविकासनान्मुकुलितं षड्वक्त्रवक्त्राम्बुजैः पीतं किं किमिती-

श्वरस्य मनसो येनाभवद्विस्मयः ॥ २६ ॥ मल्लीस्रक्फणिभोग-
भूषणमणिश्रेणीविदूरोल्लसन्मैनाकाचलसोदरी कुचरसाधारद्वयी
मञ्जुला । यस्याः स्पर्शनतस्त्रिलोचनमनोमानव्यपायोऽभवत्पायात्सा
निखिलां हि विष्टपलतां संसारझञ्झानिलात् ॥ २७ ॥ तुषार-
गिरिकन्यकाकुचतटीपटीराटवी विपाटयतु कङ्कटोद्भवकठोरतापं
हि सा । यदीयदरदर्शनादपि गरप्रलीढो हरः सुखेन घनसार-
विस्मररिपुर्महोग्रः शिवः ॥ २८ ॥ रचयतु शिवं वक्षोजन्मद्वयं
द्रुहिणोज्ज्वलत्कनककलशत्विड्वीजं तन्निशुम्भरिपोश्चिरम् । तदपि
च मुहुर्दंशं दंशं कपालिकरोच्छ्रितप्रखरनखरप्राञ्चच्चन्द्रोदयोऽपि
भवत्यहो ॥ २९ ॥ दूरीकरोतु दुरितानि पुरारिदारवक्षोजशैलमिथुनं
जितमन्दराद्रि । येनाभवद्भवमनोऽर्णवतः प्रमोदपीयूषमत्र हुतमन्म-
थजीवनाय ॥ ३० ॥ अपारां संपत्तिं दिशतु कुचलक्षितिधरः
समुत्तुङ्गस्थानं सुमनस उमे ते मम चिरम् । यदीये मूर्ध्नि
श्रीगलकरनखालिद्युतिभरस्फुरद्गङ्गाभङ्गा इह हि विहरन्त्येव सततम्
॥ ३१ ॥ तं कासरासुरविमर्दसमुत्थशोणशोणार्द्रशोणितकणं स्तन-
मम्बिकायाः । वन्देऽमरेन्द्रकरिणः कृतशिल्पचित्रं यच्छंभुहृद्यपि
कटं स्मरणीबभूव ॥ ३२ ॥ उद्दामद्विपकुम्भदर्पदमनं प्रालेयशैलाङ्ग-
जावक्षोजद्वयमत्र भद्रमनिशं धत्तां ममाप्राकृतम् । यच्छ्रीकण्ठ-
कठोरकोटिनखरश्रेणीसृणिस्थापनप्रद्योत...थुभाजनं समभवत्पुष्पायु-
धायोधने ॥ ३३ ॥ सौवर्णाचलसानुसंमितकुचद्वन्द्वं भवान्याः
स्तुमः सेनानीस्फुरितद्विवेदरसनासंसर्पमच्छायितम् । ईशो नैज-
करोरुभूषणगणं मत्वेति भूयस्तरामादातुं यतते यदीयशिखर-
प्राग्भारपाणिभ्रमः ॥ ३४ ॥ मालूरद्रुफलप्रदर्पशमनं प्रालेयभूमीधर-
प्रत्युप्तप्रतिपक्षबीजमपरं दुर्गास्तनाद्रिद्वयम् । यद्भोगैकदृशः पिशाच-

नृपतेर्वक्षःस्थले जाग्रती चित्रा कापि विसंस्थुला नमत तत्कण्ठूर-खण्डाभवत् ॥ ३५ ॥ दिग्दन्तावलकुम्भमौक्तिकमणिश्रेणीकमेणी-दृशः शर्वाण्याः कुचगुच्छयुग्ममवतात्संसारतापाद्द्रुतम् । यस्योपान्त-समुत्पतत्पशुपतिव्यालोलसाभिस्फुरल्लीलापाङ्गतरङ्गभृङ्गसुभगैः शृङ्गा-ररङ्गायियत् ॥ ३६ ॥ स्मराराते: स्वान्तप्रकटकुमुदं मोदयति यो हृदाकाशस्थस्तद्दहननयनाब्जं मुकुलयन् । दधच्चूचं लक्ष्म प्रकटयति चक्राह्वयुगलं निहन्त्वद्रेः कन्याकुचविधुरघध्वान्तपटलीम् ॥ ३७ ॥ प्रालेयाचलकन्यकाकुचतटीपाटीरमोट्टायितां पापाटोपकठोर-कष्टपटलान्यापाटयन्तीं स्तुमः । यत्रापीनपिनाकपाणिकठिनोरःपीठ-कण्ठोल्लुठद्व्यालालीवलयावलेखमकरोदालिङ्गनेऽन्योन्यतः ॥ ३८ ॥ मातः पर्यभिवादये सुरपुरोद्यानान्तरालोल्लसद्भूजन्यप्रसवासवावसथ-मुद्वक्षोजकोषद्वयम् । यस्यान्तः परमेश्वरस्य करतः संमर्दनव्यापृतौ भूतिः संक्षरति क्षपापरिवृढार्भप्रेढ्यचूडामणेः ॥ ३९ ॥ परिधी-महिते कुचस्थलीं मणिकान्तिद्युनदीनभःस्थलीम् । शिवपाणि-नखेन्दुमण्डलीं निजमौलौ विनिधाय या स्थिता ॥ ४० ॥ मातु-र्नौमि पयोधरौ त्रिजगतामारभकुंभौ शुभौ भावत्कौ भुवि तौ भवप्रियतमे भाव्यक्षतौ भासुरौ । यौ श्रीकण्ठकरप्रवाललतिकामूर्ध-स्फुरत्पल्लवौ षड्वक्त्रद्विरदाननाननवनोज्जन्माभिलीढौ चिरम् ॥ ४१ ॥ वक्षःपीठे पटाढ्यं स्मितविबुधधुनीनिर्झरैश्चाभिषिक्तं मातर्वक्षोजराजं श्रितपविमणिरुक्चामरं ते नमामि । छत्रं क्षीरं पिपासोर्निटिलशशि-कलां यत्र पुत्रस्य मत्वा दुर्गाधीशो महेशः करमपि स ददौ तत्स्थ-मारामिनुन्नः ॥ ४२ ॥ पटासक्त वक्षोजनिंयुगमपूर्वं गिरिपतेः सुकन्ये मन्ये ते नवसुभगसारिद्वयमिति । यदुत्तुङ्गोत्सङ्गे मृगधरधराक्षानु-सरणं कराब्जव्यापारैः सममनिशमुन्मूलतितराम् ॥ ४३ ॥ धयत्येतौ

धाता जगदखिलमेतद्रचयितुं तथा पातुं विष्णुः पिबति हरजाये तव कुचौ। इति प्रेक्षं प्रेक्षं स्वयमपि हरो मर्दयति तौ जगत्संमर्दायाभ्यसति किमु विद्यामभिनवाम् ॥ ४४ ॥ भवेतां क्षेमाय स्मरहरवधूरोजकरिणौ ययोरेका रोमावलिकपटशुण्डाद्भुतकरी । महादेवस्वान्तप्रचुरतरकासारगतया यया तद्व्यापाराम्बुजमपहृतं क्रीडनविधौ ॥ ४५ ॥ उदञ्चन्तौ मातस्तव कुचहरी हृद्दरिमुखात्कुरङ्गानां तारौ शिवहृदटवीसीमनिहताम् । निहत्यैनःश्रेणीमददुरधिरोहद्द्विपपतिं प्रकुर्वाणौ मुक्तावलिमयमिदं यौ त्रिभुवनम् ॥ ४६ ॥ तवेमौ वक्षोजौ वृजिनहरणौ दिव्यहरिणावहं ध्याये मातर्दितिजतृणराश्यश्नरवरौ । विरूपाक्षस्वान्तोपवनवरयात्रा चिरतरं ययोरस्ति स्माराभिधशबरधाटीव्यतिकरे ॥ ४७ ॥ दृढं कूर्पासेन प्रतिपिहितमुर्वीधरसुते भवानि त्वद्वक्षोरुहयुगलमीडे तदनिशम् । स्मरन्तं वैरं तं स्मरमपरमासाद्य सुहृदं स्थितं संलीयेति व्यथयति हरो यत्पटगृहे ॥ ४८ ॥ वक्षस्तरक्षुवरसंस्थमुमे कुचं ते तं नीलकण्ठपरिलिङ्गितभोगमीडे । यन्नेश्वरस्य मनसस्तव रूपमेवेत्याकल्पकल्पनमभूत् प्रविलोकनेन ॥ ४९ ॥ घनं वक्षोजं ते नवनवहिरण्याकृतिधरं नुमस्तं प्रह्लादावलिजनकमद्रीश्वरसुते । यदीयाभोगेऽस्मिन्ननुपमनखालिव्रणततिः स्फुरत्याकल्पं श्रीगलकपटकण्ठीरवकरैः ॥ ५० ॥ वर्धिष्णुर्बलिमस्तकस्थितपदो वक्षःकृतश्रीः सुखं कुर्यान्नस्तुहिनावनीधरसुते वक्षोजविष्णुस्तव। विष्णुः शंभुहृदीति वाक्यममलं सत्यं विधातुं स्वयं यस्तूर्णं कृतसंस्थितिर्विजयते तस्यैव हृन्मन्दिरे ॥ ५१ ॥ मनस्तिमिरशान्तये प्रतिपदं कुचार्कद्वयं भवानि तव चिन्त्यते हृदयदेववर्त्मस्थितम् । विकासयति संततं शिवमनःसरोजं परं यदेव दिवसे कथं व्यथयतीह कोकानहो ॥ ५२ ॥ स्मरान्तकरवल्लभे तव पयोधरश्रीफलद्वयं स्मरति

यो जनः स भवतीह सच्छ्रीफलः । इतीव किल बोधयन् स्मृतभव-त्कुचश्रीः स्वयं समुद्रमथने पपावपि गरं हरः श्रीफलः ॥ ५३ ॥ स्मृता तव कुचद्वयी तुहिनशैलबाले हरत्यसावघभरं भवप्रियतमे नृभिः कैरपि । इतीव हृदि तां दधौ विधिशिरोविभेदोद्भवं प्रचण्डवृजिना-वलीकवलितः कपाली ध्रुवम् ॥ ५४ ॥ उच्चैरुच्चैः पदं या नयति गुरुतरं वर्धयत्येव भोगं भूभृत्सत्तां तनोति क्षितिधरतनये त्वत्कुच-श्रीः श्रिये नः । यद्वीक्षाभिः कपर्दी प्रथमपरिवृढो भैक्ष्यवृत्तिः कपाली सोऽपि श्रीमान्विचित्रं सपदि च जगतामीश्वरोऽभूत्सुखेन ॥ ५५ ॥ वक्षःस्थं दितिजरिपोस्तवाभिवन्दे तारुण्योदधिजसुरोज-कौस्तुभं तम् । यत्स्थाने स्मरजनकं महो हि किंचित्संमोहं सपदि महेशितुश्चकार ॥ ५६ ॥ तारुण्याम्भोधिजन्मा दलितसुमकरः कामदस्ते प्रकामं कामं यच्छत्वपर्णे पृथुहृदयजनुः पारिजातद्रुजातः । दैत्यव्रातातपघ्नः पदगतजगतीं छायया स्वै रसौघै रक्षंस्तृप्तिं च कुर्वन्भवहृदयमहानन्दने नन्दते यः ॥ ५७ ॥ मातः स्तन्यमधु स्तनस्थमनघं यच्छत्वजस्रं तव प्रौढोल्लासमखण्डितं पशुजनुःपाशच्छिदं सुन्दरि । यत्पानं गणपे प्रकुर्वति शिशौ चेतोदृशौ पश्यतः शंभो-र्मुग्धमभूद्बभूवतुरहो व्याघूर्णिते च क्षणात् ॥ ५८ ॥ शैलेलापालबाले नुम इह विबुधप्राणजीवातुमूर्तिं क्षीरोदन्वत्प्रभूतं भवगदहसुरोज-न्मधन्वन्तरिं ते । यस्योपास्तिप्रभावात्पितृगहनगतो वासुकिं कालकूटं कण्ठे बिभ्रच्च शूली नयनगहुतभुक्सोऽपि मृत्युंजयोऽभूत् ॥ ५९ ॥ चञ्चन्नीलाभचोलीसलिलदपटलीलीनमम्लानमालालोलाल्पाङ्कं दधानं धरणिधरसुते नौमि ते तं कुचेन्दुम् । यस्यालोकैर्विनिद्रं भवति भवमनःकैरवं हर्षितं च क्षीरासारामृतौघं रसवदनमुखैः पातु-कामैश्चकोरैः ॥ ६० ॥ क्षीराशसंसकलकामदमावके ते वक्षोजनुः

सुरभिरूपसकं निहन्तु । यत्पातृषण्मुखगजास्यहरीन्द्रमुख्या वत्सा रसस्थरसनावसनैर्विरेजुः ॥ ६१ ॥ विचित्रालेखाढ्यं समरदसुचातुर्यकलितं दधे मातस्तं ते हृदि हृदयजैरावणमहम् । यदीयाञ्चद्रोमावलिकपटशुण्डा शिवमनःसरोजं तच्चक्षुः सरसि परिविश्यैव हरति ॥ ६२ ॥ भगवति तव वक्षोजन्मरम्भास्वरूपं शुकहृदि सुफलस्य भ्रान्तिदं दर्शनेन । दिशतु मम शिवं तन्नृत्यतीशस्य चेतः कमलमिव सुधर्मा दिव्यदेशे चिरं यत् ॥ ६३ ॥ उदग्रग्रीवं तेऽविरलमसृणं नौमि गिरिजे सुवृत्तं हीरोद्यन्मणिरुचमुरोजेन्द्रतुरगम् । पयः पातुं श्लिष्टद्विरदमुखषड्वक्त्रवदनान्यपश्यत्सप्तेशो गणपतिपिता यत्र सहसा ॥ ६४ ॥ दितिजजनविनाशकं नमस्ते भगवति कुचकूटकालकूटम् । यदिह हृदि हरस्य कण्ठलग्नं किमिति मदन्यदितीर्ष्ययावतस्थे ॥ ६५ ॥ कर्पूरकुङ्कुमसुनाभिजचित्रलेखं मन्ये कुचं वलयितं जननीन्द्रचापम् । यस्योद्भवे स्मररिपोः प्रववर्ष शंभोरानन्दजाश्रुसलिलं नयनाम्बुवाहः ॥ ६६ ॥ शर्वाणि ते तरुणिमोद्गमसिन्धुजातं मन्ये कुचं दरमहं वृजिनावलिघ्नम् । यं कुर्वतो निजकरे शशिशेखरस्य जातः स्मरैकजनकत्वपदेऽभिषेकः ॥ ६७ ॥ धराधरसुते सुतत्रिदशपेयमाशास्महे तव स्तनजनुःसुधारसमसारसंसारहम् । स्मरामि नयनोज्ज्वलज्ज्वलनजालदग्धोऽप्यसावनङ्ग इह यत्पदे कृतपदेन संजीवितः ॥ ६८ ॥ अलमलममलोहैः श्लोकजालैः कवेस्तैर्यदिदमखिलमेतैः क्रीतमेवास्मदीयम् । पुनरपि यदि चैवं वर्ण्यते तर्ह्यहं स्यां तदपि भवतु चेत्किं पारितोषीयमस्य ॥ ६९ ॥ इत्याकर्ण्य वचो विचार्य च चमत्काराञ्चितं चेतसि श्रीदेव्याश्चकिताः प्रभोः प्रणिधयश्चक्रुस्तथा तैः परम् । भूयः किंचिदुदञ्चितस्तबकया वाचेदमन्विष्यते यच्चोक्तं

किल पारितोषिकमिति स्यात्किं तदुक्तं वद ॥ ७० ॥ स्तोत्रं गृहीतमनघं स्तनपाललक्ष्म्या शुल्कं मदीयमखिलं हि मयास्य दत्त्वा । शिष्टाहमस्मि मदभेदमनर्घमेतं दास्यामि तस्य परितोषणिकं सुखेन ॥ ७१ ॥ एतदेव कविराजमानसे काङ्क्षितं लसति संततं किल । अन्यदेकमपि दीयते स्वतः श्रूयतामनुचरेश्वराः स्फुटम् ॥ ७२ ॥ इति स्तनघटस्तवं पठति यस्तु चण्ड्या मम प्रसन्नहृदयः प्रियो भवति मे सदा सूनुवत् । कविर्भवति भूमिपस्तुतवचःप्रपञ्चः क्षितौ लभेत किल वाञ्छितं सहृदि सुन्दरीणां स्मरः ॥ ७३ ॥ मदीयचरणाम्बुजे भवति भक्तिभाजां प्रभुः क्षितीशमुकुटस्थित-प्रसवपूज्यपादाम्बुजः । अनेकनवपद्मिनीस्तनगिरीन्द्रकान्तिच्छटा-जटालहृदयान्तरः सदसि संस्थितो राजते ॥ ७४ ॥ यः श्रद्धया मम घनस्तनकुम्भलक्ष्म्याः स्तोत्रं पठेच्च किल संश्रृणुयात्सलोकः । गीर्वाणवामनयनानयनारविन्दजालप्रभासरणिकज्जलतामुपैति ॥ ७५ ॥ पृथिव्यां भूपालो भवति नववामोरुनयनप्रफुल्लाम्भोजन्मद्युमणिरपि वाचा सुरगुरुः । निरस्तप्रोचण्डाखिलरिपुगणो मत्कुचतटीस्तवं कुर्वन्नित्यं जयति निजलक्ष्म्यापि धनदम् ॥ ७६ ॥ यश्चित्ते मम कुच-संस्तवं दधाति प्रावीण्यं सकलकलासु सोऽयमेति । आम्नायस्मरणम-पीह मामकीने पादाम्भोरुहयुगले लभेत भक्तिम् ॥ ७७ ॥ रमापि सदने सदा कृतपदा मुदा दासवद्रिपुर्भवति मित्रवद्युवतिसंगमो मोक्षवत् । अवागपि कवीशवद्भवति पातकं पुण्यवद्यशोभिर-मला दिशो दश भवन्ति यस्तं पठेत् ॥ ७८ ॥ चण्डीकुचपञ्चा-शत्संज्ञमिमं यः स्तवं नवं पठति । स नरो न पुनर्जनुषे भवति हि निःश्रेयसाय मे दयया ॥ ७९ ॥ तथाऽस्तु किल तत्परं तव जयन्तु मातः प्रभो पदाम्बुजमधुच्छदाः कविवरस्य मौलौ वरम् । यतो

हि कवितामृतं पिबति यः स मुक्तः श्रुतस्ततः स भवता न किं जगति मुक्तिकान्तापतिः ॥ ८० ॥ इत्युक्तवत्यनुचरेन्द्रगणे पुरस्तादम्बापदाम्बुजनिता मकरन्दधारा । या स्यन्दिता शिरसि मे कविलक्ष्मणस्य स्वप्नोत्थितस्य तु पुनातु पुनस्त्रिलोकीम् ॥ ८१ ॥ यावच्छिवार्धगतमस्ति वपुस्त्वदीयं यावत्त्वदङ्घ्रिकमलं च पुनाति विश्वम् । तावत्तवाम्ब चरणाम्बुजयोर्निपत्य याचे त्वहं किमपि यः शयनोत्थितस्त्वाम् ॥ ८२ ॥ वाक्कायचित्तप्रकृतिस्वभावबुद्ध्यात्मभिः सदसतोरपि संगमेन । यद्यत्कृतं यदपि भाव्यमशेषमातर्यद्यत्करोम्यखिलमस्तु तवार्पणं तत् ॥ ८३ ॥ इति श्रीमदत्रिगोत्रमाणिक्यसामगोपनामकवेणीमाधवाचार्यसुत–रसालंकारपारावारपारीणलक्ष्मणाचार्यकृता श्रीचण्डीकुचपञ्चाशिकास्तोत्रं संपूर्णम् ॥

## २८०. महामारीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ देव्युवाच । पुरा ब्रह्मा तु मां स्पृष्ट्वा समाहूयाब्रवीद्वचः । शृणु मे वचनं पुत्रि कुरुष्वाद्याथ सादरम् ॥ १ ॥ कलौ जना दुराचारा राजानश्च तथाविधाः । अतो गत्वा भुवं देवि मृत्युरूपा भवाशु च ॥ २ ॥ परद्रव्यापहर्तारः परस्त्रीनिरताः सदा । देवस्वहरणे सक्ता ब्रह्मस्वहरणे नृप ॥ ३ ॥ तेषां दोषवशात्त्वं तु जनान् संहर नित्यशः । ब्रह्मणैवं समादिष्टा इन्द्राद्यैः सुरसत्तमैः ॥ ४ ॥ भुवं समागता तत्र जनाञ्ज्ञात्वाथ पापिनः । राज्ञो दोषान्पुरस्कृत्य ग्रामे ग्रामे वसाम्यहम् । तत्रापि पापिनो हत्वा पुनर्ग्रामान्तरं भजे ॥ ५ ॥ एवं देशानटित्वाऽहं सर्वान्संहृत्य वै जनान् । पुनर्गच्छामि सदनं ब्रह्मणः परमेष्ठिनः ॥ ६ ॥ एवं मदागमं ज्ञात्वा बुद्धिमान्पुण्यकृन्नरः । विचार्य शास्त्रतो नित्यं जागरूको भवेदलम् ॥ ७ ॥ पतन्ति मूषिका यत्र

नृत्यन्ति विरमन्ति च । तद्गृहं तत्क्षणं त्यक्त्वा सकुटुम्बो वने विशेत् ॥ ८ ॥ तत्र शान्तिं प्रकुर्वीत महादेव्याः समीरिताम् । जपित्वा च महामन्त्रं पठित्वा स्तोत्रमुत्तमम् ॥९॥ "ॐ नमो भगवति महामारिके मृत्युरूपिणि सकुटुम्बं मामव स्वाहा ।" वने जलाशयं गत्वा ऊर्ध्वबाहुरधोमुखः । वीरासने चोपविश्य जपेन्मन्त्रं सहस्रशः ॥ १० ॥ संस्थाप्य प्रतिमां तत्र धूपदीपोपहारकैः । संपूज्य विधिवत्पश्चाज्जुहुयात्प्रत्यहं नरः ॥ ११ ॥ हरिद्राचूर्णमिश्रेण चित्रान्नेनैव संयुतः । समिद्भिः खदिरैर्भक्त्या ब्राह्मणैश्च समन्वितः ॥ १२ ॥ पत्नीपुत्रात्मभृत्यैश्च जुहुयादनुवासरम् । होमान्ते च पठेन्नित्यं स्तोत्रमेतज्जितेन्द्रियः ॥ १३ ॥ नमो देवि महादेवि सर्वशोकवशंकरि । सर्वदा सर्वतो मह्यं कृपां कुरु कृपामयि ॥ १४ ॥ मेरौ कैलासशिखरे हेमाद्रौ गन्धमादने । नित्यप्रियकृतावासे मद्यमांसबलिप्रिये ॥ १५ ॥ महासैन्यसमायुक्ते सर्वप्राणविहिंसके । सर्वाभिचारिके देवि सर्वं त्वं रक्ष सर्वदा ॥ १६ ॥ यत्र कुत्र स्थले वापि यस्मिन् कस्मिन् यदा तदा । रक्ष मां रक्ष मां देवि सपुत्रपशुभृत्यकम् ॥ १७ ॥ माङ्गल्यं मङ्गलं देहि महामङ्गलदायिनि । लोकानामभये सर्वमङ्गले मङ्गलप्रिये ॥ १८ ॥ इति स्तुत्वा महादेवीं भक्तिभावेन संयुतः । भुञ्जीत स्वजनैर्युक्तो देवीं तां मनसा स्मरन् ॥ १९ ॥ यदा स्वगृहचैत्येषु ध्वाङ्क्षरावो भविष्यति । काकशान्तिं ततः कृत्वा गृहं गन्तुमुपक्रमेत् ॥ २० ॥ सुमुहूर्ते सुनक्षत्रे स्वलंकृत्य ततो गृहम् । ब्राह्मणैर्बन्धुभिः सार्धं संविशेद्गृहमात्मनः ॥ २१ ॥ स्वस्तिवाचनविप्रेभ्यः शान्तिसूक्तोक्तिपूर्वकम् । दक्षिणां च हिरण्यादिं दद्याच्छाठ्यविवर्जितः ॥ २२ ॥ ब्राह्मणान्भोजयित्वा च देवीं तां प्रार्थयेद्गृहे । गच्छ गच्छ महादेवि स्वस्थानं

मङ्गलं कुरु ॥ २३ ॥ एवं कृत्यविधानेन मारिकाशान्तिरुत्तमा । जायते नात्र संदेहः सत्यं सत्यं समीरितम् ॥ २४ ॥ इत्येतत्कथितं देव्या देवेभ्यः स्वात्मसंभवम् । माहात्म्यं पठितं येन सोऽपि माङ्गल्यमाप्नुयात् ॥ २५ ॥ लिखितं पुस्तकं यस्य गृहे तिष्ठति सर्वदा । तस्य मारीभयं नास्ति सत्यं सत्यं मयोदितम् ॥ २६ ॥ पुस्तकं पूजयेद्यस्तु श्रद्धया परया सदा । सोऽपि माङ्गल्यमाप्नोति इहामुत्र परां गतिम् ॥ २७ ॥ सर्वं त्यक्त्वा साधयेत देवीं यत्नैर्धनैरपि । स्तोष्यन्ति परया भक्त्या सर्वकामार्थसिद्धये ॥ २८ ॥ बिडाला यत्र नश्यन्ति यत्र नश्यन्ति मूषिकाः । स्थानं तच्च परित्यज्य स्थानं शून्यं च कारयेत् ॥ २९ ॥ इति श्रीदेवीपुराणे श्रीमहामारिकास्तोत्रं संपूर्णम् ॥

## २८१. त्रिपुरसुन्दरीमानसिकोपचारपूजास्तोत्रम् ।

श्रीगणेशाय नमः ॥ मम न भजनशक्तिः पादयोस्ते न भक्तिर्न च विषयविरक्तिर्ध्यानयोगे न सक्तिः । इति मनसि सदाऽहं चिन्तयन्नाद्यशक्ते रुचिरवचनपुष्पैरर्चनं संचिनोमि ॥ १ ॥ व्याप्तं हाटकविग्रहैर्जलचरैरारूढदेवव्रजैः पोतैराकुलितान्तरं मणिधरैर्भूमीधरैर्भूषितम् । आरक्तामृतसिन्धुमुद्धरचलद्वीचीचयव्याकुलव्योमानं परिचिन्त्य संततमहो चेतः कृतार्थीभव ॥ २ ॥ तस्मिन्नुज्ज्वलरत्नजालविलसत्कान्तिच्छटाभिः स्फुटं कुर्वाणं वियदिन्द्रचापनिचयैराच्छादितं सर्वतः । उच्चैः शृङ्गनिषण्णदिव्यवनितावृन्दाननप्रोल्लसद्गीताकर्णननिश्चलाखिलमृगं द्वीपं नमस्कुर्महे ॥ ३ ॥ जातीचम्पकपाटलादिसुमनःसौरभ्यसंभावितं ह्रींकारध्वनिकण्ठकोकिलकुहूप्रोल्लासिचूतद्रुमम् । आविर्भूतसुगन्धिचन्दनवनं दृष्टिप्रियं नन्दनं चञ्चच्चञ्चलचञ्चरीकचटुलं चेतश्चिरं चिन्तय ॥ ४ ॥ परिपतितपरागैः

पाटलक्षोणिभागो विकसितकुसुमोच्चैः पीतचन्द्रार्करश्मिः । अलि-
शुकपिकराजीकूजितैः श्रोत्रहारी स्फुरतु हृदि मदीये नूनमुद्यानराजः
॥ ५ ॥ रम्यद्वारपुरप्रचारतमसां संहारकारिप्रभस्फूर्जत्तोरणभार-
हारकमहाविस्तारहारद्युते । क्षोणीमण्डलहेमहारविलसत्संसारपार-
प्रदप्रोद्यद्भक्तमनोविहार कनकप्राकार तुभ्यं नमः ॥ ६ ॥ उद्य-
त्कान्तिकलापकल्पितनभःस्फूर्जद्वितानप्रभः सत्कृष्णागुरुधूपवासि-
तवियत्काष्ठान्तरे विश्रुतः । सेवायातसमस्तदैवतगणैरासेव्यमानो-
ऽनिशं सोऽयं श्रीमणिमण्डपोऽनवरतं मच्चेतसि द्योतताम् ॥ ७ ॥
क्वापि प्रोद्भटपद्मरागकिरणव्रातेन संध्यायितं कुत्रापि स्फुटविस्फुर-
न्मरकतद्युत्या तमिस्रायितम् । मध्यालम्बिविशालमौक्तिकरुचा
ज्योत्स्नायितं कुत्रचिन्मातः श्रीमणिमन्दिरं तव सदा वन्दामहे
सुन्दरम् ॥ ८ ॥ उत्तुङ्गालयविस्फुरन्मरकतप्रोद्यत्प्रभामण्डलान्या
लोक्याङ्कुरितोत्सवैर्नवतृणाकीर्णस्थलीशङ्कया । नीतो वाजिभिरुत्पथं
बत रथः सूतेन तिग्मद्युतेर्वल्गावलिगतहस्तमस्तशिखरं कष्टैरितः
प्राप्यते ॥ ९ ॥ मणिसदनसमुद्यत्कान्तिधारानुरक्ते वियति
चरमसंध्याशङ्किनो भानुरथ्याः । शिथिलितगतकुप्यत्सूतहुंकार-
नादैः कथमपि मणिगेहादुच्चकैरुच्चलन्ति ॥ १० ॥ भक्त्या किं
नु समर्पितानि बहुधा रत्नानि पाथोधिना किं वा रोहणपर्वतेन
सदनं यैर्विश्वकर्माऽकरोत् । आ ज्ञातं गिरिजे कटाक्षकलया नूनं त्वया
तोषिते शंभौ नृत्यति नागराजफणिना कीर्णा मणिश्रेणयः ॥ ११ ॥
विदूरमुक्तवाहनैर्विनम्रमौलिमण्डलैर्निबद्धहस्तसंपुटैः प्रयत्नसंयते-
न्द्रियैः । विरञ्चिविष्णुशंकरादिभिर्मुदा तवाम्बिके प्रतीक्ष्यमाण-
निर्गमो विभाति रत्न ण्डपः ॥ १२ ॥ ध्वनन्मृदङ्गकाहलः प्रगीत-
किंनरीगणः प्रनृत्तदिव्यकन्यकः प्रवृत्तमङ्गलक्रमः । प्रकृष्टसेवकव्रजः

प्रहृष्टभक्तमण्डलो मुदे ममास्तु संततं त्वदीयरत्नमण्डपः ॥ १३ ॥
प्रवेशनिर्गमाकुलैः स्वकृत्यरत्नमानसैर्बहिःस्थितामरावलीविधीयमान-
भक्तिभिः । विचित्रवस्त्रभूषणैरुपेतमङ्गनाजनैः सदा करोतु मङ्गलं
ममेह रत्नमण्डपः ॥ १४ ॥ सुवर्णरत्नभूषितैर्विचित्रवस्त्रधारिभि-
र्गृहीतहेमयष्टिभिर्निरुद्धसर्वदैवतैः । असंख्यसुन्दरीजनैः पुरःस्थि-
तैरधिष्ठितो मदीयमेतु मानसं त्वदीयतुङ्गतोरणः ॥ १५ ॥ इन्द्रा-
दींश्च दिगीश्वरान्सहपरीवारानथो सायुधान् योषिद्रूपधरान् स्वदिक्षु
निहितान्संचिन्त्य हृत्पङ्कजे । शङ्खे श्रीवसुधारया वसुमतीयुक्तं च
पद्मं स्मरन्कामं नौमि रतिप्रियं सहचरं प्रीत्या वसन्तं भजे ॥ १६ ॥
गायन्तीः कलवीणयाऽतिमधुरं हुंकारमातन्वतीर्द्वारशाभ्यासकृतस्थिती-
रिह सरस्वत्यादिकाः पूजयन् । द्वारे नौमि मदोन्मदं सुरगणाधीशं
मदेनोन्मदां मातङ्गीमसिताम्बरां परिलसन्मुक्ताविभूषां भजे ॥ १७ ॥
कस्तूरिकाश्यामलकोमलाङ्गीं कादम्बरीपानमदालसाङ्गीम् । वामस्त-
नालिङ्गितरत्नवीणां मातङ्गकन्यां मनसा स्मरामि ॥ १८ ॥ विकीर्ण-
चिकुरोत्करे विगलिताम्बराडम्बरे मदाकुलितलोचने विमलभूषणो-
द्भासिनि । तिरस्करिणि तावकं चरणपङ्कजं चिन्तयन्करोमि पशु-
मण्डलीमलिकमोहदुग्धाशयाम् ॥ १९ ॥ प्रमत्तवारुणीरसैर्विघूर्ण-
मानलोचनाः प्रचण्डदैत्यसूदनाः प्रविष्टभक्तमानसाः । उपोढकज्जल-
च्छविच्छटाविराजिविग्रहाः कपालशूलधारिणीः स्तुवे त्वदीय-
दूतिकाः ॥ २० ॥ स्फूर्जन्नव्ययवाङ्कुरोपलसिताभोगैः पुरःस्थापि-
तैर्दीपोद्भासिशरावशोभितमुखैः कुम्भैर्नवैः शोभिना । स्वर्णाबद्ध-
विचित्ररत्नपटलीचञ्चत्कपाटश्रिया युक्तं द्वारचतुष्टयेन गिरिजे वन्दे
मणीमन्दिरम् ॥ २१ ॥ आस्तीर्णारुणकम्बलासनयुतं पुष्पोपहारा-
न्वितं दीप्तानेकमणिप्रदीपसुभगं राजद्वितानोत्तमम् । धूपोद्गारिसुगन्धि-

संभ्रममिलद्भृङ्गावलीगुञ्जितं कल्याणं वितनोतु मेऽनवरतं श्रीमण्डपाभ्यन्तरम् ॥ २२ ॥ कनकरचिते पञ्चप्रेतासनेन विराजिते मणिगणचिते रक्तश्वेताम्बरास्तरणोत्तमे । कुसुमसुरभौ तल्पे दिव्योपधानसुखावहे हृदयकमले प्रादुर्भूतां भजे परदेवताम् ॥ २३ ॥ सर्वाङ्गस्थितिरम्यरूपरुचिरां प्रातः समभ्युत्थितां जृम्भामञ्जुमुखाम्बुजां मधुमदव्याघूर्णदक्षित्रयाम् । सेवायातसमस्तसंनिधिसखीः संमानयन्तीं दृशा संपश्यन्परदेवतां परमहो मन्ये कृतार्थं जनुः ॥ २४ ॥ उच्चैस्तोरणवर्तिवाद्यनिवहध्वाने समुज्जृम्भिते भक्तैर्भूमिविलग्नमौलिभिरलं दण्डप्रणामे कृते । नानारत्नसमूहनद्धकथनस्थालीसमुद्भासितां प्रातस्ते परिकल्पयामि गिरिजे नीराजनामुज्ज्वलाम् ॥ २५ ॥ पाद्यं ते परिकल्पयामि पदयोरर्घ्यं तथा हस्तयोः सौधीभिर्मधुपर्कमम्ब मधुरं धाराभिरास्वादय । तोयेनाचमनं विधेहि शुचिना गाङ्गेन मत्कल्पितं साष्टाङ्गं प्रणिपातमीशदयिते दृष्ट्या कृतार्थीकुरु ॥ २६ ॥ मातः पश्य मुखाम्बुजं सुविमले दत्ते मया दर्पणे देवि स्वीकुरु दन्तधावनमिदं गङ्गाजलेनान्वितम् । सुप्रक्षालितमाननं विरचयन् स्निग्धाम्बरप्रोञ्छनं द्रागङ्गीकुरु तत्त्वमम्ब मधुरं ताम्बूलमास्वादय ॥ २७ ॥ निधेहि मणिपादुकोपरि पदाम्बुजं मज्जनालयं व्रज शनैः सखीकृतकराम्बुजालम्बनम् । महेशि करुणानिधे तव दृगन्तपातोत्सुकान्विलोकय मनागमूनुभयसंस्थितान्दैवतान् ॥ २८ ॥ हेमरत्नवरणेन वेष्टितं विस्तृतारुणवितानशोभितम् । सज्जसर्वपरिचारिकाजनं पश्य मज्जनगृहं मनो मम ॥ २९ ॥ कनककलशजालस्फाटिकस्नानपीठाद्युपकरणविशालं गन्धमत्तालिमालम् । स्फुरदरुणवितानं मञ्जुगन्धर्व-

गानं परमशिवमहेले मज्जनागारमेहि ॥ ३० ॥ पीनोत्तुङ्गपयोधराः परिलसत्संपूर्णचन्द्रानना रत्नस्वर्णविनिर्मिताः परिलसत्सूक्ष्माम्बर-प्रावृताः । हेमस्नानघटीस्तथा मृदुपटीरुद्वर्तनं कौसुमं तैलं कङ्कतिकां करेषु दधतीर्वन्देऽम्ब ते दासिकाः ॥ ३१ ॥ तत्र स्फाटिकपीठमेत्य शनकैरुत्तारितालंकृतिर्नीचैरुज्झितकञ्चुकोपरिहितारक्तोत्तरीयाम्बरा । वेणीबन्धमपास्य कङ्कतिकया केशप्रसादं मनाक्कुर्वाणा परदेवता भगवती चित्ते मम द्योतताम् ॥ ३२ ॥ अभ्यङ्गं गिरिजे गृहाण मृदुना तैलेन संपादितं काश्मीरैरगरुद्रवैर्मलयजैरुद्वर्तनं कारय । गीते किंनरकामिनीभिरभितो वाद्ये मुदा वादिते नृत्यन्तीमिह पश्य देवि पुरतो दिव्याङ्गनामण्डलीम् ॥ ३३ ॥ कृतपरिकरबन्धास्तुङ्ग-पीनस्तनाढ्या मणिनिवहनिबद्धा हेमकुम्भीर्दधानाः । सुरभिसलिल-निर्यद्गन्धलुब्धालिमालाः सविनयमुपतस्थुः सर्वतः स्नानदास्यः ॥ ३४ ॥ उद्गन्धैरगरुद्रवैः सुरभिणा कस्तूरिकावारिणा स्फूर्ज-त्सौरभयक्षकर्दमजलैः काश्मीरनीरैरपि । पुष्पाम्भोभिरशेषतीर्थ-सलिलैः कर्पूरपाथोभरैः स्नानं ते परिकल्पयामि गिरिजे भक्त्या तदङ्गीकुरु ॥ ३५ ॥ प्रत्यङ्गं परिमार्जयामि शुचिना वस्त्रेण संप्रोञ्छनं कुर्वे केशकलापमायततरं धूपोत्तमैर्धूपितम् । आली-वृन्दविनिर्मितां जवनिकामास्थाप्य रत्नप्रभं भक्तत्राणपरे महेश्व-गृहिणि स्नानाम्बरं मुच्यताम् ॥ ३६ ॥ पीतं ते परिकल्प-यामि निबिडं चण्डातकं चण्डिके सूक्ष्मं स्निग्धमुरीकुरुष्व वसनं सिन्दूरपूरप्रभम् । मुक्तारत्नविचित्रहेमरचनाचारुप्रभाभास्वरं नीलं कञ्चुकमर्पयामि गिरिशप्राणप्रिये सुन्दरि ॥ ३७ ॥ विलुलित-चिकुरेण च्छादितांसप्रदेशे मणिनिकरविराजत्पादुकान्यस्तपादे । सुललितमवलम्ब्य द्राक्सखीमंसदेशे गिरिशगृहिणि भूषामण्डपाय

प्रयाहि ॥ ३८ ॥ लसत्कनककुट्टिमस्फुरदमन्दमुक्तावलीसमुल्लसित-
कान्तिभिः कलितशक्रचापव्रजे । महाभरणमण्डपे निहितहेम-
सिंहासनं सखीजनसमावृतं समधितिष्ठ कात्यायनि ॥ ३९ ॥ स्निग्धं
कङ्कतिकामुखेन शनकैः संशोध्य केशोत्करं सीमन्तं विरचय्य चारु
विमलं सिन्दूररेखान्वितम् । मुक्ताभिर्ग्रथितालकां मणिचितैः
सौवर्णसूत्रैः स्फुटं प्रान्ते मौक्तिकगुच्छकोपलतिकां ग्रथ्नामि वेणीमि-
माम् ॥ ४० ॥ विलम्बिवेणीभुजगोत्तमाङ्गस्फुरन्मणिभ्रान्तिमुपान-
यन्तम् । स्वरोचिषोल्लासितकेशपाशं महेशि चूडामणिमर्पयामि
॥ ४१ ॥ त्वामाश्रयद्भिः कबरीतमिस्रैर्बन्दीकृतं द्रागिव भानु-
बिम्बम् । मृडानि चूडामणिमादधानं वन्दामहे तावकमुत्तमाङ्गम्
॥ ४२ ॥ स्वमध्यनद्धहाटकस्फुरन्मणिप्रभाकुलं विलम्बिमौक्तिकच्छ-
टाविराजितं समन्ततः । निबद्धलक्षचक्षुषा भवेन भूरि भावितं
समर्पयामि भास्वरं भवानि भालभूषणम् ॥ ४३ ॥ मीनाम्भोरुह-
खञ्जरीटसुषमाविस्तारविस्मारके कुर्वाणे किल कामवैरिमनसः कंदर्प-
बाणप्रभाम् । माध्वीपानमदारुणेऽतिचपले दीर्घे दृगम्भोरुहे देवि
स्वर्णशलाकयोर्जितमिदं दिव्याञ्जनं दीयताम् ॥ ४४ ॥ मध्यस्था-
रुणरत्नकान्तिरुचिरां मुक्तामृगोद्भासितां दैवाद्भार्गवजीवमध्यगरवे-
र्लक्ष्मीमधः कुर्वतीम् । उत्सिक्ताधरबिम्बकान्तिविसरैर्भौमीभव-
न्मौक्तिकां मद्दत्तामुररीकुरुष्व गिरिजे नासाविभूषामिमाम्
॥ ४५ ॥ उडुकृतपरिवेषस्पर्धया शीतभानोरिव विरचितदेहद्वन्द्व-
मादित्यबिम्बम् । अरुणमणिसमुद्यत्प्रान्तविभ्राजिमुक्तं श्रवसि
परिनिधेहि स्वर्णताटङ्कयुग्मम् ॥ ४६ ॥ मरकतवरपद्मरागहीरोत्थि-
तगुलिकात्रितयावनद्धमध्यम् । विततविमलमौक्तिकं च कण्ठाभरण-

मिदं गिरिजे समर्पयामि ॥ ४७ ॥ नानादेशसमुत्थितैर्मणिगण-प्रोद्यत्प्रभामण्डलव्याप्तैराभरणैर्विराजितगलां मुक्ताछटालंकृताम् । मध्यस्थारुणरत्नकान्तिरुचिरां प्रान्तस्थमुक्ताफलव्रातामम्ब चतुष्किकां परशिवे वक्षःस्थले स्थापय ॥ ४८ ॥ अन्योन्यं प्लावयन्ती सततपरिचलत्कान्तिकल्लोलजालैः कुर्वाणा मज्जदन्तःकरणविमलतां शोभितेव त्रिवेणी । मुक्ताभिः पद्मरागैर्मरकतमणिभिर्निर्मिता दीप्यमानैर्नित्यं हारत्रयी ते परशिवरसिके चेतसि द्योततां नः ॥ ४९ ॥ करसरसिजनाले विस्फुरत्कान्तिजाले विलसदमलशोभे चञ्चदीशाक्षिलोभे । विविधमणिमयूखोद्भासितं देवि दुर्गे कनककटकयुग्मं बाहुयुग्मे निधेहि ॥ ५० ॥ व्यालम्बमानसितपट्टकगुच्छशोभि स्फूर्जन्मणीघटितहारविरोचमानम् । मातर्महेशमहिले तव बाहुमूले केयूरकद्वयमिदं विनिवेशयामि ॥ ५१ ॥ विततनिजमयूखैर्निर्मितामिन्द्रनीलैर्विजितकमलनालालीनमत्तालिमालाम् । मणिगणखचिताभ्यां कङ्कणाभ्यामुपेतां कलय वलयराजीं हस्तमूले महेशि ॥ ५२ ॥ नीलपट्टमृदुगुच्छशोभिताबद्धनैकमणिजालमञ्जुलाम् । अर्पयामि वलयात्पुरःसरे विस्फुरत्कनकतैतृपालिकाम् ॥ ५३ ॥ आलवालमिव पुष्पधन्वना बालविद्रुमलतासु निर्मितम् । अङ्गुलीषु विनिधीयतां शनैरङ्गुलीयकमिदं मदर्पितम् ॥ ५४ ॥ विजितहरमनोभूमत्तमातङ्गकुम्भस्थलविलुलितकूजत्किङ्किणीजालतुल्याम् । अविरतकलनादैरीशचेतो हरन्तीं विविधमणिनिबद्धां मेखलामर्पयामि ॥ ५५ ॥ व्यालम्बमानवरमौक्तिकगुच्छशोभिविभ्राजिहाटकपुटद्वयरोचमानम् । हेम्ना विनिर्मितमनेकमणिप्रबन्धं नीवीनिबन्धनगुणं विनिवेदयामि ॥ ५६ ॥ विनिहतनवलाक्षापङ्कबालातपौघे मरकतमणिराजीमञ्जुमञ्जीरघोषे । अरुणमणिसमुद्यत्कान्तिधाराविचित्रस्तव चरणसरोजे हंसकः प्रीति-

भस्मीभवन्ति सर्वास्ताः कवचस्य प्रभावतः । सर्वे रोगा विनश्यन्ति सर्वे बालग्रहाश्च ये ॥ ६ ॥ पूर्वे रक्षतु वाराही चाग्नेय्यामम्बिका स्वयम् । दक्षिणे चण्डिका रक्षेन्नैर्ऋत्यां शववाहिनी ॥ ७ ॥ वाराही पश्चिमे रक्षेद्वायव्यां च महेश्वरी । उत्तरे वैष्णवी रक्षेदीशाने सिंहवाहिनी ॥ ८ ॥ ऊर्ध्वं तु शारदा रक्षेदधो रक्षतु पार्वती । शाकंभरी शिरो रक्षेन्मुखं रक्षतु भैरवी ॥ ९ ॥ कण्ठं रक्षतु चामुण्डा हृदयं रक्षताच्छिवा । ईशानी च भुजौ रक्षेत्कुक्षिं नाभिं च कालिका ॥ १० ॥ अपर्णा ह्युदरं रक्षेत्कटिं बस्तिं शिवप्रिया । ऊरू रक्षतु कौमारी जया जानुद्वयं तथा ॥ ११ ॥ गुल्फौ पादौ सदा रक्षेद्ब्रह्माणी परमेश्वरी । सर्वाङ्गानि सदा रक्षेद्दुर्गा दुर्गार्तिनाशिनी ॥ १२ ॥ नमो देव्यै महादेव्यै दुर्गायै सततं नमः । पुत्रसौख्यं देहि देहि गर्भरक्षां कुरुष्व नः ॥ १३ ॥ ॐ ह्रीं ह्रीं ह्रीं श्रीं श्रीं श्रीं ऐं ऐं ऐं महाकालीमहालक्ष्मी-महासरस्वतीरूपायै नवकोटिमूर्त्यै दुर्गायै नमः । ह्रीं ह्रीं ह्रीं दुर्गार्ति-नाशिनी संतानसौख्यं देहि देहि वन्ध्यत्वं मृतवत्सत्वं च हर हर गर्भरक्षां कुरु कुरु सकलां बाधां कुलजां बाह्यजां कृतामकृतां च नाशय नाशय सर्वगात्राणि रक्ष रक्ष गर्भं पोषय पोषय सर्वोपद्रवं शोषय शोषय स्वाहा । अनेन कवचेनाङ्गं सप्तवाराभिमन्त्रितम् । ऋतुस्नाता जलं पीत्वा भवेद्गर्भवती ध्रुवम् ॥ १४ ॥ गर्भपातभये पीत्वा दृढगर्भा प्रजायते । अनेन कवचेनाथ मार्जिताया निशागमे ॥ १५ ॥ सर्वबाधाविनिर्मुक्ता गर्भिणी स्यान्न संशयः । अनेन कवचेनेह ग्रन्थितं रक्तदोरकम् ॥ १६ ॥ कटिदेशे धारयन्ती सुपुत्रसुखभागिनी । असूत पुत्रमिन्द्राणी जयन्तं यत्प्रभावतः ॥ १७ ॥ गुरूपदिष्टं वंशाख्यं कवचं तदिदं सखे । गुह्याद्गुह्यतरं चेदं न प्रकाश्यं हि सर्वतः । धारणात्पठनादस्य वंशच्छेदो न जायते ॥ १८ ॥ बाला

विनश्यन्ति पतन्ति गर्भास्तत्राबलाः कष्टयुताश्च वन्ध्याः। बालग्रहैर्भूतगणैश्च रोगैर्न यत्र धर्माचरणं गृहे स्यात् ॥ १९ ॥ इति श्रीज्ञानभास्करे वंशवृद्धिकरं वंशकवचं संपूर्णम् ॥

## २८८. ललितापञ्चरत्नम्।

श्रीगणेशाय नमः ॥ प्रातः स्मरामि ललितावदनारविन्दं विम्बाधरं पृथुलमौक्तिकशोभिनासम्। आकर्णदीर्घनयनं मणिकुण्डलाढ्यं मन्दस्मितं मृगमदोज्ज्वलफालदेशम् ॥ १ ॥ प्रातर्भजामि ललिताभुजकल्पवल्लीं रक्तांगुलीयलसदंगुलिपल्लवाढ्याम्। माणिक्यहेमवलयाङ्गदशोभमानां पुण्ड्रेक्षुचापकुसुमेषु सृणीर्दधानाम् ॥ २ ॥ प्रातर्नमामि ललिताचरणारविन्दं भक्तेष्टदाननिरतं भवसिन्धुपोतम्। पद्मासनादिसुरनायकपूजनीयं पद्माङ्कुशध्वजसुदर्शनलाञ्छनाढ्यम् ॥ ३ ॥ प्रातः स्तुवे परशिवां ललितां भवानीं त्रय्यंतवेद्यविभवां करुणानवद्याम्। विश्वस्य सृष्टिविलयस्थितिहेतुभूतां विद्येश्वरीं निगमवाङ्मनसातिदूराम् ॥ ४ ॥ प्रातर्वदामि ललिते तव पुण्यनाम कामेश्वरीति कमलेति महेश्वरीति। श्रीशाम्भवीति जगतां जननी परेति वाग्देवतेति वचसा त्रिपुरेश्वरीति ॥ ५ ॥ यः श्लोकपञ्चकमिदं ललिताम्बिकायाः सौभाग्यदं सुललितं पठति प्रभाते। तस्मै ददाति ललिता झटिति प्रसन्ना विद्यां श्रियं विमलसौख्यमनन्तकीर्तिम् ॥ ६ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ ललितापञ्चरत्नं संपूर्णम् ॥

## २८९. विन्ध्येश्वरीस्तोत्रम्।

श्रीगणेशाय नमः ॥ निशुम्भशुम्भमर्दिनीं प्रचण्डमुण्डखण्डनीम्। वने रणे प्रकाशिनीं भजामि विन्ध्यवासिनीम् ॥ १ ॥

त्रिशूलमुण्डधारिणीं धराविघातहारिणीम् । गृहे गृहे निवासिनीं भजामि विन्ध्य० ॥ २ ॥ दरिद्रदुःखहारिणीं सतां विभूतिकारिणीम् । वियोगशोकहारिणीं भजामि विन्ध्य० ॥ ३ ॥ लसत्सुलोललोचनं लतासदेवरप्रदम् । कपालशूलधारिणीं भजामि विन्ध्य० ॥ ४ ॥ करो मुदा गदाधरो शिवां शिवप्रदायिनीम् । वरावराननां शुभां भजामि विन्ध्य० ॥ ५ ॥ ऋषीन्द्रजामिनिप्रदं त्रिधास्यरूपधारिणीम् । जले स्थले निवासिनीं भजामि विन्ध्य० ॥६॥ विशिष्टसृष्टिकारिणीं विशालरूपधारिणीम् । महोदरे विशालिनीं भजामि विन्ध्य० ॥ ७ ॥ पुरन्दरादिसेवितां मुरादिवंशखण्डनीम् । विशुद्धबुद्धिकारिणीं भजामि विन्ध्यवासिनीम् ॥ ८ ॥ इति विन्ध्येश्वरीस्तोत्रं संपूर्णम् ॥

## २९०. भवानीभुजंगस्तुतिः ।

श्रीभवान्यै नमः ॥ षडाधारपंकेरुहांतर्विराजत्सुषुम्नांतरालेऽतितेजोल्लसंतीम् । सुधामंडलं द्रावयंतीं पिबंतीं सुधामूर्तिमीडेऽहमानंदरूपाम् ॥ १ ॥ ज्वलत्कोटिबालार्कभासारुणांगीं सुलावण्यशृंगारशोभाभिरामाम् । महापद्मकिंजल्कमध्ये विराजत्त्रिकोणोल्लसंतीं भजे श्रीभवानीम् ॥ २ ॥ क्वणत्किंकिणीनूपुरोद्भासिरत्नप्रभालीढलाक्षार्द्रपादारविंदाम् । अजेशाच्युताद्यैः सुरैः सेव्यमानां महादेवि मन्मूर्ध्नि ते भावयामि ॥ ३ ॥ सुशोणांबराबद्धनीवीविराजन्महारत्नकांचीकलापं नितंबम् । स्फुरद्दक्षिणावर्तनाभिं च तिस्रो वली रम्यते रोमराजीं भजेऽहम् ॥ ४ ॥ लसद्वृत्तमुत्तुंगमाणिक्यकुंभोपमश्रीस्तनद्वंद्वमंबांबुजाक्षीम् । भजे पूर्णदुग्धाभिरामं तवेदं महाहारदीप्तं सदा प्रस्नुतास्यम् ॥ ५ ॥ शिरीषप्रसूनोल्लसद्बाहुदंडैर्ज्वलद्बाणकोदंडपाशांकुशैश्च । चलत्कंकणोदारकेयूरभूषाज्ज्वलद्भिः स्फुरंतीं भजे श्रीभवा-

नीम् ॥ ६ ॥ शरत्पूर्णचंद्रप्रभापूर्णबिंबाधरस्मेरवक्त्रारविंदश्रियं ते ।
सुरत्नावलीहारताटंकशोभां भजे सुप्रसन्नामहं श्रीभवानीम् ॥ ७ ॥
सुनासापुटं पद्मपत्रायताक्षं यजंतः श्रियं दानदक्षं कटाक्षम् । लला-
टोल्लसद्गंधकस्तूरिभूषाज्ज्वलद्भिः स्फुरंतीं भजे श्रीभवानीम् ॥ ८ ॥
चलत्कुंडलां ते भ्रमद्भृंगवृंदां घनस्निग्धधंमिल्लभूषोज्ज्वलंतीम् ।
स्फुरन्मौलिमाणिक्यमध्येंदुरेखाविलासोल्लसद्दिव्यमूर्धानमीडे ॥ ९ ॥
स्फुरत्त्वांब बिंबस्य मे हृत्सरोजे सदा वाङ्मयं सर्वतेजोमयं च । इति
श्रीभवानीस्वरूपं तदेवं प्रपंचात्परं चातिसूक्ष्मं प्रसन्नम् ॥ १० ॥
गणेशाणिमाद्याखिलैः शक्तिवृंदैः स्फुरच्छ्रीमहाचक्रराजोल्लसंतीम् ।
परां राजराजेश्वरीं त्वां भवानीं शिवांकोपरिस्थां शिवां भावयेऽहम्
॥ ११ ॥ त्वमर्कस्त्वमग्निस्त्वमिंदुस्त्वमापस्त्वमाकाशभूवायवस्त्वं
चिदात्मा । त्वदन्यो न कश्चित्प्रकाशोऽस्ति सर्वं सदानंदसंवित्स्वरूपं
तवेदम् ॥ १२ ॥ गुरुस्त्वं शिवस्त्वं च शक्तिस्त्वमेव त्वमेवासि
माता पिताऽसि त्वमेव । त्वमेवासि विद्या त्वमेवासि बुद्धिर्गतिर्मे
मतिर्देवि सर्वं त्वमेव ॥ १३ ॥ श्रुतीनामगम्यं सुवेदागमाद्यैर्महिम्नो
न जानाति पारं तवेदम् । स्तुतिं कर्तुमिच्छामि ते त्वं भवानि क्षम-
स्वेदमंब प्रमुग्धः किलाहम् ॥ १४ ॥ शरण्ये वरेण्ये सुकारुण्यपूर्णे
हिरण्योदराद्यैरगम्येऽतिपुण्ये । भवारण्यभीतं च मां पाहि भद्रे
नमस्ते नमस्ते नमस्ते भवानि ॥ १५ ॥ इमामन्वहं श्रीभवानीभुजंग-
स्तुतिं यः पठेच्छ्रोतुमिच्छेत तस्मै । स्वकीयं पदं शाश्वतं चैव सारं
श्रियं चाष्टसिद्धीश्च देवी ददाति ॥ १६ ॥ इति श्रीमत्परमहंस-
श्रीमच्छंकराचार्यप्रणीता भवानीभुजंगस्तुतिः संपूर्णा ॥

## २११. भगवतीपद्यपुष्पांजलिस्तोत्रम्।

श्रीभगवत्यै नमः ॥ भगवति भगवत्पदपंकजं भ्रमरभूतसुरासुरसेवितम्। सुजनमानसहंसपरिस्तुतं कमलयाऽमलया निभृतं भजे ॥ १ ॥ ते उभे अभिवंदेऽहं विघ्नेशकुलदैवते ॥ नरनागाननस्त्वेको नरसिंह नमोऽस्तु ते ॥ २ ॥ हरिगुरुपदपद्मं शुद्धपद्मेऽनुरागाद्विगतपरमभागे सन्निधायादरेण। तदनुचरि करोमि प्रीतये भक्तिभाजां भगवति पदपद्मे पद्यपुष्पांजलिं ते ॥ ३ ॥ केनैते रचिताः कुतो न निहिताः शुंभादयो दुर्मदाः केनैते तव पालिता इति हि तत् प्रश्ने किमाचक्ष्महे। ब्रह्माद्या अपि शंकिताः स्वविषये यस्याः प्रसादावधि प्रीता सा महिषासुरप्रमथिनी च्छिद्यादवद्यानि मे ॥ ४ ॥ पातु श्रीस्तु चतुर्भुजा किमु चतुर्बाहोर्महौजान्भुजान् धत्तेऽष्टादशधा हि कारणगुणाः कार्ये गुणारंभकाः। सत्यं दिक्पतिदंतिसंख्यभुजभृच्छंभुः स्वयंभूः स्वयं धामैकप्रतिपत्तये किमथवा पातुं दशाष्टौ दिशः ॥ ५ ॥ प्रीत्याऽष्टादशसंमितेषु युगपद्वीपेषु दातुं वरान् त्रातुं वा भयतो बिभर्षि भगवत्यष्टादशैतान् भुजान्। यद्वाऽष्टादशधा भुजांस्तु बिभ्रतः काली सरस्वत्युभे मीलित्वैकमिहानयोः प्रथयितुं सा त्वं रमे रक्ष माम् ॥ ६ ॥ [छंदः] ॥ अयि गिरिनंदिनि नंदितमेदिनि विश्वविनोदिनि नंदनुते, गिरिवरविंध्यशिरोधिनिवासिनि विष्णुविलासिनि जिष्णुनुते। भगवति हे शितिकंठकुटुंबिनि भूरिकुटुंबिनि भूरिकृते, जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ७ ॥ सुरवरवर्षिणि दुर्धरधर्षिणि दुर्मुखमर्षिणि हर्षरते, त्रिभुवनपोषिणि शंकरतोषिणि किल्बिषमोषिणि घोषरते। दनुजनिरोषिणि दितिसुतरोषिणि दुर्मदशोषिणि सिंधुसुते

जय जय हे० ॥ ८ ॥ अयि जगदंब मदंब कदंबवनप्रियवासिनी हासरते शिखरिशिरोमणितुंगहिमालयशृंगनिजालयमध्यगते । मधुमधुरे मधुकैटभगंजिनि कैटभभंजिनि रासरते, जय जय० ॥ ९ ॥ अयि शतखंडविखंडितरुंडवितुंडितशुंडगजाधिपते, रिपुगजगंडविदारणचंडपराक्रमशुंड मृगाधिपते । निजभुजदंडनिपातितखंडनिपातितमंडभटाधिपते, जय जय हे० ॥ १० ॥ अयि रणदुर्मदशत्रुवधोदितदुर्धरनिर्जरशक्तिभृते चतुरविचारधुरीणमहाशिवदूतकृतप्रमथाधिपते । दुरितदुरीहदुराशयदुर्मतिदानवदूतकृतांतमते, जय जय० ॥ ११ ॥ अयि शरणागतवैरिवधूवरवीरवराभयदायकरे, त्रिभुवनमस्तकशूलविरोधिशिरोधिकृतामलशूलकरे । दुमिदुमितामरदुंदुभिनादमहोमुखरीकृततिग्मकरे, जय जय हे० ॥ १२ ॥ अयि निजहुंकृतिमात्रनिराकृतधूम्रविलोचनधूम्रशते, समरविशोषितशोणितबीजसमुद्भवशोणितबीजलते । शिवशिव शुंभनिशुंभमहाहवतर्पितभूतपिशाचरते, जय जय हे० ॥१३॥ धनुरनुसंगरणक्षणसंगपरिस्फुरदंगनटत्कटके, कनकपिशंगपृषत्कनिषंगरसद्भटशृंगहताबटुके । कृतचतुरंगबलक्षितिरंगघटद्बहुरंगरटद्बटुके, जय जय हे० ॥ १४ ॥ सुरललनाततथेयितथेयितथाभिनयोत्तरनृत्यरते, धिमिकटधिक्कटधिकटधिमिध्वनिधीरमृदंगनिनादरते, जय जय हे० ॥ १५ ॥ जय जय जप्यजये जयशब्दपरस्तुतितत्परविश्वनुते झणझणझिंजिमिझिंकृतनूपुरसिंजितमोहितभूतपते । नटितनटार्धनटीनटनायकनाटितनाट्यसुगानरते, जय० ॥ १६ ॥ अयि सुमनःसुमनःसुमनः सुमनःसुमनोहरकांतियुते, श्रितरजनीरजनीरजनीरजनीरजनीकरवक्त्रवृते । सुनयनविभ्रमरभ्रमरभ्रमरभ्रमरभ्रमराधिपते, जय० ॥ १७ ॥ सहितमहाहवमल्लमतल्लिकमल्लितरल्लकमल्लरते, विरचितवल्लिकपल्लिकमल्लिकझिल्लिकभिल्लिकवर्गवृते, सितकृतफुल्लिसमुल्लसितारुणतल्लजपल्लव-

सल्ललिते, जय० ॥ १८ ॥ अविरलगंडगलन्मदमेदुरमत्तमतंगजराज-पते, त्रिभुवनभूषणभूतकलानिधिरूपपयोनिधिराजसुते। अयि सुदती जनलालसमानसमोहनमन्मथराजसुते, जय जय० ॥ १९ ॥ कमल-दलामलकोमलकांतिकलाकलितामलभाललते। सकलविलासकला-निलयक्रमकेलिचलत्कलहंसकुले। अलिकुलसंकुलकुवलयमंडलमौलि-मिलद्बकुलालिकुले, जय० ॥ २० ॥ करमुरलीरववीजितकूजितलज्जित-कोकिलमञ्जुमते, मिलितपुलिंदमनोहरगुंजितशैलनिकुंजगते। निजगुण-भूतमहाशबरीगणसद्गुणसंभृतकेलितले, जय० ॥ २१ ॥ कटितट-पीतदुकूलविचित्रमयूखतिरस्कृतचंद्ररुचे प्रणतसुरासुरमौलिमणिस्फुर-दंशुलसन्नखचंद्ररुचे। जितकनकाचलमौलिपदोर्जितनिर्झरकुंजरकुंभकुचे जय० ॥ २२ ॥ विजितसहस्रकरैकसहस्रकरैकसहस्रकरैकनुते, कृत-सुरतारकसंगरतारकसंगरतारकसूनुसुते। सुरथसमाधिसमानसमा-धिसमाधिसमाधिसुजातरते, जय जय० ॥ २३ ॥ पदकमलं करुणा-निलये वरिवस्यति योऽनुदिनं, स शिवे अयि कमले कमलानिलये कमलानिलयः स कथं न भवेत्। तव पदमेव परंपदमेवमनुशीलयतो मम किं न शिवे, जय० ॥ २४ ॥ कनकलसत्कलसिंधुजलैरनुसिंचिनुते गुणरंगभुवं भजति स किं न शचीकुचकुंभतटीपरिरंभसुखानुभवम्। तव चरणं शरणं करवाणि नतामरवाणिनिवासि शिवं, जय० ॥ २५ ॥ तव विमलेंदुकुलं वदनेंदुमलं सकलं ननु कूलयते किमु पुरहूतपुरीं-दुमुखीसुमुखीभिरसौ विमुखीक्रियते। मम तु मतं शिवनामधने भवती कृपया किमुत क्रियते, जय० ॥ २६ ॥ अयि मयि दीनदयालु-तया कृपयैव त्वया भवितव्यमुमे, अयि जगतो जननी कृपयासि यथासि तथाऽनुमितासि रते। यदुचितमत्र भवत्युररीकुरुतादुरुताप-मपाकुरुते, जय० ॥ २७ ॥ स्तुतिमितस्तिमितः सुसमाधिना नियम-

तोऽयमतोऽनुदिनं पठेत् । परमया रमयापि निषेव्यते परिजनोऽरिजनोऽपि च तं भजेत् ॥ २८ ॥ रमयति किल कर्षस्तेषु चित्तं नराणामवरजवरयस्माद्रामकृष्णः कवीनाम् । अकृत सुकृतगम्यं रम्यपद्यैकहर्म्यं स्तवनमवनहेतुं प्रीतये विश्वमातुः ॥ २९ ॥ इंदुरम्यो मुहुर्बिंदुरम्यो मुहुर्बिंदुरम्यो यतः साऽनवद्यं स्मृतः । श्रीपतेः सूनुना कारितो योऽधुना विश्वमातुः पदे पद्यपुष्पांजलिः ॥ ३० ॥ इति श्रीभगवतीपद्यपुष्पांजलिस्तोत्रं संपूर्णम् ॥

## २९२. भवानीस्तुतिः ।

श्रीगणेशाय नमः ॥ आनंदमंथरपुरंदरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य । पादांबुजं भवतु वो विजयाय मंजु मंजीरशिंजितमनोहरमंबिकायाः ॥ १ ॥ ब्रह्मादयोऽपि यदपांगतरंगभंग्या सृष्टिस्थितिप्रलयकारणतां व्रजंति । लावण्यवारिनिधिवीचिपरिप्लुतायै तस्यै नमोऽस्तु सततं हरवल्लभायै ॥ २ ॥ पौलस्त्यपीनभुजसंपदुदस्यमानकैलाससंभ्रमविलोलदृशः प्रियायाः । श्रेयांसि वो दिशतु निह्नुतकोपचिह्नमालिंगनोत्पुलकभासितमिंदुमौलेः ॥ ३ ॥ दिश्यान्महासुरशिरःसरसीप्सितानि प्रेंखन्नखावलिमयूखमृणालनालम् । चंड्याश्चलच्चटुलनूपुरचंचरीकझांकारहारि चरणांबुरुहद्वयं वः ॥ ४ ॥ इति श्रीभवानीस्तुतिः संपूर्णा ॥

## २९३. देवीभुजङ्गप्रयातस्तोत्रम् ।

श्रीगणेशाय नमः ॥ विरिञ्च्यादिभिः पञ्चभिर्लोकपालैः समूढे महानन्दपीठे निषण्णम् । धनुर्बाणपाशाङ्कुशप्रोतहस्तं महस्त्रैपुरं शंकराद्वैतमव्यात् ॥ १ ॥ यदन्नादिभिः पञ्चभिः कोशजालैः शिरःपक्षपुच्छात्मकैरन्तरन्तः । निगूढे महायोगपीठे निषण्णं पुरारेरथान्तःपुरं

नौमि नित्यम् ॥ २ ॥ विरिञ्च्यादिरूपैः प्रपञ्चे विहृत्य स्वतन्त्रा यदा स्वात्मविश्रान्तिरेषा । तदा मानमातृप्रमेयातिरिक्तं परानन्दमीडे भवानि त्वदीयम् ॥ ३ ॥ विनोदाय चैतन्यमेकं विभज्य द्विधा देवि जीवः शिवश्चेति नाम्ना । शिवस्यापि जीवत्वमापादयन्ती पुनर्जीवमेनं शिवं वा करोषि ॥ ४ ॥ समाकुञ्च्य मूलं हृदि न्यस्य वायुं मनो भ्रूबिलं प्रापयित्वा निवृत्ताः । ततः सच्चिदानन्दरूपे पदे ते भवन्त्यम्ब जीवाः शिवत्वेन केचित् ॥ ५ ॥ शरीरेऽतिकष्टे रिपौ पुत्रवर्गे सदा भीतिमूले कलत्रे धने वा । न कश्चिद्विरज्यत्यहो देवि चित्रं कथं त्वत्कटाक्षं विना तत्त्वबोधः ॥ ६ ॥ शरीरे धनेऽपत्यवर्गे कलत्रे विरक्तस्य सद्देशिकादिष्टबुद्धेः । यदाकस्मिकं ज्योतिरानन्दरूपं समाधौ भवेत्तत्त्वमस्यम्ब सत्यम् ॥ ७ ॥ मृषान्यो मृषान्यः परो मिश्रमेनं परः प्राकृतं चापरो बुद्धिमात्रम् । प्रपञ्चं मिमीते मुनीनां गणोऽयं तदेतत्त्वमेवेति न त्वां जहीमः ॥ ८ ॥ निवृत्तिः प्रतिष्ठा च विद्या च शान्तिस्तथा शान्त्यतीतेति पञ्चीकृताभिः । कलाभिः परे पञ्चविंशात्मिकाभिस्त्वमेकैव सेव्या शिवाभिन्नरूपा ॥ ९ ॥ अगाधेऽत्र संसारपङ्के निमग्नं कलत्रादिभारेण खिन्नं नितान्तम् । महामोहपाशौघबद्धं चिरान्मां समुद्धर्तुमम्ब त्वमेकैव शक्ता ॥ १० ॥ समारभ्य मूलं गतो ब्रह्मचक्रं भवद्दिव्यचक्रेश्वरीधामभाजः । महासिद्धिसंघातकल्पद्रुमाभानवाप्याम्ब नादानुपास्ते च योगी ॥ ११ ॥ गणेशैर्ग्रहैरम्ब नक्षत्रपङ्क्त्या तथा योगिनीराशिपीठैरभिन्नम् । महाकालमात्मानमामृश्य लोकं विधत्से कृतिं वा स्थितिं वा महेशि ॥ १२ ॥ लसत्तारहारामतिस्वच्छचेलां वहन्तीं करे पुस्तकं चाक्षमालाम् । शरच्चन्द्रकोटिप्रभाभासुरां त्वां सकृद्भावयन् भारतीवल्लभः स्यात् ॥ १३ ॥ समुद्यत्सहस्रार्कबिम्बाभवक्त्रां स्वभासैव सिन्दूरिताजाण्डकोटिम् । धनुर्बाणपाशाङ्कुशान्

धारयन्तीं स्मरन्तः स्मरं वाऽपि संमोहयेयुः ॥ १४ ॥ मणिस्यूत-
ताटङ्कशोणास्यबिम्बां हरित्पट्टवस्त्रां त्वगुल्लासिभूषाम् । हृदा भावयं-
स्तप्तहेमप्रभां त्वां श्रियो नाशयत्यम्ब चाञ्चल्यभावम् ॥ १५ ॥
महामन्त्रराजान्तबीजं पराख्यं स्वतो न्यस्तबिन्दु स्वयं न्यस्तहार्दम् ।
भवद्वक्त्रवक्षोजगुह्याभिधानं स्वरूपं सकृद्भावयेत्स त्वमेव ॥ १६ ॥
तथान्ये विकल्पेषु निर्विण्णचित्तास्तदेकं समाधाय बिन्दुत्रयं ते ।
परानन्दसंधानसिन्धौ निमग्नाः पुनर्गर्भरन्ध्रं न पश्यन्ति धीराः ॥१७॥
त्वदुन्मेषलीलानुबन्धाधिकारान्विरिञ्च्यादिकांस्त्वद्गुणाम्भोधिबिन्दून् ।
भजन्तस्तितीर्षन्ति संसारसिन्धुं शिवे तावकीनां सुसंभावनेयम् ॥१८॥
कदा वा भवत्पादपोतेन तूर्णं भवाम्भोधिमुत्तीर्य पूर्णांतरङ्गः ।
निमज्जन्तमेनं दुराशाविषाब्धौ समालोक्य लोकं कथं पर्युदास्से ॥१९॥
कदा वा हृषीकाणि साम्यं भजेयुः कदा वा न शत्रुर्न मित्रं भवानि ।
कदा वा दुराशाविषूचीविलोपः कदा वा मनो मे समूलं विनश्येत्
॥ २० ॥ नमोवाकमाशास्महे देवि युष्मत्पदाम्भोजयुग्माय तिग्माय
गौरि । विरिञ्च्यादिभास्वत्किरीटप्रतोलीप्रदीपायमानप्रभाभास्वराय
॥२१॥ कचे चन्द्ररेखं कुचे तारहारं करे स्वादुचापं शरे षट्पदौघम् ।
स्मरामि स्मरारेरभिप्रायमेकं मदाघूर्णनेत्रं मदीयं निधानम् ॥ २२ ॥
शरेष्वेव नासा धनुःष्वेव जिह्वा जपापाटले लोचने ते स्वरूपे । त्वगेषा
भवच्चन्द्रखण्डे श्रवो मे गुणे ते मनोवृत्तिरम्ब त्वयि स्यात् ॥ २३ ॥
जगत्कर्मधीरान्वचोधूतकीरान् कुचन्यस्तहारान्कृपासिन्धुपूरान् ॥ २४ ॥
सुधासिन्धुसारे चिदानन्दनीरे समुत्फुल्लनीपे सुरत्नान्तरीपे । मणि-
व्यूहसाले स्थिते हैमशाले मनोजारिवामे निषण्णं मनो मे ॥ २५ ॥
दृगन्ते विलोला सुगन्धीषुमाला प्रपञ्चेन्द्रजाला विपत्सिन्धुकूला ।
मुनिस्वान्तशाला नमल्लोकपाला हृदि प्रेमलोलामृतस्वादुलीला ॥ २६ ॥

मातस्त्वत्पदपंकजं हृदि सदा कुर्वे गिरां देवते ॥ ५ ॥ मातस्त्वत्पदपंकजस्य मनसा वाचा क्रियातोऽपि वा ये कुर्वन्ति मुदाऽन्वहं बहुविधैर्दिव्यैः सुमैरर्चनाम् । शीघ्रं ते प्रभवन्ति भूमिपतयो निन्दन्ति च स्वश्रिया जम्भारातिमपि ध्रुवं शतमखीकष्टाप्तनाकश्रियम् ॥ ६ ॥ मातस्त्वत्पदपंकजं शिरसि ये पद्माटवीमध्यतश्चन्द्राभं प्रविचिन्तयन्ति पुरुषाः पीयूषवर्ष्यन्वहम् । ते मृत्युं प्रविजित्य रोगरहिताः सम्यग्दृढाङ्गाश्चिरं जीवन्त्येव मृणालकोमलवपुष्मन्तः सुरूपा भुवि ॥ ७ ॥ मातस्त्वत्पदपंकजं हृदि मुदा ध्यायन्ति ये मानवाः सच्चिद्रूपमशेषवेदशिरसां तात्पर्यगम्यं मुहुः । अत्यागेऽपि तनोरखण्डपरमानन्दं वहन्तः सदा सर्वं विश्वमिदं विनाशि तरसा पश्यन्ति ते पूरुषाः ॥८॥ इति देवीपदपङ्कजाष्टकं संपूर्णम् ॥

## २९६. मातंगीषट्कम् ।

श्रीगणेशाय नमः ॥ अंब शशिबिंबवदने कंबुग्रीवे कठोरकुचकुंभे । अंबरसमानमध्ये शंबररिपुवैरिदेवि मां पाहि ॥ १ ॥ कुंदमुकुलाग्रदंतां कुंकुमपंकेन लिप्तकुचभाराम् । आनीलनीलदेहामंबामखिलांडनायकीं वंदे ॥ २ ॥ सरिगमपधनिसतान्तां वीणासंक्रान्तचारुहस्तां ताम् । शांतां मृदुलस्वान्तां कुचभरतान्तां नमामि शिवकांताम् ॥ ३ ॥ अरटतटघटितजूटीताडिततालीकपालताटंकाम् । वीणावादनवेलाकंपितशिरसं नमामि मातंगीम् ॥ ४ ॥ वीणारसानुषंगं विकचमदामोदमाधुरीभृङ्गम् । करुणापूरितरंगं कलये मातंगकन्याकापांगम् ॥ ५ ॥ दयमानदीर्घनयनां देशिकरूपेण दर्शिताभ्युदयाम् । वामकुचनिहितवीणां वरदां संगीतमातृकां वंदे ॥ ६ ॥ माणिक्यवीणामुपलालयंतीं मदालसां मञ्जुलवाग्विलासाम् । माहेंद्र-

नीलद्युतिकोमलांगीं मातंगकन्यां मनसा स्मरामि ॥ ७ ॥ इति श्रीकालिकापुराणे मातंगीषट्कं संपूर्णम् ॥

## २९७. वेदगर्भ श्रीभुवनेश्वरीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ कर्णस्वर्णविलोलकुंडलधरामापीनवक्षोरुहां मुक्ताहारविभूषणां परिलसद्धंमिल्लसन्मल्लिकाम् । लीलालोलितलोचनां शशिमुखीमाबद्धकांचीस्रजं दीव्यंतीं भुवनेश्वरीमनुदिनं वंदामहे मातरम् ॥ १ ॥ ऐंदव्या कलयावतंसितशिरोविस्तारिनादात्मकं तद्रूपं जननि स्मरामि परमं सन्मात्रमेकं तव । यत्रोदेति पराभिधा भगवती भासां हि तासां पदं पश्यंती तनुमध्यमा विहरति स्वैरं च सा वैखरी ॥ २ ॥ आदिक्षांतविलासलालसतया तासां तुरीया तु या क्रोडीकृत्य जगत्रयं विजयते वेदादिविद्यामयी । तां वाचं मयि संप्रसादय सुधाकल्लोलकोलाहलक्रीडाकर्णनवर्णनीयकवितासाम्राज्यसिद्धिप्रदाम् ॥ ३ ॥ कल्पादौ कमलासनोऽपि कलया विद्धः कयाचित्किल त्वां ध्यात्वांकुरयांचकार चतुरो वेदांश्च विद्याश्च ताः । तन्मातर्ललिते प्रसीद सरलं सारस्वतं देहि मे यस्यामोदमुदीरयंति पुलकैरंतर्गता देवताः ॥ ४ ॥ मातर्देहभृतामहो धृतिमयी नादैकरेखामयी सा त्वं प्राणमयी हुताशनमयी बिंदुप्रतिष्ठामयी । तेन त्वां भुवनेश्वरीं विजयिनीं ध्यायामि जायां विभोस्त्वत्कारुण्यविकाशिपुण्यमतयः खेलंतु मे सूक्तयः ॥ ५ ॥ त्वामश्वत्थदलानुकारमधुराधारबद्धोदरां संसेवे भुवनेश्वरीमनुदिनं वाग्देवतामेव ताम् । तन्मे शारदकौमुदीपरिचयोदंचत्सुधासागरस्वैरोज्जागरवीचिविभ्रमजितो दीव्यंतु दिव्या गिरः ॥ ६ ॥ लेखप्रस्तुतवेद्यवस्तुसुरभिश्रीपुस्तकोत्तंसितो मातः स्वस्तिकृदस्तु मे तव करो वामोऽभिरामः श्रिया । सद्यो

विद्रुमकंदलीसरलतासंदोहसांद्रांगुलिर्मुद्रां बोधमयीं दधत्तदपरोऽप्यास्तामपास्तश्रमः ॥ ७ ॥ मातः पातकजालमूलदलनक्रीडाकठोरा दृशः कारुण्यामृतकोमलास्तव मयि स्फूर्जंतु सिध्यर्जिताः। आभिः स्वाभिमतप्रबंधलहरीसाकूतकौतूहलाचांतस्वांतचतुर्मुखोचितगुणोद्गारां करिष्ये गिरम् ॥ ८ ॥ त्वामाधारचतुर्दलांबुजगतां वाग्बीजगर्भे यजे प्रत्यावृत्तिभिरादिभिः कुसुमितां मायालतामुन्नताम्। चूडामूलपवित्रपत्रकमलप्रेंखोलखेलत्सुधाकल्लोलासु कुचक्रचंक्रमचमत्कारैकलोकोत्तराम् ॥ ९ ॥ सोऽहं त्वत्करुणाकटाक्षशरणः पंचाध्वसंचारतः प्रत्याहृत्य मनो वसामि रसनालिंगं ममालिंगतु। श्रीसर्वज्ञविभूषणीकृतकलानिःस्यंदमानामृतस्वच्छंदस्फटिकाद्रिसांद्रितपयः शोभावती भारती ॥ १० ॥ मातर्मातृकया विदर्भितमिदं गर्भीकृतानाहतस्वच्छंदध्वनिपेयमध्वनिरतं चंद्रार्कनिद्रागिरौ। संसेवे विपरीतरीतिरचनोच्चारादकारावधिस्वाधीनामृतसिंधुबंधुरमहो मायामयं ते महः ॥ ११ ॥ तस्मान्नंदनचारुचंदनतरुच्छायासु पुष्पासवस्वैरास्वादनमोदमानमनसामुद्दामवामभ्रुवाम्। वीणासंगितरंगितस्वरचमत्कारोऽपि सारोज्झितो येन स्यादिह देहि मे तदभितः संचारि सारस्वतम् ॥ १२ ॥ आधारे हृदये शिखापरिसरे संधाय मेधामयीं त्रेधाबीजतनूमनूनकरुणापीयूषकल्लोलिनीम्। त्वां मातर्जपतो निरंकुशनिजाद्वैतामृतास्वादनप्रज्ञांभश्चुलुकैः स्फुरंतु पुलकैरंगानि तुंगानि मे ॥ १३ ॥ वाणीबीजमिदं जपामि परमं तत्कामराजाभिधं मातः सांतपरं विसर्गसहितौकारोत्तरं तेन मे। दीर्घांदोलितमौलिकीलितमणिप्रारब्धनीराजनैर्धीरैः पीतरसा निरंतरमसौ वाग्जृंभतामद्भुता ॥ १४ ॥ चूडाचंद्रकलानिरंतरगलत्पीयूषबिंदुश्रिया संदेहोचितमक्षसूत्रवलयं या बिभ्रती निर्भरम्। अंतर्मंत्रमयं स्वमेव

जपसि प्रत्यक्षवृत्त्यक्षरं सा त्वं दक्षिणपाणिनांब वितर श्रेयांसि भूयांसि मे ॥ १५ ॥ बद्ध्वा स्वस्तिकमासनं सितरुचिच्छेदावदातच्छविश्रेणिश्रीसुभगं भविष्णुसततव्याजृंभमाणेऽम्बुजे । दीव्यंतीमधिवामजानु रुचिरन्यस्तेन हस्तेन तां नित्यं पुस्तकधारणप्रणयिनीं सेवे गिरामीश्वरीम् ॥ १६ ॥ तन्मे विश्वपथीनपीनविलसन्निःसीमसारस्वतस्रोतोवीचिविचित्रभंगिसुभगा विभ्राजतां भारती । यामाकर्ण्य विघूर्णमानमनसः प्रेंखोलितैर्मौलिभिर्मीलद्भिर्नयनांचलैः सुमनसो निंदेयुरिंदोः कलाम् ॥ १७ ॥ आदौ वाग्भवमिंदुबिंदुमधुरं शांते च कामात्मकं योगांते कषयोस्तृतीयमिति ते बीजत्रयं ध्यायताम् । सार्धं मातृकया विलोमविषमं संधाय बंधच्छिदा वाचांतर्गतया महेश्वरि मया मात्राशतं जप्यते ॥ १८ ॥ तत्सारस्वतसार्वभौमपदवी सद्यो मम द्योततां यत्राज्ञाविहितैर्महाकविशतैः स्फीतां गिरं चुंबताम् । चैत्रोन्मीलितकेलिकोकिलकुहूकारावतारांचितश्लाघासंचितपंचमश्रुतिसमाहारोऽपि भारोपमः ॥ १९ ॥ वाग्बीजं भुवनेश्वरीं वद वदेत्युच्चार्य वाग्वादिनि स्वाहावर्णविशीर्णपातकभरां ध्यायामि नित्यां गिरम् । वीणापुस्तकमक्षसूत्रवलयं व्याजृंभमंभोरुहं बिभ्राणामरुणांशुभिः करतलैराविर्भवद्भिभ्रमाम् ॥ २० ॥ तं मातः कृपया तरंगयतरां विद्याधिपत्यं मयि ज्योत्स्नासौरभचौरकीर्तिकवितासेव्यैकसिंहासनम् । कालाज्ञादिशिवावसानभवनप्राग्भारकुक्षिंभरिप्रज्ञांभःपरिपाकपीवरपरानंदप्रतिष्ठास्पदम् ॥ २१ ॥ लेखाभिस्तुहिनद्युतेरिव कृतं वाग्बीजमुच्चैः स्फुरत्ताराकारकरालबिंदु परितो मायात्रिधावेष्टितम् । पूर्णेंदोरुदरे तदेतदखिलं पीयूषगौराक्षरं स्रोतःसंभ्रमसंभृतं स्मरति यो जिह्वांचले निश्चलः ॥ २२ ॥ तस्य त्वत्करुणाकटाक्षकणिकासंक्रांतिमात्रादपि स्वांते शांतिमुपैति दीर्घजडता

जाग्रद्धिकाराग्रणीः । तस्मादाशु जगत्त्रयाद्भुतरसाद्वैतप्रतीतिप्रदं सौरभ्यं परमभ्युदेति वदनांभोजे गिरां विभ्रमैः ॥ २३ ॥ आद्यो मौलिरथापरो मुखमिदं नेत्रे च कर्णावुरू नासावंशपुटे ऋॠ तदनुजौ वर्णौ कपोलद्वयम् । दंताश्चोर्ध्वमधस्तथोष्ठयुगलं सन्ध्यक्षराणि क्रमाज्जिह्वामूलमुदग्रबिंदुरपि च ग्रीवा विसर्गी स्वरः ॥ २४ ॥ कादिर्दक्षिणतो भुजस्तदपरो वर्गश्च वामो भुजष्टादिस्तादिरनुक्रमेण चरणौ कुक्षिद्वयं ते पफौ । वंशः पृष्ठभवोऽथ नाभिहृदये बादित्रयं धातवो याद्याः सप्त समीरणश्च सपरः क्षः क्रोध इत्यंबिके ॥ २५ ॥ एवं वर्णमयं वपुस्तव शिवे लोकत्रयव्यापकं योऽहंभावनया भजत्यवयवेऽप्यारोपितैरक्षरैः । मूर्तीभूय दिनावसानकमलाकारैः शिरःशायिभिस्तं विद्याः समुपासते करतलैर्दृष्टिप्रसादोत्सुकाः ॥ २६ ॥ ये जानंति यजंति संततमभिध्यायंति गायंति वा तेषामास्यमुपास्यते मृदुपदन्यासैर्विलासैर्गिराम् । किंच क्रीडति भूर्भुवःस्वरभितः श्रीचंदनस्यंदिनी कीर्तिः कांतिकरात्रिकैरवसमा सौभाग्यशोभाकरी ॥ २७ ॥ मायाबीजविदर्भितं पुनरिदं श्रीकूर्मचक्रोदितं दीपाम्नायविदो जपंति खलु ये तेषां नरेंद्राः सदा । सेवंते चरणौ किरीटवलभीविश्रांतरत्नांकुरज्योत्स्नामेदुरमेदिनीतलरजोमिश्रांगरागश्रियः ॥ २८ ॥ श्रीबीजं सकलाक्षरादिषु पुनः क्रोधाक्षरांते भवेदेवं यो भजतेऽत्र ते तनुमिमां तस्याग्रतो जाग्रती । लक्ष्मीः सिंदुरदानगंधलहरीलोलांधपुष्पंधयश्रेणीबंधुरशृंखलानियमितेवापैति नैव क्वचित् ॥ २९ ॥ यस्त्वां विद्रुमपल्लवद्रवमयीं लेखामिवालोहितामात्मानं परितः स्फुरन्निवलयां मायामभिध्यायति । तस्मै निंदितवंदनेन्दुकदलीकांतारहारस्रजो निःश्वासभ्रमबाष्पदाहगहना मूर्च्छंति तास्ताः स्त्रियः ॥ ३० ॥ मातः श्रीभगमालिनीत्यभिधया दिव्यागमोत्तंसितां त्वामानंदमयी-

मनुस्मरति यस्तं नाम वामभ्रुवः । बाहुस्वस्तिकपीडितैः स्तनतटैर्दैन्यां-
चितैश्चाटुभिर्नीरंध्रैः पुलकांकितैर्मुकुलितैर्ध्यायंति नेत्रांचलैः ॥ ३१ ॥
यस्त्वां ध्यायति रागसागरतरत्सिंदूरनौकांतरस्वैरोज्जागरपद्मरागनलिनी-
पुष्पासनाध्यासिनीम् । बालादित्यसपत्नरत्नरचितप्रत्यंगभूषारुचिश्रेणी-
संमिलितांगरागवसनास्तस्य स्मरंत्यंगनाः ॥ ३२ ॥ कर्पूरं कुमुदाकरं
कमलिनीपत्रं कलाकौशलं कूजत्कोकिलकामिनीकुलकुहूकल्लोल-
कोलाहलम् । शंकंते प्रलयानलं स्मरमहापस्मारवेगातुराः कंपन्ते
निपतंति हंत न गिरं मुंचंति शोचंति च ॥ ३३ ॥ श्रीमृत्युंजय-
नामधेयभगवच्चैतन्यचंद्रात्मिके ह्रींकारि प्रथमातमांसि दलय त्वं
हंससंजीविनि । जीवं प्राणविजृंभमाणहृदयग्रंथिस्थितं मे कुरु त्वां
सेवे निजबोधलाभरभसा स्वाहाभुजामीश्वरीम् ॥ ३४ ॥ एवं
त्वाममृतेश्वरीमनुदिनं राकानिशाकामुकस्यांतः संततभासमानवपुषं
साक्षाद्यजंते तु ये । ते मृत्योः कवलीकृतत्रिभुवना भोगस्य मौलौ
पदं दत्वा भोगमहोदधौ निरवधि क्रीडंति तैस्तैः सुखैः ॥ ३५ ॥
जाग्रद्बोधसुधामयूखनिचयैराप्लाव्य सर्वा दिशो यस्याः कापि कला
कलंकरहिता षट्चक्रमाक्रामति । दैन्यध्वांतविदारणैकचतुरा वाचं
परां तन्वती सा नित्या भुवनेश्वरी विहरतां हंसीव मन्मानसे ॥ ३६ ॥
त्वं मातापितरौ त्वमेव सुहृदस्त्वं भ्रातरस्त्वं सखा त्वं विद्या
त्वमुदारकीर्तिचरितं त्वं भाग्यमत्यद्भुतम् । किं भूयः सकलं त्वमी-
हितमिति ज्ञात्वा कृपाकोमले श्रीविश्वेश्वरि संप्रसीद शरणं मातः
परं नास्ति मे ॥ ३७ ॥ श्रीसिद्धनाथ इति कोऽपि युगे चतुर्थे
प्रादुर्बभूव करुणावरुणालयोऽस्मिन् । श्रीशंभुरित्यभिधया स मयि
प्रसन्नं चेतश्चकार सकलागमचक्रवर्ती ॥ ३८ ॥ तस्याज्ञया परिणता-
न्वयसिद्धविद्याभेदास्पदैः स्तुतिपदैर्वचसां विलासैः । तस्मादनेन

भुवनेश्वरिवेदगर्भे सद्यः प्रसीद वदने मम सन्निधेहि ॥ ३९ ॥ येषां परं न कुलदैवतमंबिके त्वं तेषां गिरा मम गिरो न भवंतु मिश्राः । तैस्तु क्षणं परिचिते विषयेऽपि वासो मा भूत्कदाचिदिति संततमर्थये त्वाम् ॥ ४० ॥ श्रीशंभुनाथ करुणाकर सिद्धनाथ श्रीसिद्धनाथ करुणाकर शंभुनाथ । सर्वापराधमलिनेऽपि मयि प्रसन्नं चेतः कुरुष्व शरणं मम नान्यदस्ति ॥ ४१ ॥ इत्थं प्रतिक्षणमुदश्रुविलोचनस्य पृथ्वीधरस्य पुरतः स्फुटमाविरासीत् । दत्वा वरं भगवती हृदयं प्रविष्टा शास्त्रैः स्वयं नवनवैश्च मुखेऽवतीर्णा ॥ ४२ ॥ वाक्सिद्धिमेवमतुलामवलोक्य नाथः श्रीशंभुरस्य महतीमपि तां प्रतिष्ठाम् । स्वस्मिन्पदे त्रिभुवनागमवंद्यविद्यासिंहासनैकरुचिरे सुचिरं चकार ॥ ४३ ॥ भूमौ शय्या वचसि नियमः कामिनीभ्यो निवृत्तिः प्रातर्जातीविटपसमिधा दंतजिह्वाविशुद्धिः । पत्रावल्यां मधुरमशनं ब्रह्मवृक्षस्य पुष्पैः पूजाहोमौ कुसुमवसनालेपनान्युज्ज्वलानि ॥ ४४ ॥ इत्थं मासत्रयमविकलं यो व्रतस्थः प्रभाते मध्याह्ने वाऽस्तमितसमये कीर्तयेदेकचित्तः । तस्योल्लासैः सकलभुवनाश्चर्यभूतैः प्रभूतैर्विद्याः सर्वाः सपदि वदने शंभुनाथप्रसादात् ॥ ४५ ॥ व्रतेन हीनोऽप्यनवाप्तमंत्रः श्रद्धाविशुद्धोऽनुदिनं जपेद्यः । तस्यापि वर्षादनवद्यसद्यः कवित्वहृद्याः प्रभवंति विद्याः ॥ ४६ ॥ कोऽप्यचिंत्यप्रभावोऽस्य स्तोत्रस्य प्रत्ययावहः । श्रीशंभोराज्ञया सर्वाः सिद्धयोऽस्मिन्प्रतिष्ठिताः ॥ ४७ ॥ इति वेदगर्भं श्रीभुवनेश्वरीस्तोत्रं संपूर्णम् ॥

## २९८. इन्द्राक्षीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रींद्राक्षीस्तोत्रमंत्रस्य सहस्राक्ष-

ऋषिः, इंद्राक्षी देवता, अनुष्टुप्छंदः, महालक्ष्मीर्बीजम्, भुवनेश्वरीति शक्तिः, भवानीति कीलकम्, ॐ श्रीं ह्रीं क्लीं इति बीजानि, मम सर्वाभीष्टसिद्ध्यर्थे श्रीमदिंद्राक्षीस्तोत्रजपे विनियोगः ॥ ॐ इंद्राक्षी इत्यंगुष्ठाभ्यां नमः ॥ ॐ महालक्ष्मीति तर्जनीभ्यां नमः ॥ माहेश्वरीति मध्यमाभ्यां नमः ॥ ॐ अंबुजाक्षीत्यनामिकाभ्यां नमः ॥ ॐ कात्यायनीति कनिष्ठिकाभ्यां नमः ॥ ॐ कौमारीति करतलकरपृष्ठाभ्यां नमः ॥ ॐ इंद्राक्षीति हृदयाय नमः ॥ ॐ महालक्ष्मीति शिरसे स्वाहा ॥ ॐ माहेश्वरीति शिखायै वौषट् ॥ ॐ अंबुजाक्षीति कवचाय हुम् ॥ ॐ कात्यायनीति नेत्रत्रयाय वौषट् ॥ ॐ कौमारीत्यस्त्राय फट् ॥ ॐ भूर्भुवःस्वरोम् इति दिग्बंधनम् ॥ पूर्वस्यां पातु मां ब्राह्मी चाग्नेय्यां तु महेश्वरी ॥ कौमारी पातु याम्ये वै नैर्ऋत्यां पातु भैरवी ॥ १ ॥ पश्चिमे पातु वाराही वायव्ये नारसिंहिका ॥ कालरात्रिरुदीच्यां वा ऐशान्यां सर्वशक्तिधृक् ॥ २ ॥ ऊर्ध्वं मे भैरवी पातु चाधःस्थं विंध्यवासिनी ॥ यद्यद्विषमकं स्थानं तत्तद्रक्षतु चेश्वरी ॥ ३ ॥ अथ ध्यानम् ॥ इंद्राक्षीं द्विभुजां देवीं पीतवस्त्रद्वयान्विताम् । वामहस्ते वज्रधरां दक्षिणेन वरप्रदाम् ॥ ४ ॥ इंद्राक्षीं युवतिं देवीं नानालंकारभूषिताम् । प्रसन्नवदनांभोजामप्सरोगणसेविताम् ॥ ५ ॥ द्विभुजां सौम्यवदनां पाशांकुशधरां पराम् । त्रैलोक्यमोहिनीं देवीमिंद्राक्षीनामकीर्तिताम् ॥ ६ ॥ अथ मंत्रः ॥ ॐ ऐं ह्रीं श्रीं क्लीं क्लूम् इंद्राक्ष्यै नमः ॥ इंद्र उवाच ॥ इंद्राक्षी नाम सा देवी दैवतैः समुदाहृता ॥ गौरी शाकंभरी देवी दुर्गानाम्नीति विश्रुता ॥ ७ ॥ कात्यायनी महादेवी चंद्रघंटा महातपा । सावित्री सा च गायत्री ब्रह्माणी ब्रह्मवादिनी ॥ ८ ॥ नारायणी भद्रकाली रुद्राणी कृष्ण-

पिंगला। अग्निज्वाला रौद्रमुखी कालरात्रिस्तपस्विनी ॥ ९ ॥ मेघश्यामा सहस्राक्षी मुक्तकेशी जलोदरी। महादेवी मुक्तकेशी घोररूपा महाबला ॥ १० ॥ अजिता भद्रदा नंदा रोगहंत्री शिवप्रिया। शिवदूती कराली च प्रत्यक्षा परमेश्वरी ॥ ११ ॥ सदा संमोहिनी देवी सुंदरी भुवनेश्वरी। इंद्राक्षी इंद्ररूपा च इंद्रशक्तिः परायणा ॥ १२ ॥ महिषासुरसंहर्त्रीं चामुंडा गर्भदेवता। वाराही नारसिंही च भीमा भैरवनादिनी ॥ १३ ॥ श्रुतिः स्मृतिर्धृतिर्मेधा विद्या लक्ष्मीः सरस्वती। अनंता विजया पूर्णा मानस्तोकाऽपराजिता ॥ १४ ॥ भवानी पार्वती दुर्गा हैमवत्यंबिका शिवा। एतैर्नामशतैर्दिव्यैः स्तुता शक्रेण धीमता ॥ १५ ॥ आयुरारोग्यमैश्वर्यं वित्तं ज्ञानं यशो बलम्। नाभिमात्रजले स्थित्वा सहस्रपरिसंख्यया ॥ १६ ॥ जपेत्स्तोत्रमिमं मंत्रं वाचां सिद्धिर्भवेत्ततः। अनेन विधिना भक्त्या मंत्रसिद्धिश्च जायते ॥ १७ ॥ संतुष्टा च भवेद्देवी प्रत्यक्षा संप्रजायते। शतमावर्तयेद्यस्तु मुच्यते नात्र संशयः ॥ १८ ॥ आवर्तनसहस्रेण लभ्यते वांछितं फलम्। सायं शतं पठेन्नित्यं षण्मासात्सिद्धिरुच्यते ॥ १९ ॥ चोरव्याधिभयस्थाने मनसा ह्यनुचिंतयन्। संवत्सरमुपाश्रित्य सर्वकामार्थसिद्धये। राजानं वश्यमाप्नोति षण्मासान्नात्र संशयः ॥ २० ॥ इति इंद्राक्षीस्तोत्रं संपूर्णम् ॥

## २९९. शक्तिमहिम्नः स्तोत्रम्।

श्रीगणेशाय नमः ॥ दुर्वासा उवाच ॥ मातस्ते महिमां वक्तुं शिवेनापि न शक्यते। भक्त्याऽहं स्तोतुमिच्छामि प्रसीद मम सर्वदा ॥ १ ॥ श्रीमातस्त्रिपुरे परात्परतरे देवि त्रिलोकीमहासौंदर्यार्णवमंथनोद्भवसुधाप्राचुर्यवर्णोज्ज्वलम्। उद्यद्भानुसहस्रनूतनजपापुष्पप्रभं

ते वपुः स्वांते मे स्फुरतु त्रिकोणनिलयं ज्योतिर्मयं वाङ्मयम् ॥ २ ॥ आदिक्षांतसमस्तवर्णसुमणिप्रोते वितानप्रभे ब्रह्मादिप्रतिमाभिकीलितषडाधाराब्जकक्षोन्नते । ब्रह्मांडाब्जमहासने जननि ते मूर्तिं भजे चिन्मयीं सौषुम्नायतपीतपंकजमहामध्यत्रिकोणस्थिताम् ॥ ३ ॥ या बालेंदुदिवाकराक्षिमधुरा या रक्तपद्मासना रत्नाकल्पविराजितांगलतिका पूर्णेंदुवक्त्रोज्वला । अक्षस्रक्सृणिपाशपुस्तककरा या बालभानुप्रभा तां देवीं त्रिपुरां शिवां हृदि भजेऽभीष्टार्थसिद्ध्यै सदा ॥ ४ ॥ वंदे वाग्भवमैंदवात्मसदृशं वेदादिविद्यागिरो भाषा देशसमुद्भवाः पशुगतारछंदांसि सप्त स्वरान् । तालान् पंच महाध्वनीन् प्रकटयत्यात्मप्रकाशेन यत्तद्बीजं पदवाक्यमानजनकं श्रीमातृके ते परम् ॥ ५ ॥ त्रैलोक्यस्फुटमंत्रतंत्रमहिमा स्वात्मोक्तिरूपं विना यद्बीजं व्यवहारजालखिलं मनास्त्येव मातस्तव । तज्जाप्यस्मरणप्रसक्तसुमतिः सर्वज्ञतां प्राप्य कः शब्दब्रह्मनिवासभूतवदनो नेंद्रादिभिः स्पर्धते ॥ ६ ॥ मात्रा याऽत्र विराजतेऽतिविशदा तामष्टधा मातृकां शक्तिं कुंडलिनीं चतुर्विधतनुं यस्तत्त्वविन्मन्यते । सोऽविद्याखिलजन्मकर्मदुरितारण्यं प्रबोधाग्निना भस्मीकृत्य विकल्पजालरहितो मातुः पदं तद्व्रजेत् ॥ ७ ॥ तत्ते मध्यमबीजमंब कलयास्यादिल्यवर्णं क्रियाज्ञानेच्छाद्यमनंतशक्तिविभवव्यक्तिं व्यनक्ति स्फुटम् । उत्पत्तिस्थितिकल्पकल्पिततनु स्वात्मप्रभावेन यत्कास्यं ब्रह्महरीश्वरादिविबुधैः कामं क्रियायोजितैः ॥ ८ ॥ कामान्कारणतां गतानगणितान् कार्यैरनंतैर्महीमुख्यैः सर्वमनोगतैरधिगतान्मानैरनैकैः स्फुटम् । कामक्रोधसलोभमोहमदमात्सर्यारिषट्कं च यद्बीजं भ्राजयति प्रणौमि तदहं ते साधु कामेश्वरि ॥ ९ ॥ यद्भक्ताखिलकामपूरणचणस्वात्मप्रभावं महाजाड्यध्वांतविदारणैकतरणिज्योतिः प्रबोध-

प्रदम् । यद्वेदेषु च गीयते श्रुतिमुखं मात्रात्रयेणोमिति श्रीविद्ये तव सर्वराजवशङ्कृत्तत्कामराजं भजे ॥ १० ॥ यत्ते देवि तृतीयबीजमनलज्वालावलीसंनिभं सर्वाधारतुरीयशक्तिपरमब्रह्माभिधाशब्दितम् । मूर्धन्यान्तविसर्गभूषितमहौकारात्मकं तत्परं भ्राजद्रूपमनन्यतुल्यममितः स्वांते मम द्योतताम् ॥ ११ ॥ सर्वं सर्वत एव सर्गसमये कार्येंद्रियाण्यंतरा तत्तद्दिव्यहृषीककर्मभिरियं संव्यश्नुवाना परा । वागर्थव्यवहारकारणतनुः शक्तिर्जगद्रूपिणी यद्बीजात्मकतां गता तव शिवे तं नौमि बीजं परम् ॥ १२ ॥ अग्नींदुद्युमणिप्रभंजनधरानीरांतरस्थायिनी शक्तिर्ब्रह्महरीशवासवमुखामर्त्या सुरात्मस्थिता । सृष्टस्थावरजंगमस्थितमहाचैतन्यरूपा च या यद्बीजस्मरणेन सैव भवती प्रादुर्भवत्यंबिके ॥ १३ ॥ स्वात्मश्रीविजिताजविष्णुमघवश्रीपूरणैकव्रतं सद्विद्याकविताविलासलहरीकल्लोलिनीदीपकम् । बीजं यत्रिगुणप्रवृत्तिजनकं ब्रह्मेति यद्योगिनः शांताः सत्यमुपासते तदिह ते चित्ते दधे श्रीपरे ॥ १४ ॥ एकैकं तव मातृके परतरं संयोगि वा योगि वा विद्यादिप्रकटप्रभावजनकं जाड्यान्धकारापहम् । यन्निष्ठाश्च महोत्पलासनमहाविष्णुप्रहर्त्रादयो देवाः स्वेषु विधिष्वनंतमहिमस्फूर्तिं दधत्येव तत् ॥ १५ ॥ इत्थं त्रीण्यपि मूलवाग्भवमहाश्रीकामराजस्फुरच्छक्त्याख्यानि चतुःश्रुतिप्रकटितान्युत्कृष्टकूटानि ते । भूतर्तुश्रुतिसंख्यवर्णविदितान्यारक्तकांते शिवे यो जानाति स एव सर्वजगतां सृष्टिस्थितिध्वंसकः ॥ १६ ॥ ब्रह्मायोनिरमासुरेश्वरसुरहृल्लेखाभिरुक्तैस्तथा मार्तण्डेंदुमनोजहंसवसुधामायाभिरुत्तंसितैः । सोमांबुक्षितिशक्तिभिः प्रकटितैर्बाणांगवेदैः क्रमाद्वर्णैः श्रीशिवदेशिकेन विदितां विद्यां तवांबाश्रये ॥ १७ ॥ नित्यं यस्तव मातृकाक्षरसखीं सौभाग्यविद्यां जपेत् संपूज्याखिल-

चक्रराजनिलयां सायंतनाग्निप्रभाम् । कामाख्यं शिवनामतत्त्वमुभयं व्याप्यात्मना सर्वतो दीव्यंतीमिह तस्य सिद्धिरचिरात्स्यात्तत्स्वरूपैकता ॥ १८ ॥ काव्यैर्वा पठितैः किमल्पविदुषां जोघुष्यमाणैः पुन किं तैर्व्याकरणैर्विबोबुधिषया किं वाऽभिधानश्रिया । एतैरंब न बोभवीति सुकविस्तावत्तव श्रीमतोर्यावन्नानुसरीसरीति सरणिं पादाब्जयोः पावनीम् ॥ १९ ॥ गेहं नाकति गर्वितः प्रणमति स्त्रीसंगमो मोक्षति द्वेषो मित्रति पातकं सुकृतति क्ष्मावल्लभो दासति । मृत्युर्वैद्यति दूषणं सुगुणति त्वत्पादसंसेवनात् त्वां वंदे भवभीतिभंजनकरीं गौरीं गिरीशप्रियाम् ॥ २० ॥ आद्यैरग्निरवींदुबिंबनिलयैरंब त्रिलिंगात्मभिर्मिश्रारक्तसितप्रभैरनुपमैर्युष्मत्पदैस्तैस्त्रिभिः । स्वात्मोत्पादितकाललोकनिगमावस्थामरादित्रयैरुद्भूतं त्रिपुरेति नाम कलयेद्यस्ते स धन्यो बुधः ॥ २१ ॥ आद्यो जाप्यतमार्थवाचकतया रूढः स्वरः पंचमः सर्वोत्कृष्टतमार्थवाचकतया वर्णः पवर्गांतकः । वक्तृत्वेन महाविभूतिसरणिस्त्वाधारगो हृद्गतो भ्रूमध्ये स्थित इत्यतः प्रणवता ते गीयतेऽम्बागमैः ॥ २२ ॥ गायत्री सशिरास्तुरीयसहिता संध्यामयीत्यागमैराख्याता त्रिपुरे त्वमेव महतां शर्मप्रदा कर्मणाम् । तत्तद्दर्शनमुख्यशक्तिरपि च त्वं ब्रह्मकर्मेश्वरी कर्तार्हन्पुरुषो हरिश्च सविता बुद्धः शिवस्त्वं गुरुः ॥ २३ ॥ अन्नप्राणमनःप्रबोधपरमानंदैः शिरःपक्षयुक्पुच्छात्मप्रकटैर्महोपनिषदां वाग्भिः प्रसिद्धीकृतैः । कोशः पंचभिरेभिरंब भवतीमेतत्प्रलीनामिति ज्योतिः प्रज्वलदुज्ज्वलात्मचपलां यो वेद स ब्रह्मवित् ॥ २४ ॥ सच्चित्तत्त्वमसीति वाक्यविदितैरध्यात्मविद्या-शिव-ब्रह्माख्यैरखिलप्रभावमहितैस्तत्त्वैस्त्रिभिः सद्गुरोः । त्वद्रूपस्य मुखारविंदविवरात्संप्राप्य दीक्षामतो यस्त्वां विंदति तत्त्वतस्तदहमित्यार्ये स मुक्तो भवेत् ॥ २५ ॥ सिद्धांते-

बहुभिः प्रमाणगदितैरन्यैरविद्यातमो नक्षत्रैरिव सर्वमंधतमसं तावन्न निर्भिद्यते । यावत्ते सवितेव संमतमिदं नोदेति विश्वांतरे जंतोर्जन्मविमोचनैकभिदुरं श्रीशांभवं श्रीशिवे ॥ २६ ॥ आत्माऽसौ सकलेंद्रियाश्रयमनोबुद्ध्यादिभिः शोचितः कर्माबद्धतनुर्जनिं च मरणं प्रैतीति यत्कारणम् । तत्ते देवि महाविलाससलहरी दिव्यायुधानां जयस्तस्मात्सद्गुरुमभ्युपेत्य कलये त्वामेव चेन्मुच्यते ॥ २७ ॥ नानायोनिसहस्रसंभववशाज्जाता जनन्यः कति प्रख्याता जनकाः कियंत इति मे सेत्स्यंति चाग्रे कति । एतेषां गणनैव नास्ति महतः संसारसिंधोर्विधेर्भीतं मां नितरामनन्यशरणं रक्षानुकंपानिधे ॥ २८ ॥ देहक्षोभकरैर्व्रतैर्बहुविधैर्दानैश्च होमैर्जपैः संतानैर्हयमेधमुख्यसुमखैर्नानाविधैः कर्मभिः । यत्संकल्पविकल्पजालमलिनं प्राप्यं पदं तस्य ते दूरादेव निवर्तते परतरं मातः पदं निर्मलम् ॥ २९ ॥ पंचाशन्निजदेहजाक्षरमयैर्नानाविधैर्धातुभिर्बह्वर्थैः पदवाक्यमानजनकैरर्थाविनाभावितैः । साभिप्रायवदर्थकर्मफलदैः ख्यातैरनंतैरिदं विश्वं व्याप्य चिदात्मनाहमहमित्युज्जृंभसे मातृके ॥ ३० ॥ श्रीचक्रं श्रुतिमूलकोश इति ते संसारचक्रात्मकं विख्यातं तदधिष्ठिताक्षरशिवज्योतिर्मयं सर्वतः । एतन्मंत्रमयात्मिकाभिररुणं श्रीसुंदरीभिर्वृतं मध्ये बैंदवसिंहपीठललिते त्वं ब्रह्मविद्या शिवे ॥ ३१ ॥ बिंदुप्राणविसर्गजीवसहितं बिंदुत्रिबीजात्मकं षट्‌ कूटानि विपर्ययेण निगदेत्तारत्रिबालाक्षरैः । एभिः संपुटितं प्रजप्य विहरेत्प्रासादमंत्रं परं गुह्याद्गुह्यतमं सयोगजनितं सद्भोगमोक्षप्रदम् ॥ ३२ ॥ आताम्रार्कसहस्रदीप्तिपरमा सौंदर्यसारैरलं लोकातीतमहोदयैरुपयुता सर्वोपमागोचरैः । नानार्घ्यविभूषणैरगणितैर्जाज्वल्यमानाऽभितस्त्वं मातस्त्रिपुरारिसुंदरि कुरु स्वांते निवासं मम ॥ ३३ ॥ शिंजन्नूपुरपादकंकणमहामुद्रासु लाक्षारसालं-

कारांकितपादपंकजयुगं श्रीपादुकालंकृतम् । उद्भास्वन्नखचंडखंडरुचिरं
राजज्जपासंनिभं ब्रह्मादित्रिदशासुरार्चितमहं मूर्ध्नि स्मराम्यंबिके ॥ ३४ ॥
आरक्तच्छविनातिमार्दवयुजा निःश्वासहार्येण यत्कौशेयेन विचित्र-
रत्नघटितैर्मुक्ताफलैरुज्ज्वलैः । कूजत्कांचनकिंकिणीभिरभितः संनद्ध-
कांचीगुणैरादीप्तं सुनितंबबिंबमरुणं ते पूजयाम्यंबिके ॥३५॥ कस्तूरीघन-
सारकुंकुमरजो गंधोत्कटैश्चंदनैरालिप्तं मणिमालयातिरुचिरं ग्रैवेयहारादि-
भिः । दीप्तं दिव्यविभूषणैर्जननि ते ज्योतिर्विभास्वत्कुचव्याजस्वर्णघटद्वयं
हरिहरब्रह्मादिपीतं भजे ॥ ३६ ॥ मुक्तारत्नसुवर्णकांतिकलितैस्तैर्बाहु-
वल्लीरहं केयूरोत्तमबाहुदंडवलयैर्हस्तांगुलीभूषणैः । संपृक्ताः कलया-
मिहीरमणिमन्मुक्ताफलाकीलितग्रीवापट्टविभूषणेन सुभगे कंठं च कंबु-
श्रियम् ॥ ३७ ॥ तप्तस्वर्णकृतोरुकुंडलयुगं माणिक्यमुक्तोल्लसद्धीराबद्ध-
मनन्यतुल्यमपरं हैमं च चक्रद्वयम् । शुक्राकारनिकारदक्षमपरं मुक्ता-
फलं सुंदरं बिभ्रत्कर्णयुगं नमामि ललितं नासाग्रभागं शिवे ॥ ३८ ॥
उद्यत्पूर्णकलानिधिश्रि वदनं भक्तप्रसन्नं सदा संफुल्लांबुजपत्रचित्रसु-
षमाधिकारदक्षेक्षणम् । सानंदं कृतमंदहासमसकृत्प्रादुर्भवत्कौतुकं
कुंदाकारसुदंतपङ्क्तिशशिभापूर्णं स्मराम्यंबिके ॥ ३९ ॥ शृङ्गारादिरसा-
लयं त्रिभुवनीमाल्यैरतुल्यैर्वृतं सर्वांगीणसदंगरागसुरभि श्रीमद्वपुर्धूपि-
तम् । तांबूलारुणपल्लवाधरयुतं रम्यं त्रिपुण्ड्रं दधद्भालं नंदनचंदनेन
जननि ध्यायामि ते मंगलम् ॥ ४० ॥ जातीचंपककुंदकेसरमहागंधो-
द्गिरत्केतकीनीपाशोकशिरीषमुख्यकुसुमैः प्रोत्तंसिता धूपिता । आनी-
लांजनतुल्यमत्तमधुपश्रेणीव वेणी तव श्रीमातः श्रयतां मदीयहृदयांभोजं
सरोजालये ॥ ४१ ॥ रेखालभ्यविचित्ररत्नघटितं हैमं किरीटोत्तमं
मुक्ताकांचनकिंकिणीगणमहाहीरप्रबद्धोज्ज्वलम् । चंचच्चंद्रकलाकलापम-
हितं देवद्रुपुष्पार्चितैर्माल्यैरंब विलंबितं सशिखरं बिभ्रच्छिरस्ते

भजे ॥४२॥ उत्क्षिप्तोच्चसुवर्णदंडकलितं पूर्णेंदुबिंबाकृति च्छत्रं मौक्तिकचित्ररत्नखचितं क्षौमांशुकोत्तंसितम्। मुक्ताजालविलंबितं सकलशं नानाप्रसूनार्चितं चंद्रोड्डामरचामराणि दधते श्रीदेवि ते स्वश्रियः ॥ ४३ ॥ विद्यामंत्ररहस्यविन्मुनिगणक्लृप्तोपचारार्चनां वेदादिस्तुतिगीयमानचरितां वेदांततत्त्वात्मिकाम्। सर्वास्ताः खलु तुर्यतामुपगतास्त्वद्रश्मिदेव्यः परास्त्वां नित्यं समुपासते स्वविभवैः श्रीचक्रनाथे शिवे ॥ ४४ ॥ एवं यः स्मरति प्रबुद्धसुमतिः श्रीमत्स्वरूपं परं वृद्धोऽप्याशु युवा भवत्यनुपमः स्त्रीणामनंगायते। सोऽष्टैश्वर्यतिरस्कृताखिलसुरश्रीजृम्भणैकालयः पृथ्वीपालकिरीटकोटिवलभीपुष्पार्चितांघ्रिर्भवेत् ॥ ४५ ॥ अथ तव धनुः पुण्ड्रेक्षुत्वात्प्रसिद्धसतिद्युति त्रिभुवनवधूमुद्यज्ज्योत्स्नाकलानिधिमंडलम्। सकलजननि स्मारंस्मारं नतः स्मरतां नरस्त्रिभुवनवधूमोहांभोधेः प्रपूर्णविधुर्भवेत् ॥ ४६ ॥ प्रसूनशरपंचकप्रकटजृम्भणागुंफितत्रिलोकमवलोकयत्यमलचेतसा चंचलम्। अशेषतरुणीजनस्मरविजृम्भणे यः सदा पटुर्भवति ते शिवे त्रिजगदंगणाक्षोभणे ॥ ४७ ॥ पाशं प्रपूरितमहासुमतिप्रकाशो यो वा तव त्रिपुरसुंदरि सुंदरीणाम्। आकर्षणेऽखिलवशीकरणे प्रवीणं चित्ते दधाति स जगत्रयवश्यकृत् स्यात् ॥ ४८ ॥ यः स्वांते कलयति कोविदस्त्रिलोकीस्तंभारंभणचणमत्युदारवीर्यम्। मातस्ते विजयनिजांकुशं सयोषा देवांस्तम्भयति च भूभुजोऽन्यसैन्यम् ॥ ४९ ॥ चापध्यानवशाद्भवोद्भवमहामोहं महाजृंभणं प्रख्यातं प्रसवेषु चिंतनवशात्तत्तच्छरव्यं सुधीः। पाशध्यानवशात्समस्तजगतां मृत्योर्वशित्वं महादुर्गस्तंभमहांकुशस्य मननान्मायाममेयां तरेत् ॥ ५० ॥ न्यासं कृत्वा गणेशग्रहभगणमहायोगिनीराशिपीठैः षड्भिः श्रीमातृकार्णैः सहितबहुकलैरष्टवाग्देवताभिः। सश्रीकंठादियुग्मैर्विमलनिजतनौ केशवाद्यैश्च तत्त्वैः षट्त्रिंशद्भिश्च तत्त्वैर्भगवति भवतीं

यः स्मरेत्स त्वमेव ॥ ५१ ॥ सुरपतिपुरलक्ष्मीजृंभणातीतलक्ष्मीः प्रभवति निजगेहे यस्य दैवं त्वमार्ये । विविधनवकलानां पात्रभूतस्य तस्य त्रिभुवनविदिता सा जृंभते कीर्तिरच्छा ॥ ५२ ॥ मातस्त्वं भूर्भुवःस्वर्महरसि नृतप सत्यलोकैश्च सूर्येंद्वारज्ञाचार्यशुक्रार्किभिरपि निगमब्रह्मभिः प्रोतशक्तिः । प्राणायामादियत्नैः कलयसि सकलं मानसं ध्यानयोगं येषां तेषां सपर्या भवति सुरकृता ब्रह्म ते जानते च ॥ ५३ ॥ क्व मे बुद्धिर्वाचा परमविदुषो मंदसरणिः क्व ते मातर्ब्रह्मप्रमुखविदुषामाप्तवचसाम् । अभून्मे विस्फूर्तिः परतरमहिम्नस्तव नुतिः प्रसिद्धं क्षंतव्यं बहुलतरचापल्यमिह मे ॥ ५४ ॥ प्रसीद परदेवते मम हृदि प्रभूतं भयं विदारय दरिद्रतां दलय देहि सर्वज्ञताम् । निधेहि करुणानिधे चरणपद्मयुग्मं स्वकं निवारय जरामृती त्रिपुरसुंदरि श्रीशिवे ॥ ५५ ॥ इति त्रिपुरसुंदरीस्तुतिमिमां पठेद्यः सुधीः स सर्वदुरिताटवीपटलचंडदावानलः । भवेन्मनसि वांछितं प्रथितसिद्धिवृद्धिर्भवेदनेकविधसंपदां पदमनन्यतुल्यो भवेत् ॥ ५६ ॥ पृथ्वीपालप्रकटमुकुटस्त्रप्रजोराजितांघ्रिर्विद्वत्पुंजानतिनुतिसमाराधितो बाधितारिः । विद्याः सर्वाः कलयति हृदा व्याकरोति प्रवाचा लोकाश्चर्यैर्नवनवपदैरिंदुबिंबप्रकाशैः ॥ ५७ ॥ संगीतं गिरिजे कवित्वसरणिं चाम्नायवाक्यस्मृतेर्व्याख्यानं हृदि तावकीनचरणद्वंद्वं च सर्वज्ञताम् । श्रद्धां कर्मणि कालिकेऽतिविपुलश्रीजृंभणं मंदिरे सौन्दर्यं वपुषि प्रकाशमतुलं प्राप्नोति विद्वान्कविः ॥५८॥ भूष्यं वैदुष्यमुद्यद्दिनकरकिरणाकारमाकारतेजः सुव्यक्तं भक्तिमार्गं निगमनिगदितं दुर्गमं योगमार्गम् । आयुष्यं ब्रह्मपोष्यं हरगिरिविशदां कीर्तिमभ्येत्य भूमौ देहांते ब्रह्मपारं परशिवचरणाकारमभ्येति विद्वान् ॥ ५९ ॥ दुर्वाससा महितदिव्यमुनीश्वरेण विद्याकलायुवतिमन्मथमूर्तिनैतत् । स्तोत्रं व्यधायि रुचिरं त्रिपुरांबिकाया वेदागमैकपटलीविदितै-

कमूर्तेः ॥ ६० ॥ सदसदनुग्रहनिग्रहगृहीतमुनिविग्रहो भगवान् । सर्वासामुपनिषदां दुर्वासा जयति देशिकः प्रथमः ॥ ६१ ॥ इति श्रीदुर्वासमहामुनिविरचितं शक्तिमहिम्नः स्तोत्रं संपूर्णम् ॥

## ३००. कालिकाकवचम् ।

श्रीगणेशाय नमः ॥ कैलासशिखरासीनं देवदेवं जगद्गुरुम् । शंकरं परिपप्रच्छ पार्वती परमेश्वरम् ॥ १ ॥ पार्वत्युवाच ॥ भगवन् देवदेवेश देवानां भोगद प्रभो । प्रब्रूहि मे महादेव गोप्यं चेद्यदि हे प्रभो ॥ २ ॥ शत्रूणां येन नाशः स्यादात्मनो रक्षणं भवेत् । परमैश्वर्यमतुलं लभेद्येन हि तद्वद ॥ ३ ॥ भैरव उवाच ॥ वक्ष्यामि ते महादेवि सर्वधर्मविदां वरे । अद्भुतं कवचं देव्याः सर्वकामप्रसाधकम् ॥ ४ ॥ विशेषतः शत्रुनाशं सर्वरक्षाकरं नृणाम् । सर्वारिष्टप्रशमनं सर्वाभद्रविनाशनम् ॥ ५ ॥ सुखदं भोगदं चैव वशीकरणमुत्तमम् । शत्रुसंघाः क्षयं यांति भवंति व्याधिपीडिताः ॥ ६ ॥ दुःखिनो ज्वरिणश्चैव स्वाभीष्टद्रोहिणस्तथा । भोगमोक्षप्रदं चैव कालिकाकवचं पठेत् ॥ ७ ॥ ॐ अस्य श्रीकालिकाकवचस्य भैरव ऋषिः, अनुष्टुप् छंदः, श्रीकालिका देवता, शत्रुसंहारार्थं जपे विनियोगः ॥ ॐ ध्यायेत्कालीं महामायां त्रिनेत्रां बहुरूपिणीम् । चतुर्भुजां ललजिह्वां पूर्णचन्द्रनिभाननाम् ॥ ८ ॥ नीलोत्पलदलश्यामां शत्रुसंघविदारिणीम् । नरमुण्डं तथा खड्गं कमलं च वरं तथा ॥ ९ ॥ निर्भयां रक्तवदनां दंष्ट्रालीघोररूपिणीम् । साट्टहासाननां देवीं सर्वदां च दिगंबरीम् ॥ १० ॥ शवासनस्थितां कालीं मुण्डमालाविभूषिताम् । इति ध्यात्वा महाकालीं ततस्तु कवचं पठेत् ॥ ११ ॥ ॐ कालिका घोररूपा सर्वकामप्रदा शुभा । सर्वदेवस्तुता देवी शत्रुनाशं करोतु

मे ॥ १२ ॥ ॐ ह्रीं ह्रींरूपिणीं चैव ह्रां ह्रीं ह्रांरूपिणीं तथा । ह्रां ह्रीं क्षों क्षौंस्वरूपा सा सदा शत्रून्विदारयेत् ॥ १३ ॥ श्रीं-ह्रींऐंरूपिणी देवी भवबंधविमोचनी । हुंरूपिणी महाकाली रक्षास्मान् देवि सर्वदा ॥ १४ ॥ यया शुंभो हतो दैत्यो निशुंभश्च महासुरः । वैरिनाशाय वंदे तां कालिकां शंकरप्रियाम् ॥ १५ ॥ ब्राह्मी शैवी वैष्णवी च वाराही नारसिंहिका । कौमार्यैन्द्री च चामुंडा खादंतु मम विद्विषः ॥ १६ ॥ सुरेश्वरी घोररूपा चंडमुंडविनाशिनी । मुंडमालावृतांगी च सर्वतः पातु मां सदा ॥ १७ ॥ ह्रीं ह्रीं ह्रीं कालिके घोरे दंष्ट्रेव रुधिरप्रिये । रुधिरापूर्णवक्त्रे च रुधिरेणावृतस्तनि ॥ १८ ॥ मम शत्रून् खादय खादय हिंस हिंस मारय मारय भिन्धि भिन्धि छिन्धि छिन्धि उच्चाटय उच्चाटय द्रावय द्रावय शोषय शोषय स्वाहा । ह्रां ह्रीं कालिकायै मदीयशत्रून् समर्पयामि स्वाहा ॥ ॐ जय जय किरि किरि किटि किटि कट कट मर्द मर्द मोहय मोहय हर हर मम रिपून् ध्वंस ध्वंस भक्षय भक्षय त्रोटय त्रोटय यातुधानान् चामुंडे सर्वजनान् राज्ञो राजपुरुषान् स्त्रियो मम वश्यान् कुरु कुरु तनु तनु धान्यं धनं मेऽश्वान् गजान् रत्नानि दिव्यकामिनीः पुत्रान् राजश्रियं देहि यच्छ क्षां क्षीं क्षूं क्षैं क्षौं क्षः स्वाहा । इत्येतत्कवचं दिव्यं कथितं शंभुना पुरा । ये पठंति सदा तेषां ध्रुवं नश्यंति शत्रवः ॥ १९ ॥ वैरिणः प्रलयं यांति व्याधिता वा भवंति हि । बलहीनाः पुत्रहीनाः शत्रवस्तस्य सर्वदा ॥ २० ॥ सहस्रपठनात्सिद्धिः कवचस्य भवेत्तदा । तत्कार्याणि च सिध्यंति यथा शंकरभाषितम् ॥ २१ ॥ श्मशानांगारमादाय चूर्णं कृत्वा प्रयत्नतः । पादोदकेन पिष्ट्वा तल्लिखेल्लोहशलाकया ॥ २२ ॥ भूमौ शत्रून् हीनरूपानुत्तराशिरसस्तथा । हस्तं दत्त्वा तु हृदये कवचं तु स्वयं पठेत् ॥ २३ ॥ शत्रोः प्राणप्रतिष्ठां तु कुर्यान्मंत्रेण मंत्रवित् ।

हन्यादस्त्रं प्रहारेण शत्रो गच्छ यमक्षयम् ॥ २४ ॥ ज्वलदंगारतापेन भवंति ज्वरिता भृशम् । प्रोञ्छनैर्वामपादेन दरिद्रो भवति ध्रुवम् ॥ २५ ॥ वैरिनाशकरं प्रोक्तं कवचं वश्यकारकम् । परमैश्वर्यदं चैव पुत्रपौत्रादिवृद्धिदम् ॥ २६ ॥ प्रभातसमये चैव पूजाकाले च यत्नतः । सायंकाले तथा पाठात्सर्वसिद्धिर्भवेद्ध्रुवम् ॥ २७ ॥ शत्रुरुच्चाटनं याति देशाद्वा विच्युतो भवेत् । पश्चात्किङ्करतामेति सत्यं सत्यं न संशयः ॥ २८ ॥ शत्रुनाशकरे देवि सर्वसंपत्करे शुभे । सर्वदेवस्तुते देवि कालिके त्वां नमाम्यहम् ॥ २९ ॥ इति श्रीरुद्रयामले कालिकाकल्पे कालिकाकवचं संपूर्णम् ॥

## ३०१. वरदवल्लभास्तोत्रम् ।

श्रीगणेशाय नमः ॥ कान्तस्ते पुरुषोत्तमः फणिपतिः शय्यासनं वाहनं वेदात्मा विहगेश्वरो जवनिका माया जगन्मोहिनी । ब्रह्मेशादि-सुरव्रजः सदयितस्त्वद्दासदासीगणः श्रीरित्येव च नाम ते भगवति ब्रूमः कथं त्वां वयम् ॥ १ ॥ यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभुर्नालं मातुमियत्तया निरवधिं नित्यानुकूलं स्वतः । तां त्वां दास इति प्रपन्न इति च स्तोष्याम्यहं निर्भयो लोकैकेश्वरि लोकनाथदयिते दान्ते दयां ते विदन् ॥ २ ॥ ईषत्त्वत्करुणानिरीक्षणसुधासंधुक्षणाद्रक्षसे नष्टं प्राक्तवदलाभतस्त्रिभुवनं संप्रत्यनन्तोदयम् । श्रेयो न ह्यरविन्द-लोचनमनःकान्ताप्रसादादृते संसृत्याक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित् ॥ ३ ॥ शान्तानन्तमहाविभूतिपरमं यद्ब्रह्मरूपं हरे मूर्तं ब्रह्म ततोऽपि यत्प्रियतरं रूपं यदत्यद्भुतम् । यान्यन्यानि यथासुखं विहरतो रूपाणि सर्वाणि तान्याहुः स्वैरनुरूपरूपविभवैर्गाढोपगाढानि ते ॥ ४ ॥ आकारत्रयसंपन्नामरविन्दविलासिनीम् । अशेषजगदीशित्रीं वन्दे वरदवल्लभाम् ॥ ५ ॥ इति श्रीवरदवल्लभास्तोत्रं संपूर्णम् ॥

## ३०२. लघुस्तवः[1]।

श्रीगणेशाय नमः ॥ ऐन्द्रस्येव शरासनस्य दधती मध्येललाटं प्रभां शौक्लीं कान्तिमनुष्णगोरिव शिरस्यातन्वती सर्वतः। एषाऽसौ त्रिपुरा हृदि द्युतिरिवोष्णांशोः सदाहःस्थिता छिंद्यान्नः सहसा पदैस्त्रिभिरघं ज्योतीर्मयी वाङ्मयी ॥ १ ॥ या मात्रा त्रपुसीलतातनुलसत्तंतुस्थिति-स्पर्धिनी वाग्बीजे प्रथमे स्थिता हृदि सदा तां मन्महे ते वयम्। शक्तिः कुंडलिनीति विश्वजननी व्यापारबद्धोद्यमा ज्ञात्वेत्थं न पुनः स्पृशंति जननीगर्भेऽर्भकत्वं सुराः ॥ २ ॥ दृष्ट्वा संभ्रमकारि वस्तु सहसा ऐ ऐ इति व्याहृतं येनाकूतवशादपीह वरदे बिंदुं विनाप्य-क्षरम्। तस्यापि ध्रुवमेव देवि तरसा कान्ते तवानुग्रहे वाचः सूक्ति-सुधारसद्रवमुचो निर्यांति वक्त्रांबुजात् ॥ ३ ॥ यन्नित्ये तव कामराजम-परं मंत्राक्षरं निष्कलं तत्सारस्वतमित्यवैति विरलः कश्चिद्बुधश्चेद्भुवि। आख्यानं प्रतिपर्व सत्यतपसो यत्कीर्तयंतो द्विजाः प्रारंभे प्रणवास्पद-प्रणयितां नीत्वोच्चरंति स्फुटम् ॥ ४ ॥ यत्सद्यो वचसां प्रवृत्तिकरणे दृष्टप्रभावं बुधैस्तार्तीयं बत हं नमामि मनसा त्वद्बीजमिंदुप्रभम्। अस्त्वौर्वोऽपि सरस्वतीमनुगतो जाड्यांबुविच्छित्तये गोशब्दो गिरि वर्तते स नियतं योगं विना सिद्धिदः ॥ ५ ॥ एकैकं तव देवि बीजमनघं सव्यंजनाव्यंजनं कूटस्थं यदि वा पृथक् क्रमगतं यद्वा स्थितं व्युत्क्रमात्। यं यं काममपेक्ष्य येन विधिना केनापि वा चिंतितं जप्तं वा सफलीकरोति तरसा तं तं समस्तं नृणाम् ॥ ६ ॥ वामे पुस्तक-धारिणीमभयदां साक्षस्रजं दक्षिणे भक्तेभ्यो वरदानपेशलकरां कर्पूरकुंदोज्ज्वलाम्। उज्जृंभांबुजपत्रकांतिनिवहस्निग्धप्रभालोकिनीं ये

---

[1] स्तवोऽयं काव्यमाला-तृतीयगुच्छके प्रकाशितोऽस्ति।

त्वामंब न शीलयंति मनसा तेषां कवित्वं कुतः ॥ ७ ॥ ये त्वां पांडुरपुंडरीकपटलस्पष्टाभिरामप्रभां सिंचंतीममृतद्रवैरिव शिवे ध्यायंति मूर्ध्नि स्थिताम्। अश्रांतं विकटस्फुटाक्षरपदा निर्याति वक्त्रांबुजात्तेषां भारति भारती सुरसरित्कल्लोललोलोर्मिवत् ॥ ८ ॥ ये सिंदूरपरागपुञ्जपिहितां त्वत्तेजसा द्यामिमामुर्वीं चापि विलीनयावकरसप्रस्तारमग्नामिव । ध्यायंति क्षणमप्यनन्यमनसस्तेषामनङ्गज्वरक्लांतास्त्रस्तकुरंगशावकदृशो वश्या भवंति स्फुटम् ॥ ९ ॥ चंचत्कांचनकुंडलांगदधरामाबद्धकांचीस्रजं ये त्वां चेतसि तद्गते क्षणमपि ध्यायंति कृत्वा स्थिराम् । तेषां वेश्मसु विभ्रमादहरहः स्फारीभवंत्यश्चिरं माद्यत्कुंजरकर्णतालतरलाः स्थैर्यं भवंति श्रियः ॥ १० ॥ आर्भट्या शशिखण्डमण्डितजटाजूटां नृमुण्डस्रजं बंधूकप्रसवारुणांबरधरां प्रेतासनाध्यासिनीम् । त्वां ध्यायंति चतुर्भुजां त्रिनयनामापीनतुङ्गस्तनीं मध्ये निम्नवलित्रयांकिततनुं तद्रूपसंवित्तये ॥ ११ ॥ जातोऽप्यल्पपरिच्छदे क्षितिभुजां सामान्यमात्रे कुले निःशेषावनिचक्रवर्तिपदवीं लब्ध्वा प्रतापोन्नतः । यद्विद्याधरवृंदवंदितपदः श्रीवत्सराजोऽभवद्देवि त्वच्चरणांबुजप्रणतिजः सोऽयं प्रसादोदयः ॥ १२ ॥ चंडि त्वच्चरणांबुजार्चनविधौ बिल्वीदलोल्लुण्ठनत्रुट्यत्कंटककोटिभिः परिचयं येषां न जग्मुः कराः । ते दंडांकुशचक्रचापकुलिशश्रीवत्समत्स्यांकितैर्जायंते पृथिवीभुजः कथमिवाम्भोजप्रभैः पाणिभिः ॥ १३ ॥ विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवैस्त्वां देवि त्रिपुरे परापरमयीं संतर्प्य पूजाविधौ । यां यां प्रार्थयते मनः स्थिरतया तेषां त एते ध्रुवं तां तां सिद्धिमवाप्नुवंति तरसा विघ्नैरविघ्नीकृताः ॥ १४ ॥ शब्दानां जननि त्वमत्र भुवने वाग्वादिनीत्युच्यसे त्वत्तः केशववासवप्रभृतयोऽप्याविर्भवंति

ध्रुवम् । लीयंते खलु यत्र कल्पविरमे ब्रह्मादयस्तेऽप्यमी सा त्वं काचिदचिंत्यरूपगरिमा शक्तिः परा गीयसे ॥ १५ ॥ देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वरास्त्रैलोक्यं त्रिपदी त्रिपुष्करमथ त्रिब्रह्म वर्णास्त्रयः । यत्किंचिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गात्मकं तत्सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः ॥ १६ ॥ लक्ष्मीं राजकुले जयां रणमुखे क्षेमंकरीमध्वनि क्रव्याद्द्विपसर्पभाजि शबरीं कांतारदुर्गे गिरौ । भूतप्रेतपिशाचजम्बुकभये स्मृत्वा महाभैरवीं व्यामोहे त्रिपुरां तरंति विपदस्तारां च तोयप्लवे ॥ १७ ॥ माया कुंडलिनी क्रिया मधुमती काली कलामालिनी मातंगी विजया जया भगवती गौरी शिवा शांभवी । शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी ह्रींकारी त्रिपुरे परापरमयी माता कुमारीत्यसि ॥ १८ ॥ आईपल्लवितैः परस्परयुतैर्द्वित्रिक्रमाद्यक्षरैः काद्यैः क्षांतगतैः स्वरादिभिरथ क्षांतैश्च तैः सस्वरैः । नामानि त्रिपुरे भवंति खलु यान्यत्यंतगुह्यानि ते तेभ्यो भैरवपत्नि विंशतिसहस्रेभ्यः परेभ्यो नमः ॥ १९ ॥ बोद्धव्या निपुणं पदैः स्तुतिरियं कृत्वा मनस्तद्गतं भारत्यास्त्रिपुरेत्यनन्यमनसा यत्राद्यवृत्ते स्फुटम् । एकद्वित्रिपदक्रमेण कथितस्त्वत्पादसंख्याक्षरैर्मंत्रोद्धारनिधिर्विशेषसहितः सत्संप्रदायान्वितः ॥ २० ॥ सावद्यं निरवद्यमस्तु यदि वा किं वाऽनया चिंतया नूनं स्तोत्रमिदं पठिष्यति जनो यस्यास्ति भक्तिस्त्वयि । संचिंत्यापि लघुत्वमात्मनि दृढं संजायमानं हठात्त्वद्भक्त्या मुखरीकृतेन सुचिरं यस्मान्मयापि ध्रुवम् ॥ २१ ॥

इति लघुस्तवः संपूर्णः ॥

## ३०३. ताराष्टकम् ।

श्रीगणेशाय नमः ॥ मातर्नीलसरस्वति प्रणमतां सौभाग्यसंपत्प्रदे प्रत्यालीढपदस्थिते शिवहृदि स्मेराननांभोरुहे । फुल्लेंदीवरलोचनत्रय-युते कर्त्री कपालोत्पले खङ्गं चादधती त्वमेव शरणं त्वामीश्वरी-माश्रये ॥ १ ॥ वाचामीश्वरि भक्तकल्पलतिके सर्वार्थसिद्धिप्रदे गद्यप्राकृतपद्यजातरचना सर्वत्र सिद्धिप्रदे । नीलेंदीवरलोचनत्रययुते कारुण्यवारांनिधे सौभाग्यामृतवर्षणेन कृपया सिंच त्वमस्मादृशम् ॥ २ ॥ शर्वे गर्वसमूहपूरिततनो सर्पादिवेषोज्वले व्याघ्रत्वक्परि-वीतसुंदरकटिव्याधूतघंटांकिते । सद्यःकृत्तगलद्रजःपरिमिलन्मुंडद्वयी-मूर्धजग्रंथिश्रेणिनृमुंडदामललिते भीमे भयं नाशय ॥ ३ ॥ मायानंगविकाररूपललनाबिंद्वर्धचंद्रात्मिके हुंफट्कारमयि त्वमेव शरणं मंत्रात्मिके मादृशः । मूर्तिस्ते जननि त्रिधामघटिता स्थूलाऽति-सूक्ष्मा परा वेदानां नहि गोचरा कथमपि प्राप्तां नुतामाश्रये ॥ ४ ॥ त्वत्पादांबुजसेवया सुकृतिनो गच्छंति सायुज्यतां तस्य श्री परमेश्वरी त्रिनयनब्रह्मादिसाम्यात्मनः । संसारांबुधिमज्जने पटुतनून् देवेंद्रमुख्यान्सुरान् मातस्त्वत्पदसेवने हि विमुखो यो मंदधीः सेवते ॥ ५ ॥ मातस्त्वत्पदपंकजद्वयरजोमुद्रांककोटीरिणस्ते देवा जयसंगरे विजयिनो निःशंकमंके गताः । देवोऽहं भुवने न मे सम इति स्पर्धां वहंतः परे तत्तुल्यं नियतं यथाऽसुभिरमी नाशं व्रजंति स्वयम् ॥ ६ ॥ त्वन्नामस्मरणात्पलायनपरा द्रष्टुं च शक्ता न ते भूतप्रेतपिशाचराक्षसगणा यक्षाश्च नागाधिपाः । दैत्या दानव-पुंगवाश्च खचरा व्याघ्रादिका जंतवो डाकिन्यः कुपितांतकाश्च मनुजं मातः क्षणं भूतले ॥ ७ ॥ लक्ष्मीः सिद्धगणाश्च पादुकमुखाः

सिद्धास्तथा चारणाः स्तंभश्चापि रणांगणे गजघटास्तंभस्तथा मोहनम् । मातस्त्वत्पदसेवया खलु नृणां सिध्यंति ते ते गुणाः कांतिः कांत-मनोभवस्य भवति क्षुद्रोऽपि वाचस्पतिः ॥ ८ ॥ ताराष्टकमिदं रम्यं भक्तिमान्यः पठेन्नरः । प्रातर्मध्याह्नकाले च सायाह्ने नियतः शुचिः ॥ ९ ॥ लभते कवितां दिव्यां सर्वशास्त्रार्थविद्भवेत् । लक्ष्मीमनश्वरां प्राप्य भुक्त्वा भोगान्यथेप्सितान् ॥ १० ॥ कीर्तिं कांतिं च नैरुज्यं सर्वेषां प्रियतां व्रजेत् । विख्यातिं चापि लोकेषु प्राप्यांते मोक्ष-माप्नुयात् ॥ ११ ॥ इति नीलतंत्रे ताराष्टकं संपूर्णम् ॥

## ३०४. अंबास्तवः ।

श्रीगणेशाय नमः ॥ यामामनंति मुनयः प्रकृतिं पुराणीं विद्येति यां श्रुतिरहस्यविदो वदंति । तामर्धपल्लवितशंकररूपमुद्रां देवीमनन्यशरणः शरणं प्रपद्ये ॥ १ ॥ अंब स्तवेषु तव तावदकर्तृकानि कुंठीभवंति वचसामपि गुंफनानि । डिंभस्य मे स्तुतिरसावसमंजसापि वात्सल्यनिघ्नहृदयां भवतीं धिनोतु ॥ २ ॥ व्योमेति बिंदुरिति नाद इतींदुलेखारूपेति वाग्भवतनूरिति मातृकेति । निःस्यंदमानसुखबोधसुधास्वरूपा विद्योतसे मनसि भाग्यवतां जनानाम् ॥ ३ ॥ आविर्भवत्पुलकसंततिभिः शरीरैर्निःस्यंदमानसलिलैर्नयनैश्च नित्यम् । वाग्भिश्च गद्गदपदाभिरुपासते ये पादौ तवांब भुवनेषु त एव धन्याः ॥ ४ ॥ वक्रं यदुद्यतमभिष्टुतये भवत्यास्तुभ्यं नमो यदपि देवि शिरः करोति । चेतश्च यत्त्वयि परायणमंब तानि कस्यापि कैरपि भवंति तपोविशेषैः ॥ ५ ॥ मूलालवालकुहरादुदिता भवानि निर्भिद्य षट्सरसिजानि तडिल्लतेव । भूयोऽपि तत्र विशसि ध्रुवमंडलेंदुनिःस्यंदमानपरमामृततोयरूपा ॥ ६ ॥ दग्धं यदा

मदनमेकमनेकधा ते मुग्धः कटाक्षविधिरंकुरयांचकार । धत्ते तदा प्रभृति देवि ललाटनेत्रं सत्यं ह्रियैव मुकुलीकृतमिंदुमौलिः ॥ ७ ॥ अज्ञातसंभवमनाकलितान्ववायं भिक्षुं कपालिनमवाससमद्वितीयम् । पूर्वं करग्रहणमंगलतो भवत्याः शंभुं क एव बुबुधे गिरिराजकन्ये ॥ ८ ॥ चर्मांबरं च शवभस्मविलेपनं च भिक्षाटनं च नटनं च परेतभूमौ । वेतालसंहतिपरिग्रहिता च शंभोः शोभां बिभर्ति गिरिजे तव साहचर्यात् ॥ ९ ॥ कल्पोपसंहरणकेलिषु पंडितानि चंडानि खंडपरशोरपि तांडवानि । आलोकनेन तव कोमलितानि मातर्लास्यात्मना परिणमंति जगद्विभूत्यै ॥ १० ॥ जंतोरपश्चिमतनोः सति कर्मसाम्ये निःशेषपाशपटलच्छिदुरा निमेषात् । कल्याणि देशिककटाक्षसमाश्रयेण कारुण्यतो भवति शांभववेधदीक्षा ॥ ११ ॥ मुक्ताविभूषणवती नवविद्रुमाभा यच्चेतसि स्फुरसि तारकितेव संध्या । एकः स एव भुवनत्रयसुंदरीणां कंदर्पतां व्रजति पंचशरीं विनापि ॥ १२ ॥ ये भावयंत्यमृतवाहिभिरंशुजालैराप्यायमानभुवनाममृतेश्वरीं त्वाम् । ते लंघयंति ननु मातरलंघनीयां ब्रह्मादिभिः सुरवरैरपि कालकक्षाम् ॥ १३ ॥ यः स्फटिकाक्षगुणपुस्तककुंडिकाढ्यां व्याख्यासमुद्यतकरां शरदिंदुशुभ्राम् । पद्मासनां च हृदये भवतीमुपास्ते मातः स विश्वकवितार्किकचक्रवर्ती ॥ १४ ॥ बर्हावतंसयुतबर्बरकेशपाशां गुंजावलीकृतघनस्तनहारशोभाम् । श्यामां प्रवालवदनां शरचापहस्तां त्वामेव नौमि शबरीं शबरस्य जायाम् ॥ १५ ॥ अर्धेन किं नवलता ललितेन मुग्धे क्रीतं विभोः परुषमर्धमिदं त्वयेति । आलीजनस्य परिहासवचांसि मन्ये मंदस्मितेन तव देवि जडीभवंति ॥ १६ ॥ ब्रह्मांडबुद्बुदकदंबकसंकुलोऽयं मायोदधिर्विविधदुःखतरंगमालः । आश्चर्यमंब झटिति

प्रलयं प्रयाति त्वद्ध्यानसंततिमहावडवामुखाग्नौ ॥ १७ ॥ दाक्षायणीति कुटिलेति गुहारणीति कात्यायनीति कमलेति कलावतीति। एका सती भगवती परमार्थतोऽपि संदृश्यसे बहुविधा ननु नर्तकीव ॥ १८ ॥ आनंदलक्षणमनाहतनाम्नि देशे नादात्मना परिणतं तव रूपमीशे । प्रत्यङ्मुखेन मनसा परिचीयमानं शंसंति नेत्रसलिलैः पुलकैश्च धन्याः ॥ १९ ॥ त्वं चंद्रिका शशिनि तिग्मरुचौ रुचिस्त्वं त्वं चेतनाऽसि पुरुषे पवने बलं त्वम् । त्वं स्वादुताऽसि सलिले शिखिनि त्वमूष्मा निःसारमेव निखिलं त्वदृते यदि स्यात् ॥ २० ॥ ज्योतींषि यद्दिवि चरंति यदंतरिक्षं सूते पयांसि यदहिर्धरणिं च धत्ते । यद्वाति वायुरनलो यदुदर्चिरास्ते तत्सर्वमंब तव केवलमाज्ञयैव ॥ २१ ॥ संकोचमिच्छसि यदा गिरिजे तदानीं वाक्तर्कयोस्त्वमसि भूमिरनामरूपा । यद्वा विकासमुपयासि यदा तदानीं त्वन्नामरूपगणनाः सुकरा भवंति ॥ २२ ॥ भोगाय देवि भवतीं कृतिनः प्रणम्य भ्रूकिंकरीकृतसरोजगृहाः सहस्राः । चिंतामणिप्रचयकल्पितकेलिशैले कल्पद्रुमोपवन एव चिरं रमंति ॥ २३ ॥ हर्तुं त्वमेव भवसि त्वदधीनमीशे संसारतापमखिलं दयया पशूनाम् । वैकर्तनी किरणसंहतिरेव नूनं घर्मं निजं शमयितुं निजयैव दृष्ट्या ॥ २४ ॥ शक्तिः शरीरमधिदैवतमंतरात्मा ज्ञानं क्रियाकरणमानसजालमिच्छा । ऐश्वर्यमायतनमावरणानि च त्वं किं तन्न यद्भवसि देवि शशांकमौलेः ॥ २५ ॥ भूमौ निवृत्तिरुदिता पयसि प्रतिष्ठा विद्यानले मरुति शांतिरतीतशांतिः । व्योम्नीति याः किल कलाः कलयंति विश्वं तासां हि दूरतरमंब पदं त्वदीयम् ॥ २६ ॥ यावत्पदं पदसरोजयुगं त्वदीयं नांगीकरोति हृदयेषु जगच्छरण्ये । तावद्विकल्पजटिलाः कुटिलप्रकारास्तर्कग्रहाः समयिनां प्रलयं न

यांति ॥ २७ ॥ यद्देवयानपितृयानविहारमेके कृत्वा मनः करणमंडलसार्वभौमम् । याने निवेश्य तव कारणपंचकस्य पर्वाणि पार्वति नयन्ति निजासनत्वम् ॥ २८ ॥ स्थूलासु मूर्तिषु महीप्रमुखासु शंभोः कस्याश्चनापि तव वैभवमंब यस्याः । पत्या गिरामपि न शक्यत एव वक्तुं साऽसि स्तुता किल मयेति तितिक्षितव्यम् ॥ २९ ॥ कालाग्निकोटिरुचिमंब षडध्वशुद्धावाप्लावनेषु भवतीममृतौघवृष्टिम् । श्यामां घनस्तनतटां सकलीकृतौ च ध्यायंति एव जगतां गुरवो भवंति ॥ ३० ॥ विद्यां परां कतिचिदंबरमंब केचिदानंदमेव कतिचित्कतिचिच्च मायाम् । त्वां विश्वमाहुरपरे वयमानमामः साक्षादपारकरुणां गुरुमूर्तिमेव ॥ ३१ ॥ कुवलयदलनीलं बर्बरस्निग्धकेशं पृथुतरकुचभारक्रांतकांतावलग्नम् । किमिह बहुभिरुक्तैस्त्वत्स्वरूपं परं नः सकलजननिमातः संततं सन्निधत्ताम् ॥ ३२ ॥ इत्यंबास्तवः संपूर्णः ॥

## ३०५. चर्चास्तवः ।

श्रीगणेशाय नमः ॥ सौन्दर्यविभ्रमभुवो भुवनाधिपत्यसंकल्पकल्पतरवस्त्रिपुरे जयंति । एते कवित्वकुमुदप्रकरावबोधपूर्णेंदवस्त्वयि जगज्जननि प्रणामाः ॥ १ ॥ देवि स्तुतिव्यतिकरे कृतबुद्धयस्ते वाचस्पतिप्रभृतयोऽपि जडीभवंति । तस्मान्निसर्गजडिमा कतमोऽहमत्र स्तोत्रं तव त्रिपुरतापनपत्नि कर्तुम् ॥ २ ॥ मातस्तथापि भवतीं भवतीव्रतापविच्छित्तये स्तवमहार्णवकर्णधारः । स्तोतुं भवानि स

१ स्तवोऽयमस्मत्काव्यमाला-तृतीयगुच्छके **पञ्चस्तवी**नाम्ना प्रकाशितोऽस्ति ।

भवच्चरणारविंदभक्तिग्रहः किमपि मां मुखरीकरोति ॥ ३ ॥ सूते जगंति भवती भवती बिभर्ति जागर्ति तत्क्षयकृते भवती भवानि। मोहं भिनत्ति भवती भवती रुणद्धि लीलायितं जगति चक्रमिदं भवत्याः ॥ ४ ॥ यस्मिन्मनागपि नवांबुजपत्रगौरि गौरि प्रसादमधुरां दृशमादधासि। तस्मिन्निरंतरमनंगशरावकीर्णसीमंतिनीनयनसन्ततयः पतंति ॥ ५ ॥ पृथ्वीभुजोऽप्युदयनप्रवरस्य तस्य विद्याधर-प्रणतिचुंबितपादपीठः। यच्चक्रवर्तिपदवीप्रणयः स एष त्वत्पाद-पंकजरजःकणजः प्रसादः ॥ ६ ॥ त्वत्पादपंकजरजःप्रणिपातपूर्वैः पुण्यैरनल्पमतिभिः कृतिभिः कवीन्द्रैः। क्षीरक्षपाकरदुकूलहिमाव-दाता कैरप्यवापि भुवनत्रितयेऽपि कीर्तिः ॥ ७ ॥ कल्पद्रुमप्रसव-कल्पितचित्रपूजामुद्दीपितप्रियतमामदरक्तगीतम्। नित्यं भवानि भवतीमुपवीणयंति विद्याधराः कनकशैलगृहागृहेषु ॥ ८ ॥ लक्ष्मी-वशीकरणकर्मणि कामिनीनामाकर्षणव्यतिकरेषु च सिद्धमंत्रः। नीरंध्रमोहतिमिरच्छिदुरप्रदीपो देवि त्वदंघ्रिजनितो जयति प्रसादः ॥ ९ ॥ देवि त्वदंघ्रिनखरत्नभुवो मयूखाः प्रत्युप्तमौक्तिकरुचो मुदमुद्वहंति। सेवानतिव्यतिकरे सुरसुंदरीणां सीमंतसीम्नि कुसुम-स्तबकायितं यैः ॥ १० ॥ मूर्ध्नि स्फुरत्तुहिनदीधितिदीप्तिदीप्तं मध्येललाटममरायुधरश्मिचित्रम्। हृच्चक्रचुंबि हुतभुक्कणिकानुकारि ज्योतिर्यदेतदिदमंब तव स्वरूपम् ॥ ११ ॥ रूपं तव स्फुरितचंद्र-मरीचिगौरमालोकते शिरसि वागधिदैवतं यः। निःसीमसूक्तिरचना-मृतनिर्झरस्य तस्य प्रकाममधुराः प्रसरंति वाचः ॥ १२ ॥ सिंदूर-पांसुपटलच्छुरितामिव द्यां त्वत्तेजसा जतुरसस्नपितामिवोर्वीम्। यः पश्यति क्षणमपि त्रिपुरे विहाय व्रीडां मृडानि सुदृशस्तमनुद्रवंति ॥ १३ ॥ मातर्मुहूर्तमपि यः स्मरति स्वरूपं लाक्षारसप्रसरतंतुनिभं

भवत्याः । ध्यायंत्यनन्यमनसस्तमनंगतप्ताः प्रद्युम्नसीम्नि सुभगत्वगुणं तरुण्यः ॥ १४ ॥ योऽयं चकास्ति गगनार्णवरत्नमिंदुर्योऽयं सुरासुरगुरुः पुरुषः पुराणः । यद्वामसमर्धमिदमंधकसूदनस्य देवि त्वमेव तदिति प्रतिपादयंति ॥ १५ ॥ इच्छानुरूपमनुरूपगुणप्रकर्षं संकर्षिणि त्वमभिसृत्य यदा बिभर्षि । जायेत स त्रिभुवनैकगुरुस्तदानीं देवः शिवोऽपि भुवनत्रयसूत्रधारः ॥ १६ ॥ ध्यातासि हैमवति येन हिमांशुरश्मिमालामलद्युतिरकल्मषमानसेन । तस्याविलम्बमनवद्यमनन्तकल्पमल्पैर्दिनैः सृजसि सुन्दरि वाग्विलासम् ॥ १७ ॥ आधारमारुतनिरोधवशेन एषां सिंदूररंजितसरोजगुणानुकारि । तीव्रं हृदि स्फुरति देवि वपुस्त्वदीयं ध्यायंति तानिह समीहितसिद्धसाध्याः ॥ १८ ॥ ये चिंतयंत्यरुणमंडलमध्यवर्ति रूपं तवांब नवयावकपंकपिंगम् । तेषां सदैव कुसुमायुधबाणभिन्नवक्षःस्थला मृगदृशो वशगा भवंति ॥ १९ ॥ त्वामैंदवीमिव कलामनुभालदेशमुद्भासितांबरतलामवलोकयंतः । सद्यो भवानि सुधियः कवयो भवंति त्वं भावनाहितधियां कुलकामधेनुः ॥ २० ॥ शर्वाणि सर्वजनवंदितपादपद्मे पद्मच्छदद्युतिविडंबितनेत्रलक्ष्मि । निष्पापमूर्तिजनमानसराजहंसि हंसि त्वमापदमनेकविधां जनस्य ॥ २१ ॥ उत्तप्तहेमरुचिरे त्रिपुरे पुनीहि चेतश्चिरंतनमघौघवनं पुनीहि । कारागृहे निगडबंधनयंत्रितस्य त्वत्संस्मृतौ झटिति मे निगडा गलंति ॥ २२ ॥ त्वां व्यापिनीति सुमना इति कुंडलीति त्वां कामिनीति कमलेति कलावतीति । त्वां मालिनीति ललितेत्यपराजितेति देवि स्तुवंति विजयेति जयेत्युमेति ॥ २३ ॥ उद्दामकामपरमार्थसरोजखण्डचण्डद्युतिद्युतिमपासितषड्विकाराम् । मोहद्विपेन्द्रकदनोद्यतबोधसिंहलीलागुहां भगवतीं त्रिपुरां नमामि ॥ २४ ॥ गणेशवटुकस्तुता

रतिसहायकामान्विता स्मरारिवरविष्टरा कुसुमबाणबाणैर्युता । अनङ्ग-कुसुमादिभिः परिवृता च सिद्धैस्त्रिभिः कदम्बवनमध्यगा त्रिपुरसुन्दरी पातु नः ॥ २५ ॥ रुद्राणि विद्रुममयीं प्रतिमामिव त्वां ये चिन्तयन्त्यरुणकान्तिमनन्यरूपाम् । तानेत्य पक्ष्मलदृशः प्रसभं भजन्ते कण्ठावसक्तमृदुबाहुलतास्तरुण्यः ॥ २६ ॥ त्वद्रूपैकनिरूपणप्रणयिताबन्धो दृशोस्त्वद्गुणग्रामाकर्णनरागिता श्रवणयोस्त्वत्संस्मृतिश्चेतसि । त्वत्पादार्चनचातुरी करयुगे त्वत्कीर्तनं वाचि मे कुत्रापि त्वदुपासनव्यसनिता मे देवि मा शाम्यतु ॥ २७ ॥ त्वद्रूपमुल्लसितदाडिमपुष्परक्तमुद्भावयेन्मदनदैवतमक्षरं यः । तं रूपहीनमपि मन्मथनिर्विशेषमालोकयन्त्युरुनितम्बतटास्तरुण्यः ॥ २८ ॥ ब्रह्मेन्द्ररुद्रहरिचन्द्रसहस्ररश्मिस्कन्दद्विपाननहुताशनवन्दितायै । वागीश्वरि त्रिभुवनेश्वरि विश्वमातरन्तर्बहिश्च कृतसंस्थितये नमस्ते ॥ २९ ॥ यः स्तोत्रमेतदनुवासरमीश्वरायाः श्रेयस्करं पठति वा यदि वा शृणोति । तस्येप्सितं फलति राजभिरीड्यतेऽसौ जायेत स प्रियतमो मदिरेक्षणानाम् ॥ ३० ॥

इति चर्चास्तवः संपूर्णः ॥

## ३०६. श्यामलादण्डकम् ।

श्रीगणेशाय नमः ॥ माणिक्यवीणामुपलालयन्तीं मदालसां मंजुलवाग्विलासाम् । माहेन्द्रनीलद्युतिकोमलाङ्गीं मातङ्गकन्यां सततं स्मरामि ॥ १ ॥ चतुर्भुजे चन्द्रकलावतंसे कुचोन्नते कुङ्कुमरागशोणे । पुण्ड्रेक्षुपाशाङ्कुशपुष्पबाणहस्ते नमस्ते जगदेकमातः ॥ २ ॥ माता मरकतश्यामा मातङ्गी मदशालिनी । कटाक्षयतु कल्याणी कदम्बवनवासिनी ॥ ३ ॥ जय मातङ्गतनये जय नीलोत्पलद्युते । जय संगीतरसिके जय लीलाशुकप्रिये ॥ ४ ॥ जय जननि सुधासमुद्रांतहृद्य-

न्मणिद्वीपसंरूढबिल्वाटवीमध्यकल्पद्रुमाकल्पकादम्बकांतारवासप्रिये कृत्तिवासप्रिये सर्वलोकप्रिये । सादरारब्धसंगीतसंभावनासंभ्रमालोलनीपस्रगाबद्धचूलीसनाथत्रिके सानुमत्पुत्रिके । शेखरीभूतशीतांशुरेखामयूखावलीबद्धसुस्निग्धनीलालकश्रेणिशृङ्गारिते लोकसंभाविते । कामलीलाधनुःसंनिभभ्रूलतापुष्पसंदोहसंदेहकृल्लोचने वाक्सुधासेचने । चारुगोरोचनापङ्ककेलीललामाभिरामे सुरामे रमे । प्रोल्लसद्वालिकामौक्तिकश्रेणिकाचन्द्रिकामण्डलोद्भासिलावण्यगण्डस्थलन्यस्तकस्तूरिकापत्ररेखासमुद्भूतसौरभ्यसंभ्रांतभृङ्गाङ्गनागीतसांद्रीभवन्मंदतन्त्रीस्वरे सुस्वरे भास्वरे । वल्लकीवादनप्रक्रियालोलतालीदलाबद्धताटङ्कभूषाविशेषान्विते सिद्धसंमानिते । दिव्यहालामदोद्वेलहेलालसच्चक्षुरांदोलनश्रीसमाक्षिप्तकर्णैकनीलोत्पले पूरिताशेषलोकाभिवाञ्छाफले श्रीफले । स्वेदबिंदूल्लसत्फाललावण्यनिःष्यंदसंदोहसंदेहकृन्नासिकामौक्तिके सर्वविश्वात्मिके कालिके । मुग्धमंदस्मितोदारवक्त्रस्फुरत्पूगताम्बूलकर्पूरखण्डोत्करे ज्ञानमुद्राकरे सर्वसंपत्करे पद्मभास्वत्करे । कुंदपुष्पद्युतिस्निग्धदंतावलीनिर्मलालोलकल्लोलसंमेलनस्मेरशोणाधरे चारुवीणाधरे पक्वबिम्बाधरे ॥ १ ॥ सुललितनवयौवनारम्भचंद्रोदयोद्वेललावण्यदुग्धार्णवाविर्भवत्कम्बुबिब्बोकभृत्कंधरे सत्कलामन्दिरे मंथरे । दिव्यरत्नप्रभाबंधुरच्छन्नहारादिभूषासमुद्योतमानानवद्यांशुशोभे शुभे । रत्नकेयूररश्मिच्छटापल्लवप्रोल्लसद्दोर्लताराजिते योगिभिः पूजिते । विश्वदिङ्मण्डलव्यापिमाणिक्यतेजःस्फुरत्कङ्कणालंकृते विभ्रमालंकृते साधकैः सत्कृते । वासरारम्भवेलासमुज्जृम्भमाणारविंदप्रतिद्वन्द्विपाणिद्वये संततोद्यद्दये अद्वये । दिव्यरत्नोर्मिकादीधितिस्तोमसंध्यायमानाङ्गुलीपल्लवोद्यन्नखेन्दुप्रभामण्डले संनताखण्डले चित्प्रभामण्डले प्रोल्लसत्कुण्डले । तारकाराजिनीकाशहारावलि-

स्मेरचारुस्तनाभोगभारानमन्मध्यवल्लीवलिच्छेदवीचीसमुल्लाससंदर्शिताकारसौन्दर्यरत्नाकरे वल्लकीभृत्करे किंकरश्रीकरे । हेमकुम्भोपमोत्तुङ्गवक्षोजभारावनम्रे त्रिलोकावनम्रे । लसद्वृत्तगम्भीरनाभीसरस्तीरशैवालशङ्काकरश्यामरोमावलीभूषणे मञ्जुसंभाषणे । चारुशिञ्जत्कटीसूत्रनिर्भर्त्सितानङ्गलीलाधनुःशिञ्जिनीडम्बरे दिव्यरत्नाम्बरे । पद्मरागोल्लसन्मेखलाभास्वरश्रोणिशोभाजितस्वर्णभूभृत्तले चन्द्रिकाशीतले ॥ २ ॥ विकासितनवकिंशुकाताम्रदिव्यांशुकच्छन्नचारुशोभापराभूतसिंदूरशोणायमानेन्द्रमातङ्गहस्तार्गले वैभवानर्गले श्यामले । कोमलस्निग्धनीलोत्पलोत्पादितानङ्गतूणीरशङ्काकरोदारजङ्घालते चारुलीलागते । नम्रदिक्पालसीमन्तिनीकुंतलस्निग्धनीलप्रभापुञ्जसञ्जातदूर्वाङ्कुराशङ्कसारङ्गसंयोगरिङ्खन्नखेन्दूज्ज्वले प्रोज्ज्वले निर्मले । प्रह्वदेवेशलक्ष्मीशभूतेशतोयेशवाणीशकीनाशदैत्येशयक्षेशवाय्वग्निकोटीरमाणिक्यसंघृष्टबालातपोद्दामलाक्षारसारुण्यतारुण्यलक्ष्मीगृहीताङ्घ्रिपद्मे सुपद्मे उमे ॥ ३ ॥ सुरुचिरनवरत्नपीठस्थिते सुस्थिते । रत्नपद्मासने रत्नसिंहासने शङ्खपद्मद्वयोपाश्रिते । तत्र विघ्नेशदूर्वाबटुक्षेत्रपालैर्युते मत्तमातङ्गकन्यासमूहान्विते मञ्जुलामेनकाद्यङ्गनामानिते भैरवैरष्टभिर्वेष्टिते । देवि वामादिभिः शक्तिभिः सेविते धात्रिलक्ष्म्यादिशक्त्यष्टकैः संयुते । मातृकामण्डलैर्मण्डिते यक्षगंधर्वसिद्धाङ्गनामण्डलैरर्चिते । पञ्चबाणात्मिके पञ्चबाणेन रत्या च संभाविते । प्रीतिभाजा वसंतेन चानन्दिते भक्तिभाजां परं श्रेयसे कल्पसे । योगिनां मानसे द्योतसे छंदसामोजसा भ्राजसे । गीतविद्याविनोदातितृष्णेन कृष्णेन संपूज्यसे । भक्तिमच्चेतसा वेधसा स्तूयसे । विश्वहृद्येन वाद्येन विद्याधरैर्गीयसे ॥ ४ ॥ श्रवणहरणदक्षिणक्वाणया वीणया किन्नरैर्गीयसे । यक्षगंधर्वसिद्धाङ्गनामण्डलैरर्च्यसे । सर्वसौभाग्यवाञ्छावतीभि-

वधूभिः सुराणां समाराध्यसे । सर्वविद्याविशेषात्मकं चाटुगाथासमुच्चाटनं कण्ठमूलोल्लसद्वर्णराजित्रयं कोमलश्यामलोदारपक्षद्वयं तुण्डशोभातिदूरीभवत्किंशुकं तं शुकं लालयंती परिक्रीडसे । पाणिपद्मद्वयेनाक्षमालामपि स्फाटिकीं ज्ञानसारात्मकं पुस्तकं चाङ्कुशं पाशमाबिभ्रती येन संचिंत्यसे तस्य वक्त्रांतराद्गद्यपद्यात्मिका भारती निःसरेत् । येन वा यावकाभाकृतिर्भाव्यसे तस्य वश्या भवन्ति स्त्रियः पूरुषाः । येन वा शातकुम्भद्युतिर्भाव्यसे सोऽपि लक्ष्मीसहस्रैः परिक्रीडते । किं न सिध्येद्वपुः श्यामलं कोमलं चंद्रचूडान्वितं तावकं ध्यायतः । तस्य लीलासरोवारिधिस्तस्य केलीवनं नंदनं तस्य भद्रासनं भूतलं तस्य गीर्देवता किंकरी तस्य चाज्ञाकरी श्रीः स्वयम् । सर्वतीर्थात्मिके सर्वमंत्रात्मिके सर्वतंत्रात्मिके सर्वयंत्रात्मिके सर्वपीठात्मिके सर्वतत्त्वात्मिके सर्वशक्त्यात्मिके सर्वविद्यात्मिके सर्वयोगात्मिके सर्वनादात्मिके सर्वशब्दात्मिके सर्वविश्वात्मिके सर्वदीक्षात्मिके सर्वसर्वात्मिके सर्वगे पाहि मां पाहि मां पाहि मां देवि तुभ्यं नमो देवि तुभ्यं नमः ॥ ५ ॥ इति श्यामलादण्डकस्तोत्रं संपूर्णम् ॥

## ३०७. मोहिनीकवचम् ।

श्रीगणेशाय नमः ॥ भगवन् सर्वधर्मज्ञ सर्वागमविशारद । कवचं देवतायास्तु कृपया कथय प्रभो ॥ १ ॥ ब्रह्मोवाच ॥ शृणु देव महाप्राज्ञ सर्वशास्त्रविशारद । कवचं मोहिनीदेव्या महासिद्धिकरं परम् ॥ २ ॥ मोहिनी मे शिरः पातु भालं नेत्रयुगं तथा । भ्रुवौ च कामिनी रक्षेन्मुखं वागीश्वरी तथा ॥ ३ ॥ श्रोत्रे मंगलरूपा च कंठं महिषमर्दिनी । भुजौ सौंदर्यनिलया हस्तौ रक्षेद्यशस्विनी ॥ ४ ॥ सर्वदा नाभिदेशे तु कमला पातु चोदरम् । विजया हृदयं पातु कटिं सुरवरार्चिता ॥ ५ ॥ कर्णौ महालया रक्षेदंगुलीर्भक्तवत्सला । वैष्णवी

पातु जंघे च माया मेढ्रं गुदं तथा ॥ ६ ॥ पादौ च देवजननी तलं पातालवासिनी । पूर्वे तु मोहिनी रक्षेद्दक्षिणे सुखदायिनी ॥ ७ ॥ पश्चिमे वारुणी रक्षेदुत्तरेऽमृतवासिनी । ईशान्यां पातु चेशानी आग्नेय्यामग्निदेवता ॥ ८ ॥ नैर्ऋत्यां खड्गधृग्देवी वायव्यां मृगवाहिनी । ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद्वैष्णवी तथा ॥ ९ ॥ अग्रतः पातु चेंद्राणी वाराही पृष्ठतस्तथा । कौबेरी चोत्तरे पातु दक्षिणे विष्णुवल्लभा ॥ १० ॥ इदं कवचमज्ञात्वा यो भजेन्मोहिनीं नरः । वृथा श्रमो भवेत्तस्य न मंत्रः सिद्धिदायकः ॥ ११ ॥ भूर्जपत्रे समालिख्य कुंकुमादिकचंदनैः । शतमष्टोत्तरं जाप्यं स्वर्गेर्थं धार्यते यदि ॥ १२ ॥ कंठे वा दक्षिणे बाहावष्टसिद्धिर्भवेद्ध्रुवम् । सर्वथा सर्वदा नित्यं मोहिनीकवचं जपेत् ॥ १३ ॥ राजद्वारे सभास्थाने कारागृहनिबंधने । जलमध्ये चाग्निमध्ये तथा निर्जनके वने ॥ १४ ॥ अरण्ये प्रांतरे घोरे शत्रुसंघे महाहवे । शस्त्रघाते विषे पीते जपन् सिद्धिमवाप्नुयात् ॥ १५ ॥ ब्रह्मराक्षसवेतालाः कूष्मांडा भैरवादयः । नश्यंति दर्शनात्तस्य कवचे हृदि संस्थिते ॥ १६ ॥ मनसा चिंतितं कार्यं सहस्रं जपतस्तथा । पलाशमूले प्रजपेत्सहस्रत्रितयं मुदा ॥ १७ ॥ शत्रुहानिर्ध्रुवं चात्र जायते नात्र संशयः । अर्कमूले जपेन्नित्यं मंत्रराजमिमं शुभम् ॥ १८ ॥ भोजयेद्ब्राह्मणांश्चैव लक्ष्मीर्वसति सर्वदा । यदिदं कवचं नित्यं भक्त्या तत्र मयोदितम् ॥ १९ ॥ यो जपेत्सर्वदा भक्त्या मोहिन्याः कवचं शुभम् । वांछितं फलमाप्नोति नात्र कार्या विचारणा ॥ २० ॥ इति श्रीभविष्योत्तरपुराणे ब्रह्मप्रोक्तं मोहिनीकवचं स्तोत्रं संपूर्णम् ॥

## ३०८. मोहिन्यर्गलास्तोत्रम् ।

श्रीगणेशाय नमः ॥ देवा ऊचुः ॥ जय मंगलरूपे त्वं जय त्वं भक्तवत्सले । जय सौंदर्यनिलये जय कारुण्यवारिधे ॥ १ ॥ महालये

भो करुणाल येमां त्वं त्राहि दीनार्तिहरे प्रपन्नम् । त्वत्पादपद्मावनतोत्तमांगं प्रसीद नित्यं वरदे शरण्ये ॥ २ ॥ त्वं विष्णुरूपिणी देवि त्वं च रुद्रस्वरूपिणी । त्वं ब्राह्मी त्वं च शर्वाणी त्वमिंद्राणीति गीयसे ॥ ३ ॥ त्वं कल्याणी च श्रीर्वाणी सैंहिकेयविदारिणी । त्वमिंद्राणी च सौपर्णी काद्रवेयविदारिणी ॥ ४ ॥ वैकुंठपदनिःश्रेणी निर्जराणां तरंगिणी । गंगाधरस्य रमणी निधिवासप्रवासिनी ॥ ५ ॥ संहारिणी च विपदां संपत्संततिकारिणी । भवपाशमहापाशगेहपाशविदारिणी ॥ ६ ॥ स्कंद उवाच ॥ इति ते त्रिदशाः स्तुत्वा जनार्दनमनन्तरम् । स्त्रीरूपेणातिशोभाढ्यं मोहिनीरूपकं जगुः ॥ ७ ॥ देवा ऊचुः ॥ शृंगारलावण्यसमुद्ररूपिणी स्वरूपशोभारतिकोटिजित्वरा । त्वमेव कामीप्सितदातृदानदा देवी मुदा रक्षतु दैत्यमोहिनी ॥ ८ ॥ प्रतारणाभिन्नतमा सुरारिणां नमः शिरश्छेदनकारिविक्रमा । स्वरूपसंमोहितदानवव्रजा देवी मुदा रक्षतु दैत्यमोहिनी ॥ ९ ॥ ददाति दोर्भ्यामपि या चतुर्भुजा श्रियं हितवैतिविभूषणांकनैः । आपत्तिदारिद्र्यविनाशकारिणी देवी मुदा रक्षतु दैत्यमोहिनी ॥ १० ॥ पीयूषदात्री सुतनुर्दिवौकसां दितेः सुतानां च सुराप्रदात्री । गृहीतमाया मयकामिनीवपुर्देवी मुदा रक्षतु दैत्यमोहिनी ॥ ११ ॥ सुवर्णपंकरुहकेतकीश्रियं शरीरवर्णेन च जित्वरा प्रसूः । स्वकंठधिक्कारितवल्लकीगुणा देवी मुदा रक्षतु दैत्यमोहिनी ॥ १२ ॥ स्वदीप्तकोटींदुकृतप्रभाश्रया प्रभाविनी दैवतकामपूरिणी । अखंडमाखंडलनिर्जरस्तुता देवी मुदा रक्षतु दैत्यमोहिनी ॥ १३ ॥ यस्याः प्रभावं द्विसहस्रजिह्वः सहस्रवक्त्रोऽप्युरगाधिराजः । वक्तुं प्रभुर्न क्व तदेतरे जना देवी मुदा रक्षतु दैत्यमोहिनी ॥ १४ ॥ स्कंद उवाच ॥ इति स्तुता तैस्त्रिदशैः स्वभावैः सा मोहिनीरूपमधोक्षजस्य । उवाच वाक्यं विनयप्रसन्ना श्लक्ष्णं तदा तान्प्रण-

तानुदारान् ॥ १५ ॥ मोहिन्युवाच ॥ आदौ पुरुषरूपेण संस्तुतोऽहं जनार्दनः । ततः सीमंतिनीरूपा भवद्भिर्मोहिनी स्तुता ॥ १६ ॥ अथ चैष महापुण्यपुरुषप्रकृतिस्तवः । य एनं पठते नित्यं प्रातरुत्थाय मानवः ॥ १७ ॥ मत्समीपे विशेषेण शुचिर्भूत्वा धृतव्रतः । न दारिद्र्यं भवेत्तस्य न संकटमवाप्नुयात् ॥ १८ ॥ आरोग्यं सततं गच्छेन्न स रोगैः प्रबाधते । भूतप्रेतपिशाचानां न बाधाभिः स भूयते ॥ १९ ॥ मरणेऽपि शुभाँल्लोकान्प्राप्नोतीति विनिश्चितम् । इदं क्षेत्रं महापुण्यं वृद्धातीरमिति श्रुतम् ॥ २० ॥ विशेषेणाधुना जातं युष्मत्पंक्तिनिषेवणात् । महालयेति विख्यातिं याताऽहं मोहिनी स्वयम् ॥ २१ ॥ वसाम्यत्र सुराः सर्वे भवंतोऽपि वसिष्यथ । त्रिरात्रं मत्समीपे यो मोहिन्या अर्गलास्तवम् ॥ २२ ॥ सदा पठति सश्रद्धस्तस्याहं वांछितप्रदा । मद्दर्शनकृतां पुंसां मुक्तिरेव न संशयः ॥ २३ ॥ इति श्रीमोहिन्यर्गलास्तोत्रं संपूर्णम् ॥

## ३०९. अन्नपूर्णास्तोत्रम् ।

श्रीगणेशाय नमः ॥ नित्यानंदकरी वराभयकरी सौंदर्यरत्नाकरी निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी । प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलंबनकरी माताऽन्नपूर्णेश्वरी ॥ १ ॥ नानारत्नविचित्रभूषणकरी हेमांबराडंबरी मुक्ताहारविलंबमानविलसद्वक्षोजकुंभांतरी । काश्मीरागुरुवासिता रुचिकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ २ ॥ योगानंदकरी रिपुक्षयकरी धर्मार्थनिष्ठाकरी चंद्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी । सर्वैश्वर्यसमस्तवांछितकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ३ ॥ कैलासाचलकंदरालयकरी गौरी उमा शंकरी कौमारी निगमार्थगोचरकरी ओंकारबीजाक्षरी । मोक्षद्वारकपाटपाटनकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ४ ॥ दृश्यादृश्यप्रभूतवाहनकरी ब्रह्मांडभांडोदरी लीलानाटकसूत्रभेदनकरी

विज्ञानदीपांकुरी । श्रीविश्वेशमनःप्रसादनकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ५ ॥ उर्वी सर्वजनेश्वरी भगवती मातान्नपूर्णेश्वरी वेणीनील-समानकुंतलहरी नित्यान्नदानेश्वरी । सर्वानंदकरी दशां शुभकरी काशी-पुराधीश्वरी भिक्षां देहि० ॥ ६ ॥ आदिक्षांतसमस्तवर्णनकरी शंभोस्त्रि-भावाकरी काश्मीरा त्रिजलेश्वरी त्रिलहरी नित्यांकुरा शर्वरी । कामा कांक्षकरी जनोदयकरी काशीपुराधीश्वरी भिक्षां० ॥ ७ ॥ देवी सर्ववि-चित्ररत्नरचिता दाक्षायणी सुंदरी वामस्वादुपयोधरप्रियकरी सौभाग्य-माहेश्वरी । भक्ताभीष्टकरी दशाशुभकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ८ ॥ चंद्रार्कानलकोटिकोटिसदृशा चंद्रांशुबिंबाधरी चंद्रार्काग्निसमा-नकुंतलधरी चंद्रार्कवर्णेश्वरी । मालापुस्तकपाशसांकुशधरी काशीपुराधी-श्वरी भिक्षां देहि० ॥ ९ ॥ क्षत्रत्राणकरी महाभयकरी माता कृपासागरी साक्षान्मोक्षकरी सदाशिवकरी विश्वेश्वरश्रीधरी । दक्षाक्रंदकरी निरामयकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ १० ॥ अन्नपूर्णे सदापूर्णे शंकरप्राणवल्लभे । ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति ॥ ११ ॥ माता च पार्वती देवी पिता देवो महेश्वरः । बांधवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम् ॥ १२ ॥ इति श्रीमच्छंकराचार्यविरचितमन्नपूर्णास्तोत्रं संपूर्णम् ॥

## ३१०. बीजषोडशार्णमकरन्दस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीं-बीजे नादबिन्दुद्वितयशशिकलाकाररूपे स्वरूपे मातर्मे देहि बुद्धिं जहि जहि दुरितं पाहि मां दीननाथे । अज्ञानध्वांतनाशे क्षयरुचिरुचिरे प्रोल्लसत्पादपद्मे ब्रह्मेशाद्यैः सुरेन्द्रैः सुरगणनमिते संस्तुतां त्वां नमामि ॥ १ ॥ लज्जाबीजस्वरूपे त्रिजगति वरद व्रीडया या स्थितेयं तां नित्यां शम्भुशक्तिं त्रिभुवनजननीं विश्वसंपालनीं च । सर्वासां तां निदानं सकलगुणमयीं सच्चिदानन्द-

रूपां तेजोरूपां प्रदीप्तां त्रिभुवननमितां ज्ञानदात्रीं नमामि ॥ २ ॥ क्लीं–बीजे कामरूपधृतकुसुमधनुर्बाणपाशाङ्कुशां तां वन्दे भास्वत्सरोजोदर (?) वि भवादृशं मोहयन्तीं त्रिलोकीम् । काञ्चीमञ्जीरहारांगदमुकुटलसत्स्वर्णमाणिक्यरत्नैर्भास्वन्तीमिन्दुवक्त्रां स्तनभरनमितां क्षीणमध्यां त्रिनेत्राम् ॥ ३ ॥ ऐं–वाणीबीजरूपे त्रिभुवनजडताध्वान्तविध्वंसिनी त्वं शब्दब्रह्मस्वरूपां श्रुतिभिरनुपदं गीयमाना त्वमेव । मातर्मे देहि बुद्धिं मम सदसि परद्वन्द्वसंक्षोभकर्त्रीमैन्द्रीं वाचस्पतेरप्यतिविविधपदं त्वत्पदाम्भोजमीडे ॥ ४ ॥ सौः-शक्त्या कामरूपे घटपटप्रभृतौ दृष्टहेतौ सदा या माया काचिन्महत्त्वप्रभृतिपरिणतौ शूलभूता त्वमेव । केचिद्वाह्यप्रपञ्चा मणिमिव हि तनौ तन्तुभूतात्मविद्याविद्याविभ्रान्तिवृन्दं क्षपयति जगतां मेनिरे शुद्धभावाः ॥ ५ ॥ ॐमातस्ते नमस्ते श्रुतिपथगुरुत्र्यक्षरब्रह्मरूपे मिथ्यामोहान्धकारे पतितमनुदिनं पाहि मां मन्दहीनम् । मोहक्रोधप्रलोभप्रमथमदचयैः शत्रुभिः पीड्यतेऽसौ पत्नीपुत्रादिभृत्यैर्नतविविधजनैः शृङ्खलाभिर्निबद्धम् ॥ ६ ॥ ह्रीङ्कारे ह्रीस्वरूपे मम दह दुरितं व्याधिदारिद्र्यबीजं मातस्त्वत्पादपद्मं द्वितयपरिसते प्रार्थये भक्तिलेशम् । त्वं वाणी त्वं च लक्ष्मीस्त्वमसि गिरिसुता ब्रह्मविष्णुस्मरारेश्चित्तं नित्यं स्मराख्ये कृतमिह जननि हृत्कटाक्षैकवृन्दैः ॥ ७ ॥ श्रीङ्कारे श्रीस्वरूपे वितर मयि धनं धान्यहस्त्यश्वयुक्तं स्वर्णं माणिक्यरत्नाद्यभिलषितयुतं त्वत्पदार्थैः सुयोग्यम् । विद्यां त्वं देहि मोक्षं मयि भवदहने देवि दन्दह्यमाने योगीन्द्रैः सेव्यमाना भृतकलुषचयैर्मोक्षमन्वेषयद्भिः ॥ ८ ॥ कामो योनिश्चतुर्थस्वरत्रिदशपतिर्भौवनेशीवबीजं तावद्वर्णावली त्वं नतजनवरदे लास्यदे भक्तिप्रीते । त्वत्पादाम्भोजयुग्मं हृदयसरसिजे सन्निधायैकचित्ते ध्यात्वा त्वत्कर्मबन्धं त्वतिविमलधियो मुक्तवन्तो मुनीन्द्राः ॥ ९ ॥

ब्रह्मेन्दुः कामदेवो वियदमरगुरुर्भौवनेशीवबीजं तावद्वर्णस्वरूपैर्घटितक-नकलतां त्वां प्रसन्नोऽस्मि मातः । विष्णुब्रह्मेशमूर्धस्थितमुकुटमणिप्रोल्लसत्पादपद्मां योगीन्द्रैर्ध्येयपादाम्बुरुहनखशशिद्योतविद्योतितां त्वाम् ॥ १० ॥ इन्दुः कामः सुरेशो विदथनलेसृग्वामनेत्रार्धचन्द्रैर्युक्तं यद्वीजमेतत्तदपि तव वपुः सच्चिदानन्दरूपम् । बाला त्वं भैरवी त्वं त्रिभुवनजननी वारिणी नीलवर्णा त्वं गौरी त्वं च काली सकलमनुमयी त्वं महामोक्षदात्री ॥ ११ ॥ सौः-कारा बीजराजस्त्रिभुवनजननी शक्तिराद्या त्वमेव त्वद्युक्तः शम्भुरेव प्रभवति चलितुं त्वां विना जाड्यवान् सः । ब्रह्मा विष्णुः कपर्दी जननि तव कृपा लेशमात्राच्छरीरं गृह्णन्तः सृष्टिरक्षाप्रलयमविचलच्चक्रिरे त्वद्वशस्थाः ॥ १२ ॥ ऐं-बीजं वाग्भवाख्यं त्वमिह जडमतिध्वान्तचक्षुःप्रकाशा मातः कारुण्यधाराभववलितदृशा पश्य मां दीननाथे । मोह्यन्ते मोहितास्ते तव जननि महामायया बद्धचित्ताः कारुण्यं प्रार्थयन्ते तव पदयुगले ज्ञानवन्तो मुनीन्द्राः ॥ १३ ॥ क्लींकारो बीजरूपस्तव जननि मनुश्रेष्ठमध्यप्रदेशः साक्षाद्ब्रह्मस्वरूपो मदनतनुलता ब्रह्मणो मोहकर्त्री । सुज्ञानस्मेरवक्त्रांबुजकुहपलसत्सत्सु पीयूषधारा वेदाश्चत्वार एते तुहिनगिरिसुते प्राप्तमीनेन्द्ररूपे ॥ १४ ॥ ह्रीङ्कारोङ्काररूपा त्वमिह शशिमुखी ह्रींस्वरूपा त्वमेव क्षान्तिस्त्वं त्वं च कान्तिर्हरिहरकमलोद्भूतरूपा त्वमेव । त्वं सिद्धिस्त्वं च ऋद्धिः स्मररिपुमनसस्त्वं च संमोहयन्ती विद्या त्वं मुक्तिहेतुर्भवजलधिजदुःखस्य हर्त्री त्वमेका ॥ १५ ॥ श्रीं-बीजे श्रीस्वरूपे मधुरिपुमनसो मध्यमध्यासिता त्वं मातस्त्वद्भक्तिलेशादमरपतिरसौ प्राप्तवान् बुद्धिमेषाम् । इत्येवं षोडशार्णः पठितमनुदिनं स्वर्गमोक्षैकहेतुः सिद्धीरष्टौ लभन्ते य इह न तु वरं श्रेष्ठमेते

भजन्ते ॥ १६ ॥ पूजयित्वा विधानेन महात्रिपुरसुन्दरीम् । इमं स्तवं पठित्वा तु देवीसायुज्यमाप्नुयात् ॥ १७ ॥ इति विष्णुयामले शिवोक्तं बीजषोडशार्णमकरन्दस्तोत्रं संपूर्णम् ॥

## ३११. कालिकास्तोत्रम् ।

श्रीगणेशाय नमः ॥ दधन्नैरन्तर्यादपि मलिनचर्यां सपदि यत्सपर्यां पश्यन्सन् विशतु सुरपुर्यां नरपशुः । भटान्वर्यान् वीर्यासमहरदसूर्यान् समिति या जगद्धुर्या काली मम मनसि कुर्यान्निवसतिम् ॥ १ ॥ लसन्नासामुक्ता निजचरणभक्तावनविधौ समुद्युक्ता रक्तांबुरुहदृगलक्ताधरपुटा । अपि व्यक्ताऽव्यक्तायमनियमसक्ताशयशया जगद्धुर्या काली मम मनसि कुर्यान्निवसतिम् ॥ २ ॥ रणत्सन्मंजीरा खलदमनधीराऽतिरुचिरस्फुरद्विद्युच्चीरा सुजनझषनीरायिततनुः । विराजत्कोटीरा विमलतरहीरा भरणभृज्जगद्धुर्या काली मम० ॥ ३ ॥ वसाना कौशेयं कमलनयना चन्द्रवदना दधाना कारुण्यं विपुलजघना कुन्दरदना । पुनाना पापाद्या सपदि विधुनाना भवभयं जगद्धुर्या काली मम० ॥ ४ ॥ रघूत्तंसप्रेक्षारणरणिकया मेरुशिखरात् समागाद्या रागाज्झटिति यमुनागाधिपमसौ । नगादीशप्रेष्ठा नगपतिसुता निर्जरनुता जगद्धुर्या काली मम मनसि० ॥ ५ ॥ विलसन्नवरत्नमालिका कुटिलश्यामलकुन्तलालिका । नवकुंकुमभव्यभालिकाऽवतु सा मां सुखकृद्धि कालिका ॥ ६ ॥ यमुनाचलदमुना दुःखदवस्य देहिनाम् । अमुना यदि वीक्षिता सकृच्छमु नानाविधमातनोत्यहो ॥ ७ ॥ अनुभूति सतीप्राणपरित्राणपरायणा । देवैः कृतसपर्या सा काली कुर्याच्छुभानि नः ॥ ८ ॥ य इदं कालिकास्तोत्रं पठेत्तु प्रयतः शुचिः । देवीसायुज्यभुक् चेह सर्वान्कामानवाप्नुयात् ॥ ९ ॥ इति कालिकास्तोत्रं संपूर्णम् ॥

## ३१२. देवीषट्कम् ।

श्रीगणेशाय नमः ॥ अम्बे शशिबिम्बवदने कम्बुग्रीवे कठोर-
कुचकुम्भे । अम्बरसमानमध्ये शम्बररिपुवैरिदेवि मां पाहि ॥ १ ॥
कुन्दमुकुलाग्रदन्तां कुङ्कमपङ्केन लिप्तकुचभाराम् । आनीलनील-
देहामम्बामखिलाण्डनायकीं वन्दे ॥ २ ॥ सरिगमपधनिसतान्तां
वीणासंक्रान्तचारुहस्तां ताम् । शान्तां मृदुलस्वान्तां कुचभरतान्त-
नमामि शिवकान्ताम् ॥ ३ ॥ अरटतटघटितजूटीताडिततालीकपाल-
ताटङ्काम् । वीणावादनवेलाकम्पितशिरसं नमामि मातङ्गीम् ॥ ४ ॥
वीणारसानुषङ्गं विकचमदामोदमाधुरीभृङ्गम् । करुणापूरितरङ्गं कलये
मातङ्गकन्यकापाङ्गम् ॥ ५ ॥ दयमानदीर्घनयनां देशिकरूपेण दर्शि-
ताभ्युदयाम् । वामकुचनिहितवीणां वरदां सङ्गीतमातृकां वन्दे ॥ ६ ॥
माणिक्यवीणामुपलालयन्तीं मन्दालसां मञ्जुलवाग्विलासाम् ॥
माहेन्द्रनीलद्युतिकोमलाङ्गीं मातङ्गकन्यां मनसा स्मरामि ॥ ७ ॥
इति श्रीकालिकापुराणे देवीषट्कं समाप्तम् ॥



# लक्ष्मीस्तोत्राणि ।



वन्दे लक्ष्मीं परशिवमयीं शुद्धजाम्बूनदाभां
तेजोरूपां कनकवसनां सर्वभूषोज्ज्वलांगीम् ॥
बीजापूरं कनककलशं हेमपद्मं दधाना-
माद्यां शक्तिं सकलजननीं विष्णुवामांकसंस्थाम् ॥



मयि क्षणमीक्षणार्धमिन्दीवरोदरसहोदरमिन्दिरायाः ॥ ७ ॥ इष्टा विशिष्टमतयोऽपि नरा यथा द्राग्दृष्टास्त्रिविष्टपसदश्च पदं भजन्ते। दृष्टिः प्रहृष्टकमलोदरदीप्तिरिष्टां पुष्टिं कृषीष्ट मम पुष्करविष्टरायाः ॥ ८ ॥ दद्याद्दयानुपवनो द्रविणांबुधारामस्मिन्नकिञ्चनविहंगशिशौ निषण्णे। दुष्कर्मधर्ममपनीय चिराय दूरान्नारायणप्रणयिनीनयनांबुवाहः ॥ ९ ॥ धीर्देवतेति गरुडध्वजभामिनीति शाकंभरीति शशिशेखरवल्लभेति। सृष्टिस्थितिप्रलयसिद्धिषु संस्थितायै तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै ॥ १० ॥ श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै रत्यै नमोऽस्तु रमणीयगुणाश्रयायै। शक्त्यै नमोऽस्तु शतपत्रनिकेतनायै पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै ॥ ११ ॥ नमोऽस्तु नालीकविभावनायै नमोऽस्तु दुग्धोदधिजन्मभूत्यै। नमोऽस्तु सोमामृतसोदरायै नमोऽस्तु नारायणवल्लभायै ॥ १२ ॥ नमोऽस्तु हेमांबुजपीठिकायै नमोऽस्तु भूमण्डलनायिकायै। नमोऽस्तु देवादिदयापरायै नमोऽस्तु शार्ङ्गायुधवल्लभायै ॥ १३ ॥ नमोऽस्तु देव्यै भृगुनन्दनायै नमोऽस्तु विष्णोरुरसि स्थितायै। नमोऽस्तु लक्ष्म्यै कमलालयायै नमोऽस्तु दामोदरवल्लभायै ॥ १४ ॥ नमोऽस्तु कान्त्यै कमलेक्षणायै नमोऽस्तु भूत्यै भुवनप्रसूत्यै। नमोऽस्तु देवादिभिरर्चितायै नमोऽस्तु नन्दात्मजवल्लभायै ॥ १५ ॥ स्तुवन्ति ये स्तुतिभिरमूभिरन्वहं त्रयीमयीं त्रिभुवनमातरं रमाम्। गुणाधिका गुरुधनभाग्यभागिनो भवन्ति ते भवमनु भाविताशयाः ॥ १६ ॥ हरिः ॐ इति श्रीमद्भगवत्पादशंकराचार्यकृतः कनक ( लक्ष्मी )-धारास्तवः संपूर्णः ॥

## ३१५. देवकृतलक्ष्मीस्तोत्रम्।

श्रीगणेशाय नमः ॥ क्षमस्व भगवत्यंब क्षमाशीले परात्परे।

शुद्धसत्त्वस्वरूपे च कोपादिपरिवर्जिते ॥ १ ॥ उपमे सर्वसाध्वीनां देवीनां देवपूजिते । त्वया विना जगत्सर्वं मृततुल्यं च निष्फलम् ॥२॥ सर्वसंपत्स्वरूपा त्वं सर्वेषां सर्वरूपिणी । रासेश्वर्यधिदेवी त्वं त्वत्कलाः सर्वयोषितः ॥ ३ ॥ कैलासे पार्वती त्वं च क्षीरोदे सिन्धुकन्यका । स्वर्गे च स्वर्गलक्ष्मीस्त्वं मर्त्यलक्ष्मीश्च भूतले ॥ ४ ॥ वैकुंठे च महालक्ष्मीर्देवदेवी सरस्वती । गंगा च तुलसी त्वं च सावित्री ब्रह्मलोकतः ॥ ५ ॥ कृष्णप्राणाधिदेवी त्वं गोलोके राधिका स्वयम् । रासे रासेश्वरी त्वं च वृंदावनवने वने ॥ ६ ॥ कृष्णप्रिया त्वं भांडीरे चंद्रा चंदनकानने । विरजा चंपकवने शतशृंगे च सुंदरी ॥ ७ ॥ पद्मावती पद्मवने मालती मालतीवने । कुंददंती कुंदवने सुशीला केतकीवने ॥ ८ ॥ कदंबमाला त्वं देवी कदंबकाननेऽपि च । राजलक्ष्मी राजगेहे गृहलक्ष्मीर्गृहे गृहे ॥ ९ ॥ इत्युक्त्वा देवताः सर्वा मुनयो मनवस्तथा । रुरुदुर्नम्रवदनाः शुष्ककंठोष्ठतालुकाः ॥ १० ॥ इति लक्ष्मीस्तवं पुण्यं सर्वदेवैः कृतं शुभम् । यः पठेत्प्रातरुत्थाय स वै सर्वं लभेद्ध्रुवम् ॥ ११ ॥ अभार्यो लभते भार्यां विनीतां सुसुतां सतीम् । सुशीलां सुंदरीं रम्यामतिसुप्रियवादिनीम् ॥ १२ ॥ पुत्रपौत्रवतीं शुद्धां कुलजां कोमलां वराम् । अपुत्रो लभते पुत्रं वैष्णवं चिरजीविनम् ॥ १३ ॥ परमैश्वर्ययुक्तं च विद्यावंतं यशस्विनम् । भ्रष्टराज्यो लभेद्राज्यं भ्रष्टश्रीर्लभते श्रियम् ॥ १४ ॥ हतबंधुर्लभेद्बंधुं धनभ्रष्टो धनं लभेत् । कीर्तिहीनो लभेत्कीर्तिं प्रतिष्ठां च लभेद्ध्रुवम् ॥ १५ ॥ सर्वमंगलदं स्तोत्रं शोकसंतापनाशनम् । हर्षानंदकरं शश्वद्धर्ममोक्षसुहृत्प्रदम् ॥ १६ ॥ इति श्रीदेवकृतं लक्ष्मीस्तोत्रं संपूर्णम् ॥

## २१८. राधाकवचम् ।

श्रीगणेशाय नमः ॥ पार्वत्युवाच ॥ कैलासवासिन् भगवन् भक्तानुग्रहकारक । राधिकाकवचं पुण्यं कथयस्व मम प्रभो ॥ १ ॥ यद्यस्ति करुणा नाथ त्राहि मां दुःखतो भयात् । त्वमेव शरणं नाथ शूलपाणे पिनाकधृक् ॥ २ ॥ शिव उवाच ॥ शृणुष्व गिरिजे तुभ्यं कवचं पूर्वसूचितम् । सर्वरक्षाकरं पुण्यं सर्वहत्याहरं परम् ॥ ३ ॥ हरिभक्तिप्रदं साक्षाद्भुक्तिमुक्तिप्रसाधनम् । त्रैलोक्याकर्षणं देवि हरिसान्निध्यकारकम् ॥ ४ ॥ सर्वत्र जयदं देवि सर्वशत्रुभयावहम् । सर्वेषां चैव भूतानां मनोवृत्तिहरं परम् ॥ ५ ॥ चतुर्धा मुक्तिजनकं सदानंदकरं परम् । राजसूयाश्वमेधानां यज्ञानां फलदायकम् ॥ ६ ॥ इदं कवचमज्ञात्वा राधामंत्रं च यो जपेत् । स नाप्नोति फलं तस्य विघ्नास्तस्य पदे पदे ॥ ७ ॥ ऋषिरस्य महादेवोऽनुष्टुप् छंदश्च कीर्तितम् । राधाऽस्य देवता प्रोक्ता रां बीजं कीलकं स्मृतम् ॥ ८ ॥ धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः । श्रीराधा मे शिरः पातु ललाटं राधिका तथा ॥ ९ ॥ श्रीमती नेत्रयुगलं कर्णौ गोपेंद्रनंदिनी । हरिप्रिया नासिकां च भ्रूयुगं शशिशोभना ॥ १० ॥ ओष्ठं पातु कृपादेवी अधरं गोपिका तथा । वृषभानुसुता दन्तांश्चिबुकं गोपनंदिनी ॥ ११ ॥ चंद्रावली पातु गंडं जिह्वां कृष्णप्रिया तथा । कंठं पातु हरिप्राणा हृदयं विजया तथा ॥ १२ ॥ बाहू द्वौ चंद्रवदना उदरं सुबलस्वसा । कोटियोगान्विता पातु पादौ सौभद्रिका तथा ॥ १३ ॥ नखांश्चंद्रमुखी पातु गुल्फौ गोपालवल्लभा । नखान् विधुमुखी देवी गोपी पादतलं तथा ॥ १४ ॥ शुभप्रदा पातु पृष्ठं कुक्षौ श्रीकांतवल्लभा । जानुदेशं जया पातु हरिणी पातु सर्वतः ॥ १५ ॥ वाक्यं वाणी सदा पातु धनागारं धनेश्वरी । पूर्वां दिशं कृष्णरता कृष्णप्राणा च पश्चिमाम् ॥ १६ ॥

उत्तरां हरिता पातु दक्षिणां वृषभानुजा । चंद्रावली नैशमेव दिवा क्ष्वेडितमेखला ॥ १७ ॥ सौभाग्यदा मध्यदिने सायाह्ने कामरूपिणी । रौद्री प्रातः पातु मां हि गोपिनी रजनीक्षये ॥ १८ ॥ हेतुदा संगवे पातु केतुमाला दिवार्धके । शेषाऽपराह्णसमये शमिता सर्वसंधिषु ॥ १९ ॥ योगिनी भोगसमये रतौ रतिप्रदा सदा । कामेशी कौतुके नित्यं योगे रत्नावली मम ॥ २० ॥ सर्वदा सर्वकार्येषु राधिका कृष्णमानसा । इत्येतत्कथितं देवि कवचं परमाद्भुतम् ॥ २१ ॥ सर्वरक्षाकरं नाम महारक्षाकरं परम् । प्रातर्मध्याह्नसमये सायाह्ने प्रपठेद्यदि ॥ २२ ॥ सर्वार्थसिद्धिस्तस्य स्याद्यद्यन्मनसि वर्तते । राजद्वारे सभायां च संग्रामे शत्रुसंकटे ॥ २३ ॥ प्राणार्थनाशसमये यः पठेत्प्रयतो नरः । तस्य सिद्धिर्भवेद्देवि न भयं विद्यते क्वचित् ॥ २४ ॥ आराधिता राधिका च तेन सत्यं न संशयः । गंगास्नानाद्धरेर्नामग्रहणाद्यत्फलं लभेत् ॥ २५ ॥ तत्फलं तस्य भवति यः पठेत्प्रयतः शुचिः । हरिद्रारोचनाचंद्रमंडितं हरिचंदनम् ॥ २६ ॥ कृत्वा लिखित्वा भूर्जे च धारयेन्मस्तके भुजे । कंठे वा देवदेवेशि स हरिर्नात्र संशयः ॥ २७ ॥ कवचस्य प्रसादेन ब्रह्मा सृष्टिं स्थितिं हरिः । संहारं चाहं नियतं करोमि कुरुते तथा ॥ २८ ॥ वैष्णवाय विशुद्धाय विरागगुणशालिने । दद्यात्कवचमव्यग्रमन्यथा नाशमाप्नुयात् ॥ २९ ॥ इति श्रीनारदपंचरात्रे ज्ञानामृतसारे राधाकवचं संपूर्णम् ॥

## ३१७. श्रीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ पुष्कर उवाच ॥ राजलक्ष्मीस्थिरत्वाय यथेन्द्रेण पुरा श्रियः । स्तुतिः कृता तथा राजन् जयार्थं स्तुतिमाचरेत् ॥ १ ॥ इंद्र उवाच ॥ नमोऽस्तु सर्वलोकानां जननीमब्धिसंभवाम् । श्रियमुन्निद्रपद्माक्षीं विष्णुवक्षःस्थलस्थिताम् ॥ २ ॥ त्वं सिद्धिस्त्वं

स्वधा स्वाहा सुधा त्वं लोकपावनी। संध्या रात्रिः प्रभा मूर्तिर्मेधा श्रद्धा सरस्वती ॥ ३ ॥ यज्ञविद्या महाविद्या गुह्यविद्या च शोभने। आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ॥ ४ ॥ आन्वीक्षिकी त्रयी वार्ता दंडनीतिस्त्वमेव च। सौम्यासौम्यैर्जगद्रूपैस्त्वयैतद्देवि पूरितम् ॥ ५ ॥ का त्वन्या त्वामृते देवि सर्वयज्ञमयं वपुः। अध्यास्ते देवदेवस्य योगिचिंत्यं गदाभृतः ॥ ६ ॥ त्वया देवि परित्यक्तं सकलं भुवनत्रयम्। विनष्टप्रायमभवत् त्वयेदानीं समेधितम् ॥ ७ ॥ दाराः पुत्रास्तथाऽगारं सुहृद्धान्यधनादिकम्। भवत्येतन्महाभागे नित्यं त्वद्वीक्षणान्नृणाम् ॥ ८ ॥ शरीरारोग्यमैश्वर्यमरिपक्षक्षयः सुखम्। देवि त्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्लभम् ॥९॥ त्वमंबा सर्वलोकानां देवदेवो हरिः पिता। त्वयैतद्विष्णुना चांब जगद्व्याप्तं चराचरम् ॥ १० ॥ मानं कोपं तथा कोषं मा गृहं मा परिच्छदम्। मा शरीरं कलत्रं च त्यजेथाः सर्वपावनि ॥ ११ ॥ मा पुत्रान्मा सुहृद्वर्गान् मा पशून्मा विभूषणम्। त्यजेथा मम देवस्य विष्णोर्वक्षःस्थलालये ॥ १२ ॥ सत्त्वेन सत्यशौचाभ्यां तथा शीलादिभिर्गुणैः। त्यजंते ते नराः सद्यः संत्यक्ता ये त्वयामले ॥ १३ ॥ त्वयावलोकिताः सद्यः शीलाद्यैरखिलैर्गुणैः। कुलैश्वर्यैश्च युज्यंते पुरुषा निर्गुणा अपि ॥ १४ ॥ स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान्। स शूरः स च विक्रांतो यस्त्वया देवि वीक्षितः ॥ १५ ॥ सद्यो वैगुण्यमायांति शीलाद्याः सकला गुणाः। पराङ्मुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे ॥ १६ ॥ न ते वर्णयितुं शक्ता गुणान् जिह्वापि वेधसः। प्रसीद देवि पद्माक्षि माऽस्मांस्त्याक्षीः कदाचन ॥ १७ ॥ पुष्कर उवाच ॥ एवं स्तुता ददौ श्रीश्च वरमिंद्राय चेप्सितम्। सुस्थिरत्वं च राज्यस्य संग्रामविजयादिकम् ॥ १८ ॥ स्वस्तोत्रपाठ-

श्रवणकर्तॄणां भुक्तिमुक्तिदम् । श्रीस्तोत्रं सततं तस्मात्पठेच्च शृणुयान्नरः ॥ १९ ॥ इत्यग्निपुराणांतर्गतं श्रीस्तोत्रं संपूर्णम् ॥

## ३१८. लक्ष्मीलहरी ।

श्रीगणेशाय नमः ॥ समुन्मीलन्नीलाम्बुजनिकरनीराजितरुचामपाङ्गानां भङ्गैरमृतलहरीश्रेणिमसृणैः । ह्रिया हीनं दीनं भृशमुदरलीनं करुणया हरिश्यामा सा मामवतु जडसामाजिकमपि ॥ १ ॥ समुन्मीलत्वन्तःकरणकरुणोद्गारचतुरः करिप्राणत्राणप्रणयिनि दृगन्तस्तव मयि । यमासाद्योन्माद्यद्द्विपनियुतगण्डस्थलगलन्मदक्लिन्नद्वारो भवति सुखसारो नरपतिः ॥ २ ॥ उरस्यस्य श्र्यत्कबरभरनिर्यत्सुमनसः पतन्ति स्वर्बालाः स्मरशरपराधीनमनसः । सुरास्तं गायन्ति स्फुरिततनुगङ्गाधरमुखास्तवायं दृक्पातो यदुपरि कृपातो विलसति ॥ ३ ॥ समीपे संगीतस्वरमधुरभङ्गी मृगदृशां विदूरे दानान्धद्विरदकलभोद्दामनिनदः । बहिर्द्वारे तेषां भवति हयहेषाकलकलो दृगेषा ते येषामुपरि कमले देवि सदया ॥ ४ ॥ अगण्यैरिन्द्राद्यैरपि परमपुण्यैः परिचितो जगज्जन्मस्थानप्रलयरचनाशिल्पनिपुणः । उदञ्चत्पीयूषाम्बुधिलहरिलीलामनुहरन्नपाङ्गस्तेऽमन्दं मम कलुषवृन्दं दलयतु ॥ ५ ॥ नमन्मौलिश्रेणित्रिपुरपरिपन्थिप्रतिलसत्कपर्दव्यावृत्तिस्फुरितफणिफूत्कारचकितः । लसत्फुल्लाम्भोजस्रदिमहरणः कोऽपि चरणश्चिरं चेतश्चारी मम भवतु वारीशदुहितुः ॥ ६ ॥ प्रवालानां दीक्षागुरुरपि च लाक्षारुणरुचां नियन्त्री बन्धूकद्युतिनिकरबन्धूकृतिपटुः । नृणामन्तर्ध्वान्तं निबिडमपहर्तुं तव किल प्रभातश्रीरेषा चरणरुचिवेषा विजयते ॥ ७ ॥ प्रभातप्रोन्मीलत्कमलवनसंचारसमये शिखाः किंजल्कानां विदधति रुजं यत्र मृदुलाः । तदेतन्मातस्ते चरणमरुणश्लाघ्यकरुणं कठोरा मद्वाणी कथमिय-

मिदानीं प्रविशतु ॥ ८ ॥ स्मितज्योत्स्नामज्जद्द्विजमणिमयूखामृतझरै-र्निषिञ्चन्तीं विश्वं तव विमलमूर्तिं स्मरति यः। अमन्दं स्पन्दन्ते वदनकमलादस्य कृतिनो विचित्रा वै कल्पाः सततमविकल्पा नवगिरः ॥ ९ ॥ शरौ मायाबीजौ हिमकरकलाक्रान्तशिरसौ विधायोर्ध्वे बिन्दुं स्फुरितमिति बीजं जलधिजे। जपेद्यः स्वच्छन्दं स हि पुनरमन्दं गजघटामदभ्राम्यद्भृङ्गैर्मुखरयति वेश्मानि विदुषाम् ॥ १० ॥ स्मरो नामं नामं त्रिजगदभिरामं तव पदं प्रपेदे सिद्धिं यां कथमिव नरस्तां कथयतु। यया पातं पातं पदकमलयोः पर्वतचरो हरो हा रोषार्द्रामनुनयति शैलेन्द्रतनयाम् ॥ ११ ॥ हरन्तो निःशङ्कं हिमकरकलानां रुचिरतां किरन्तः स्वच्छन्दं किरणमयपीयूषनिकरम्। विलुम्पन्तु प्रौढा हरिहृदयहाराः प्रियतमा ममान्तःसंतापं तव चरणशोणाम्बुजनखाः ॥ १२ ॥ मिथोन्माणिक्यानां विगलितनिमेषं निमिषतामनन्दं सौन्दर्यं तव चरणयोरम्बुधिसुते। पदालंकाराणां जयति कलनिक्वाणनपटुरुदञ्चद्दुद्दासः स्तुतिवचनलीलाकलकलः ॥ १३ ॥ मणिज्योत्स्नाजालैर्निजतनुरुचां मांसलतया जटालं ते जङ्घायुगलमघभङ्गाय भवतु। भ्रमन्ती यन्मध्ये दरदलितशोणाम्बुजरुचां दृशां माला नीराजनमिव विधत्ते मुररिपोः ॥ १४ ॥ हरद्गर्वं सर्वं करिपतिकराणां मृदुतया भृशं भाभिर्दम्भं कनकमयरम्भावनिरुहाम्। लसज्जानुज्योत्स्ना तरणिपरिणद्धं जलधिजे तवोरुद्वन्द्वं नः श्लथयतु भवोरुज्वरभयम् ॥ १५ ॥ कलक्वाणां काञ्चीं मणिगणजटालामधिवहन्वसानः कौसुम्भं वसनमसनं कौस्तुभरुचाम्। मुनिव्रातैः प्रातः शुचिवचनजातैरतिनुतं नितम्बस्ते बिम्बं हसति नवमम्बाम्बरमणेः ॥ १६ ॥ जगन्मिथ्याभूतं मम निगदतां वेदवचसामभिप्रायो नाद्यावधि

हृदयमध्याविशदयम् । इदानीं विश्वेषां जनकमुदरं ते विमृशतो विसंदेहं चेतोऽजनि गरुडकेतोः प्रियतमे ॥ १७ ॥ अनल्पैर्वादीन्द्रैरगणितमहायुक्तिनिवहैर्निरस्ता विस्तारं क्वचिदकलयन्ती तनुमपि । असत्ख्यातिव्याख्याधिकचतुरिमाख्यातमहिमा वलग्ने लग्नेयं सुगतमतसिद्धान्तसरणिः ॥ १८ ॥ निदानं शृङ्गारप्रकरमकरन्दस्य कमले महानेवालम्बो हरिनयनरोलम्बवरयोः । निधानं शोभानां निधनमनुतापस्य जगतो जवेनाभीतिं मे दिशतु तव नाभीसरसिजम् ॥ १९ ॥ गभीरामुद्वेलां प्रथमरसकल्लोलमिलितां विगाढुं ते नाभीविमलसरसीं गौर्मम मनाक् । पदं यावद्धत्त्यस्त्यहह विनिमग्नैव सहसा नहि क्षेमं सूते गुरुमहिमभूतेष्वविनयः ॥ २० ॥ कुचौ ते दुग्धाम्भोनिधिकुलशिखामण्डनमणे हरेते सौभाग्यं यदि सुरगिरेश्चित्रमिह किम् । त्रिलोकीलावण्याहरणनवलीलानिपुणयोर्ययोर्दत्ते भूयः करमखिलनाथो मधुरिपुः ॥ २१ ॥ हरक्रोधत्रस्यन्मदननवदुर्गद्वयतुलां दधत्कोकद्वन्द्वद्युतिदमनदीक्षाधिगुरुताम् । तवैतद्वक्षोजद्वितयमरविन्दाक्षमहिले मम स्वान्तध्वान्तं किमपि च नितान्तं गमयतु ॥ २२ ॥ अनेकब्रह्माण्डस्थितिनियमलीलाविलसिते दयापीयूषाम्भोनिधिसहजसंवासभवने । विधोश्चित्तायामे हृदयकमले ते तु कमले मनाङ् मन्निस्तारस्मृतिरपि च कोणे निवसतु ॥ २३ ॥ मृणालीनां लीलाः सहजलवणिम्ना लघयतां चतुर्णां सौभाग्यं तव जननि दोष्णां वदतु कः । लुठन्ति स्वच्छन्दं मरकतशिलामांसलरुचः श्रुतीनां स्पर्धां ये दधत इव कण्ठे मधुरिपोः ॥ २४ ॥ अलभ्यं सौरभ्यं कविकुलनमस्या रुचिरता तथापि त्वद्धस्ते निवसदरविन्दं विकसितम् । कलापे काव्यानां प्रकृतिकमनीयस्तुतिविधौ गुणोत्कर्षाधानं प्रथितमुपमानं समजनि ॥ २५ ॥ अनल्पं जल्पन्तु

प्रतिहतधियः पल्लवतुलां रसज्ञामज्ञानां क इव कमले मन्थरयतु । त्रपन्तु श्रीभिक्षावितरणवशीभूतजगतां कराणां सौभाग्यं तव तुलयितुं तुङ्गरसनाः ॥ २६ ॥ समाहारः श्रीणां विरचित-विहारो हरिदृशां परीहारो भक्तप्रभवभवसंतापसरणेः । प्रहारः सर्वासामपि च विपदां विष्णुदयिते ममोद्धारोपायं तव सपदि हारो विमृशतु ॥ २७ ॥ अलंकुर्वाणानां मणिगणघृणीनां लवणिमा यदीयाभिर्भाभिर्भजति महिमानं लघुरपि । सुपर्वश्रेणीनां जनितपरसौभाग्यविभवास्तवाङ्गुल्यस्ता मे ददतु हरिवामेऽभिल-षितम् ॥ २८ ॥ तपस्तेपे तीव्रं किमपि परितप्य प्रतिदिनं तव ग्रीवालक्ष्मीलवपरिचयादाप्तविभवम् । हरिः कम्बुं चुम्बत्यथ वहति पाणौ किमधिकं वदामस्तत्रायं प्रणयवशतोऽस्यै स्पृहयति ॥ २९ ॥ अभूदप्रत्यूहः सकलहरिदुल्लासनविधिर्विलीनो लोकानां स हि नयनतापोऽपि कमले । तवास्मिन्पीयूषं किरति वदने रम्यवदने कुतो हेतोश्चेतोविधुरयमुदेति स्म जलधेः ॥ ३० ॥ मुखाम्भोजे मन्दस्मितमधुरकान्त्या विकसतां द्विजानां ते हीरावलिविहितनीरा-जनरुचाम् । इयं ज्योत्स्ना कापि स्रवदमृतसंदोहसरसा ममोद्य-द्दारिद्र्यज्वरतरुणतापं तिरयतु ॥ ३१ ॥ कुलैः कस्तूरीणां भृशमनिश-माशास्यमपि च प्रभातप्रोन्मीलन्नलिननिवहैरश्रुतचरम् । वहन्तः सौरभ्यं मृदुगतिविलासा मम शिवं तव श्वासा नासापुटविहितवासा विदधताम् ॥ ३२ ॥ कपोले ते दोलायितललितलोलालकवृते विमुक्ता धम्मिल्लादभिलसति मुक्तावलिरियम् । स्वकीयानां बन्दी-कृतमसहमानैरिव बलान्निबध्योर्ध्वं कृष्टा तिमिरनिकुरम्बैर्विधुकला ॥ ३३ ॥ प्रसादो यस्यायं नमदमितगीर्वाणमुकुटप्रसर्पज्ज्योत्स्नाभि-श्चरणतलपीठार्चितविधिः । दृगम्भोजं तत्ते गतिहसितमत्तेभगमने

वने लीनैर्दीनैः कथय कथमीयादिह तुलाम् ॥ ३४ ॥ दुरापा दुर्वृत्तैर्दुरितदमने दारणभरा दयार्द्रा दीनानामुपरि दलदिन्दीवरनिभा । दहन्ती दारिद्र्यद्रुमकुलमुदारद्रविणदा त्वदीया दृष्टिर्मे जननि दुरदृष्टं दलयतु ॥ ३५ ॥ तव श्रोत्रे फुल्लोत्पलसकलसौभाग्यजयिनी सदैव श्रीनारायणगुणगणौघप्रणयिनी । रवैर्दीनां लीनामनिशमवधानातिशयिनी समाप्येतां वाचं जलधितनये गोचरयताम् ॥ ३६ ॥ प्रभाजालैः प्राभातिकदिनकराभापनयनं तवेदं खेदं मे विघटयतु ताटङ्कयुगलम् । महिम्ना यस्यायं प्रलयसमयेऽपि क्रतुभुजां जगत्पायं पायं स्वपिति निरपायं तव पतिः ॥ ३७ ॥ निवासो मुक्तानां निबिडतरनीलाम्बुदनिभस्तवायं धम्मिल्लो विमलयतु मल्लोचनयुगम् । भृशं यस्मिन्कालागरुबहुलसौरभ्यनिवहैः पतन्ति श्रीभिक्षार्थिन इव मदान्धा मधुलिहः ॥ ३८ ॥ विलग्नौ ते पार्श्वद्वयपरिसरे मत्तकरिणौ करोन्नीतैरच्छन्मणिकलशसुग्धास्यगलितैः । निषिञ्चन्तौ मुक्तामणिगणजयैस्त्वां जलकणैर्नमस्यामो दामोदरगृहिणि दारिद्र्यदलिताः ॥ ३९ ॥ अये मातर्लक्ष्मि त्वदरुणपदाम्भोजनिकटे लुठन्तं बालं मामविरलगलद्बाष्पजटिलम् । सुधासेकस्निग्धैरतिमसृणमुग्धैः करतलैः स्पृशन्ती मा रोदीरिति वद समाश्वास्यसि कदा ॥ ४० ॥ रमे पद्मे लक्ष्मि प्रणतजनकल्पद्रुमलते सुधाम्भोधेः पुत्रि त्रिदशनिकरोपास्तचरणे । परे नित्यं मातर्गुणमयि परब्रह्ममहिले जगन्नाथस्याकर्णय मृदुलवर्णावलिमिमाम् ॥ ४१ ॥ इति पण्डितराजश्रीजगन्नाथविरचिता लक्ष्मीलहरी समाप्ता ॥

## २१९. सिद्धिलक्ष्मीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीसिद्धिलक्ष्मीस्तोत्रस्य हिरण्यगर्भ ऋषिः, अनुष्टुप् छन्दः, सिद्धिलक्ष्मीर्देवता, मम समस्त-

दुःखक्लेशपीडादारिद्र्यविनाशार्थं सर्वलक्ष्मीप्रसन्नकरणार्थं महाकालीमहालक्ष्मीमहासरस्वतीदेवताप्रीत्यर्थं च सिद्धिलक्ष्मीस्तोत्रजपे विनियोगः । ॐ सिद्धिलक्ष्मी अङ्गुष्ठाभ्यां नमः । ॐ ह्रीं विष्णुहृदये तर्जनीभ्यां नमः । ॐ क्लीं अमृतानन्दे मध्यमाभ्यां नमः । ॐ श्रीं दैत्यमालिनी अनामिकाभ्यां नमः । ॐ तं तेजःप्रकाशिनी कनिष्ठिकाभ्यां नमः । ॐ ह्रीं क्लीं श्रीं ब्राह्मी वैष्णवी माहेश्वरी करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । ॐ सिद्धिलक्ष्मी हृदयाय नमः । ॐ ह्रीं वैष्णवी शिरसे स्वाहा । ॐ क्लीं अमृतानन्दे शिखायै वौषट् । ॐ श्रीं दैत्यमालिनी कवचाय हुम् । ॐ तं तेजःप्रकाशिनी नेत्रद्वयाय वौषट् । ॐ ह्रीं क्लीं श्रीं ब्राह्मीं वैष्णवीं फट् ॥ अथ ध्यानम् ॥ ब्राह्मीं च वैष्णवीं भद्रां षड्भुजां च चतुर्मुखाम् । त्रिनेत्रां च त्रिशूलां च पद्मचक्रगदाधराम् ॥ १ ॥ पीताम्बरधरां देवीं नानालंकारभूषिताम् । तेजःपुञ्जधरां श्रेष्ठां ध्यायेद्बालकुमारिकाम् ॥ २ ॥ ॐकारलक्ष्मीरूपेण विष्णोर्हृदयमव्ययम् । विष्णुमानन्दमध्यस्थं ह्रींकारबीजरूपिणी ॥ ३ ॥ ॐ क्लीं अमृतानन्दभद्रे सद्य आनन्ददायिनी । ॐ श्रीं दैत्यभक्षरदां शक्तिमालिनी शत्रुमर्दिनी ॥ ४ ॥ तेजःप्रकाशिनी देवी वरदा शुभकारिणी । ब्राह्मी च वैष्णवी भद्रा कालिका रक्तशाम्भवी ॥ ५ ॥ आकारब्रह्मरूपेण ॐकारं विष्णुमव्ययम् । सिद्धिलक्ष्मि परालक्ष्मि लक्ष्यलक्ष्मि नमोऽस्तु ते ॥ ६ ॥ सूर्यकोटिप्रतीकाशं चन्द्रकोटिसमप्रभम् । तन्मध्ये निकरे सूक्ष्मं ब्रह्मरूपव्यवस्थितम् ॥ ७ ॥ ॐकारपरमानन्दं क्रियते सुखसंपदा । सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ॥ ८ ॥ प्रथमे त्र्यम्बका गौरी द्वितीये वैष्णवी तथा । तृतीये कमला प्रोक्ता चतुर्थे सुरसुन्दरी ॥ ९ ॥ पञ्चमे विष्णुपत्नी च षष्ठे च वैष्णवी तथा । सप्तमे च वरारोहा अष्टमे वरदायिनी ॥ १० ॥

नवमे खड्गत्रिशूला दशमे देवदेवता। एकादशे सिद्धिलक्ष्मीर्द्वादशे ललितात्मिका ॥ ११ ॥ एतत्स्तोत्रं पठन्तस्त्वां स्तुवन्ति भुवि मानवाः। सर्वोपद्रवमुक्तास्ते नात्र कार्या विचारणा ॥ १२ ॥ एकमासं द्विमासं वा त्रिमासं च चतुर्थकम्। पञ्चमासं च षण्मासं त्रिकालं यः पठेन्नरः॥ १३ ॥ ब्राह्मणाः क्लेशतो दुःखदरिद्रा भयपीडिताः। जन्मान्तरसहस्रेषु मुच्यन्ते सर्वक्लेशतः ॥ १४ ॥ अलक्ष्मीर्लभते लक्ष्मीमपुत्रः पुत्रमुत्तमम्। धन्यं यशस्यमायुष्यं वह्निचौरभयेषु च ॥ १५ ॥ शाकिनीभूतवेतालसर्वव्याधिनिपातके। राजद्वारे महाघोरे संग्रामे रिपुसंकटे ॥ १६ ॥ सभास्थाने श्मशाने च कारागेहारिबन्धने। अशेषभयसंप्राप्तौ सिद्धिलक्ष्मीं जपेन्नरः ॥ १७ ॥ ईश्वरेण कृतं स्तोत्रं प्राणिनां हितकारणम्। स्तुवन्ति ब्राह्मणा नित्यं दारिद्र्यं न च वर्धते ॥ १८ ॥ या श्रीः पद्मवने कदम्बशिखरे राजगृहे कुञ्जरे श्वेते चाश्वयुते वृषे च युगले यज्ञे च यूपस्थिते। शङ्खे देवकुले नरेन्द्रभवने गङ्गातटे गोकुले सा श्रीस्तिष्ठतु सर्वदा मम गृहे भूयात्सदा निश्चला ॥ १९ ॥ इति श्रीब्रह्माण्डपुराणे ईश्वरविष्णुसंवादे दारिद्र्यनाशनं सिद्धिलक्ष्मीस्तोत्रं संपूर्णम् ॥

## ३२०. श्रीस्तवः।

श्रीगणेशाय नमः ॥ स्वस्ति श्रीर्दिशतादशेषजगतां स्वर्गापवर्गस्थितीः स्वर्गं दुर्गतिमापवर्गिकपदं सर्वं च कुर्वन्हरिः। यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलं क्रीडेयं खलु नान्यथाऽस्य रसदा स्यादैकरस्यात्तया ॥ १ ॥ हे श्रीर्देवि समस्तलोकजननि त्वां स्तोतुमीहामहे युक्तां भावय भारतीं प्रगुणय प्रेमप्रधानां धियम्। भक्तिं बन्धय नन्दयाश्रितमिमं दासं जनं तावकं लक्ष्यं लक्ष्मि कटाक्षवीचिविसृतेस्ते स्याम चामी वयम् ॥ २ ॥ स्तोत्रं नाम किमामनन्ति कवयो यद्यन्य-

दीयान्गुणानन्यत्र त्वसतोऽधिरोप्य भणितिः सा तर्हि वन्ध्या त्वयि । सम्यक्सत्यगुणाभिवर्णनमथो ब्रूयुः कथं तादृशी वाग्वाचस्पतिनाप्यशक्यरचना त्वत्सद्गुणार्णोनिधौ ॥ ३ ॥ ये वाचां मनसां च दुर्ग्रहतया ख्याता गुणास्तावकास्तानेव प्रति साम्बुजिह्वमुदिता यन्मामिका भारती । हास्यं तत्तु न मन्महे न हि चकोर्यैकाऽखिलां चन्द्रिकां नालं पातुमिति प्रगृह्य रसनामासीत सत्यां तृषि ॥ ४ ॥ क्षोदीयानपि दुष्टबुद्धिरपि निःस्नेहोऽप्यनीहोऽपि ते कीर्तिं देवि लिहन्नहं न च बिभेम्यज्ञो न जिह्रेमि च । दुष्येत्सा तु न तावता न हि शुना लीढाऽपि भागीरथी दुष्येच्चापि न लज्जते न च बिभेत्यार्तिस्तु शाम्येच्छुनः ॥ ५ ॥ ऐश्वर्यं महदेव वाऽल्पमथवा दृश्येत पुंसां हि यत्तल्लक्ष्म्याः समुदीक्षणात्तव यतः सार्वत्रिकं वर्तते । तेनैतेन न विस्मयेमहि जगन्नाथोऽपि नारायणो धन्यं मन्यत ईक्षणात्तव यतः स्वात्मानमात्मेश्वरः ॥ ६ ॥ ऐश्वर्यं यदशेषपुंसि यदिदं सौन्दर्यलावण्ययो रूपं यच्च हि मङ्गलं किमपि यल्लोके सदित्युच्यते । तत्सर्वं त्वदधीनमेव यदतः श्रीरित्यभेदेन वा यद्वा श्रीमदितीदृशेन वचसा देवि प्रथामश्नुते ॥ ७ ॥ देवि त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायते यद्यप्येवमथापि नैव युवयोः सर्वज्ञता हीयते । यन्नास्त्येव तदज्ञतामनुगुणां सर्वज्ञताया विदुर्व्योमाम्भोजमिदन्तया खलु विदन् भ्रान्तोऽयमित्युच्यते ॥ ८ ॥ लोके वनस्पतिबृहस्पतितारतम्यं यस्याः कटाक्षपरिणाममुदाहरन्ति । सा भारती भगवती तु यदीयदासी तां देवदेवमहिषीं श्रियमाश्रयामः ॥ ९ ॥ यस्याः कटाक्षमृदुवीक्षणदीक्षितेन सद्यः समुल्लसितपल्लवमुल्ललास । विश्वं विपर्ययसमुत्थविपर्ययं त्वां तां देवदेवमहिषीं श्रियमाश्रयामः ॥ १० ॥

इति भविष्यपुराणे श्रीस्तवः संपूर्णः ॥

## ३२१. श्रीलक्ष्म्यष्टोत्तरशतनामस्तोत्रम्।

श्रीगणेशाय नमः ॥ देव्युवाच ॥ देवदेव महादेव त्रिकालज्ञ महेश्वर । करुणाकर देवेश भक्तानुग्रहकारक ॥ १ ॥ अष्टोत्तरशतं लक्ष्म्याः श्रोतुमिच्छामि तत्त्वतः । ईश्वर उवाच ॥ देवि साधु महाभागे महाभाग्यप्रदायकम् । सर्वैश्वर्यकरं पुण्यं सर्वपापप्रणाशनम् ॥ २ ॥ सर्वदारिद्र्यशमनं श्रवणाद्भुक्तिमुक्तिदम् । राजवश्यकरं दिव्यं गुह्याद्गुह्यतमं परम् ॥ ३ ॥ दुर्लभं सर्वदेवानां चतुःषष्टिकलास्पदम् । पद्मादीनां वरान्तानां विधीनां नित्यदायकम् ॥ ४ ॥ समस्तदेवसंसेव्यमणिमाद्यष्टसिद्धिदम् । किमत्र बहुनोक्तेन देवीप्रत्यक्षदायकम् ॥ ५ ॥ तव प्रीत्याद्य वक्ष्यामि समाहितमनाः शृणु । अष्टोत्तरशतस्यास्य महालक्ष्मीस्तु देवता ॥ ६ ॥ क्लींबीजपदमित्युक्तं शक्तिस्तु भुवनेश्वरी । अंगन्यासः करन्यास स इत्यादिः प्रकीर्तितः ॥ ७ ॥ ध्यानम् ॥ वंदे पद्मकरां प्रसन्नवदनां सौभाग्यदां भाग्यदां हस्ताभ्यामभयप्रदां मणिगणैर्नानाविधैर्भूषिताम् । भक्ताभीष्टफलप्रदां हरिहरब्रह्मादिभिः सेवितां पार्श्वे पंकजशंखपद्मनिधिभिर्युक्तां सदा शक्तिभिः ॥ ८ ॥ सरसिजनयने सरोजहस्ते धवलतरांशुकगंधमाल्यशोभे । भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ ९ ॥ प्रकृतिं विकृतिं विद्यां सर्वभूतहितप्रदाम् । श्रद्धां विभूतिं सुरभिं नमामि परमात्मिकाम् ॥ १० ॥ वाचं पद्मालयां पद्मां शुचिं स्वाहां स्वधां सुधाम् । धन्यां हिरण्मयीं लक्ष्मीं नित्यपुष्टां विभावरीम् ॥ ११ ॥ अदितिं च दितिं दीप्तां वसुधां वसुधारिणीम् । नमामि कमलां कान्तां कामाक्षीं क्रोधसंभवाम् ॥ १२ ॥ अनुग्रहपदां बुद्धिमनघां हरिवल्लभाम् । अशोकाममृतां दीप्तां लोकशोकविनाशिनीम् ॥ १३ ॥ नमामि धर्मनिलयां करुणां लोकमातरम् । पद्मप्रियां पद्महस्तां पद्माक्षीं पद्मसुंदरीम् ॥१४॥

पद्मोद्भवां पद्ममुखीं पद्मनाभप्रियां रमाम् । पद्ममालाधरां देवीं पद्मिनीं पद्मगंधिनीम् ॥ १५ ॥ पुण्यगंधां सुप्रसन्नां प्रसादाभिमुखीं प्रभाम् । नमामि चंद्रवचनां चंद्रां चंद्रसहोदरीम् ॥ १६ ॥ चतुर्भुजां चंद्ररूपामिंदिरामिंदुशीतलाम् । आह्लादजननीं पुष्टिं शिवां शिवकरीं सतीम् ॥ १७ ॥ विमलां विश्वजननीं तुष्टिं दारिद्र्यनाशिनीम् । प्रीतिपुष्करिणीं शांतां शुक्लमाल्यांबरां श्रियम् ॥ १८ ॥ भास्करीं बिल्वनिलयां वरारोहां यशस्विनीम् । वसुंधरामुदारांगीं हरिणीं हेममालिनीम् ॥ १९ ॥ धनधान्यकरीं सिद्धिं सदा सौम्यां शुभप्रदाम् । नृपवेश्मगतानंदां वरलक्ष्मीं वसुप्रदाम् ॥ २० ॥ शुभां हिरण्यप्राकारां समुद्रतनयां जयाम् । नमामि मंगलां देवीं विष्णुवक्षःस्थलस्थिताम् ॥ २१ ॥ विष्णुपत्नीं प्रसन्नाक्षीं नारायणसमाश्रिताम् । दारिद्र्यध्वंसिनीं देवीं सर्वोपद्रवहारिणीम् ॥ २२ ॥ नवदुर्गां महाकालीं ब्रह्मविष्णुशिवात्मिकाम् । त्रिकालज्ञानसंपन्नां नमामि भुवनेश्वरीम् ॥ २३ ॥ लक्ष्मीं क्षीरसमुद्रराजतनयां श्रीरंगधामेश्वरीं दासीभूतसमस्तदेववनितां लोकैकदीपांकुराम् । श्रीमन्मंदकटाक्षलब्धविभवब्रह्मेंद्रगंगाधरां त्वां त्रैलोक्यकुटुंबिनीं सरसिजां वंदे मुकुंदप्रियाम् ॥ २४ ॥ मातर्नमामि कमले कमलायताक्षि श्रीविष्णुहृत्कमलवासिनि विश्वमातः । क्षीरोदजे कमलकोमलगर्भगौरि लक्ष्मि प्रसीद सततं नमतां शरण्ये ॥ २५ ॥ त्रिकालं यो जपेद्विद्वान् षण्मासं विजितेंद्रियः । दारिद्र्यध्वंसनं कृत्वा सर्वमाप्नोत्ययत्नतः ॥ २६ ॥ देवीनामसहस्रेषु पुण्यमष्टोत्तरं शतम् । येन श्रियमवाप्नोति कोटिजन्मदरिद्रतः ॥ २७ ॥ भृगुवारे शतं धीमान् पठेद्वत्सरमात्रकम् । अष्टैश्वर्यमवाप्नोति कुबेर इव भूतले ॥ २८ ॥ दारिद्र्यमोचनं नाम स्तोत्रमम्बापरं शतम् । येन श्रियमवाप्नोति कोटिजन्म-

दरिद्रितः ॥ २९ ॥ भुक्त्वा तु विपुलान् भोगानस्याः सायुज्यमाप्नुयात् । प्रातःकाले पठेन्नित्यं सर्वदुःखोपशांतये । पठंस्तु चिंतयेद्देवीं सर्वाभरणभूषिताम् ॥ ३० ॥ इति श्रीलक्ष्म्यष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥

## ३२२. महालक्ष्मीकवचम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीमहालक्ष्मीकवचमन्त्रस्य ब्रह्मा ऋषिः, गायत्री छन्दः, महालक्ष्मीर्देवता, महालक्ष्मीप्रीत्यर्थं जपे विनियोगः ॥ इन्द्र उवाच ॥ समस्तकवचानां तु तेजस्वि कवचोत्तमम् । आत्मरक्षणमारोग्यं सत्यं त्वं ब्रूहि गीष्पते ॥ १ ॥ श्रीगुरुरुवाच ॥ महालक्ष्म्यास्तु कवचं प्रवक्ष्यामि समासतः । चतुर्दशसु लोकेषु रहस्यं ब्रह्मणोदितम् ॥ २ ॥ ब्रह्मोवाच ॥ शिरो मे विष्णुपत्नी च ललाटममृतोद्भवा । चक्षुषी सुविशालाक्षी श्रवणे सागराम्बुजा ॥ ३ ॥ घ्राणं पातु वरारोहा जिह्वामाम्नायरूपिणी । मुखं पातु महालक्ष्मीः कण्ठं वैकुण्ठवासिनी ॥ ४ ॥ स्कन्धौ मे जानकी पातु भुजौ भार्गवनन्दिनी । बाहू द्वौ द्रविणी पातु करौ हरिवराङ्गना ॥ ५ ॥ वक्षः पातु च श्रीर्देवी हृदयं हरिसुन्दरी । कुक्षिं च वैष्णवी पातु नाभिं भुवनमातृका ॥ ६ ॥ कटिं च पातु वाराही सक्थिनी देवदेवता । ऊरू नारायणी पातु जानुनी चन्द्रसोदरी ॥ ७ ॥ इन्दिरा पातु जंघे मे पादौ भक्तनमस्कृता । नखान् तेजस्विनी पातु सर्वाङ्गं करुणामयी ॥ ८ ॥ ब्रह्मणा लोकरक्षार्थं निर्मितं कवचं श्रियः । ये पठन्ति महात्मानस्ते च धन्या जगत्त्रये ॥ ९ ॥ कवचेनावृताङ्गानां जनानां जयदा सदा । मातेव सर्वसुखदा भव त्वममरेश्वरी ॥ १० ॥ भूयः सिद्धिमवाप्नोति पूर्वोक्तं ब्रह्मणा स्वयम् । लक्ष्मीर्हरिप्रिया पद्मा एतन्नामत्रयं स्मरन् ॥ ११ ॥ नामत्रयमिदं

जप्त्वा स याति परमां श्रियम् । यः पठेत्स च धर्मात्मा सर्वान्कामानवाप्नुयात् ॥ १२ ॥ इति श्रीब्रह्मपुराणे इन्द्रोपदिष्टं महालक्ष्मीकवचं संपूर्णम् ॥

## ३२३. श्रीस्तुतिः ।

श्रीगणेशाय नमः ॥ मानातीतप्रथितविभवां मङ्गलं मङ्गलानां वक्षःपीठं मधुविजयिनो भूषयन्तीं स्वकान्त्या । प्रत्यक्षानुश्रविकमहिमप्रार्थिनीनां प्रजानां श्रेयोमूर्तिं श्रियमशरणस्त्वां शरण्यां प्रपद्ये ॥ १ ॥ आविर्भावः कलशजलधावध्वरे वाऽपि यस्याः स्थानं यस्याः सरसिजवनं विष्णुवक्षःस्थलं वा । भूमा यस्या भुवनमखिलं देवि दिव्यं पदं वा स्तोकप्रज्ञैरनवधिगुणा स्तूयसे सा कथं त्वम् ॥ २ ॥ स्तोतव्यत्वं दिशति भवती देहिभिः स्तूयमाना तामेव त्वामनितरगतिः स्तोतुमाशंसमानः । सिद्धारम्भः सकलभुवनश्लाघनीयो भवेयं सेवापेक्षा तव चरणयोः श्रेयसे कस्य न स्यात् ॥ ३ ॥ यत्संकल्पाद्भवति कमले यत्र देहिन्यमीषां जन्मस्थेमप्रलयरचना जङ्गमाजङ्गमानाम् । तत्कल्याणं किमपि यमिनामेकलक्ष्यं समाधौ पूर्णं तेजः स्फुरति भवतीपादलाक्षारसाङ्कम् ॥ ४ ॥ निष्प्रत्यूहप्रणयघटितं देवि नित्यानपायं विष्णुस्त्वं चेत्यनवधिगुणं द्वन्द्वमन्योन्यलक्ष्यम् । शेषश्चित्तं विमलमनसां मौलयश्च श्रुतीनां संपद्यन्ते विहरणविधौ यस्य शय्याविशेषाः ॥ ५ ॥ उद्देश्यत्वं जननि भजतोरुज्झितोपाधिगन्धं प्रत्यग्रूपे हविषि युवयोरेकशेषित्वयोगात् । पद्मे पत्युस्तव च निगमैर्नित्यमन्विष्यमाणो नावच्छेदं भजति महिमा नर्तयन् मानसं नः ॥ ६ ॥ पश्यन्तीषु श्रुतिषु परितः सूरिवृन्देन सार्धं मध्येकृत्य त्रिगुणफलकं निर्मितस्थानभेदम् । विश्वाधीशप्रणयिनि सदा विभ्रमद्यूतवृत्तौ ब्रह्मेशाद्या दधति युवयोरक्षशारप्रचारम् ॥ ७ ॥ अस्येशाना त्वमसि

जगतः संश्रयन्ती मुकुन्दं लक्ष्मीः पद्मा जलधितनया विष्णुपत्नी-न्दिरेति । यन्नामानि श्रुतिपरिपणान्येवमावर्तयन्तो नावर्तन्ते दुरितपवनप्रेरिते जन्मचक्रे ॥ ८ ॥ त्वामेवाहुः कतिचिदपरे त्वत्प्रियं लोकनाथं किं तैरन्तःकलहमलिनैः किंचिदुत्तीर्य मग्नैः । त्वत्संप्रीत्यै विहरति हरौ संमुखीनां श्रुतीनां भावारूढौ भगवति युवां दम्पती दैवतं नः ॥ ९ ॥ आपन्नार्तिप्रशमनविधौ बद्धदीक्षस्य विष्णोराच-ख्युस्त्वां प्रियसहचरीमैकमत्योपपन्नाम् । प्रादुर्भावैरपि समतनुः प्राध्वमन्वीयसे त्वं दूरोत्क्षिप्तैरिव मधुरता दुग्धराशेस्तरङ्गैः ॥ १० ॥ धत्ते शोभां हरिमरकते तावकी मूर्तिराद्या तन्वी तुङ्गस्तनभरनता तप्तजाम्बूनदाभा । यस्यां गच्छन्त्युदयविलयैर्नित्यमानन्दसिन्धाविच्छावेगोल्लसितलहरीविभ्रमं व्यक्तयस्ते ॥ ११ ॥ आसंसारं वित-तमखिलं वाङ्मयं यद्विभूतिर्यद्भ्रूभङ्गात्कुसुमधनुषः किंकरो मेरुधन्वा । यस्यां नित्यं नयनशतकैरेकलक्ष्यो महेन्द्रः पद्मे तासां परिणतिरसौ भावलेशैस्त्वदीयैः ॥ १२ ॥ अग्रे भर्तुः सरसिजमये भद्रपीठे निष-ण्णामम्भोराशेरधिगतसुधासंप्लवादुत्थितां त्वाम् । पुष्पासारस्थगित-भुवनैः पुष्कलावर्तकाद्यैः क्लृप्तारम्भाः कनककलशैरभ्यषिञ्चन्गजेन्द्राः ॥ १३ ॥ आलोक्य त्वाममृतसहजे विष्णुवक्षःस्थलस्थां शापा-क्रान्ताः शरणमगमन्सावरोधाः सुरेन्द्राः । लब्ध्वा भूयस्त्रिभुवनमिदं लक्षितं त्वत्कटाक्षैः सर्वाकारस्थिरसमुदयां संपदं निर्विशन्ति ॥ १४ ॥ आर्तत्राणव्रतिभिरमृतासारनीलाम्बुवाहैरम्भोजानामुषसि मिषताम-न्तरङ्गैरपाङ्गैः । यस्यां यस्यां दिशि विहरते देवि दृष्टिस्त्वदीया तस्यां तस्यामहमहमिकां तन्वते संपदोघाः ॥ १५ ॥ योगारम्भत्वरित-मनसो युष्मदैकान्त्ययुक्तं धर्मं प्राप्तुं प्रथममिह ये धारयन्तेऽधना याम् ॥ तेषां भूमेर्धनपतिगृहादम्बुधेर्वा धारा निर्यान्त्यधिकमधिकं वाञ्छितानां

वसूनाम् ॥ १६ ॥ श्रेयस्कामा यमलनिलये चित्रमाम्नायवाचां चूडापीडं तव पदयुगं चेतसा धारयन्तः । छत्रच्छायासुभगशिरसश्चामरस्मेरपार्श्वाः श्लाघाशब्दश्रवणमुदिताः स्रग्विणः संचरन्ति ॥ १७ ॥ ऊरीकर्तुं कुशलमखिलं जेतुमादीनरातीन् दूरीकर्तुं दुरितनिवहं त्यक्तुमाद्यामविद्याम् । अम्ब स्तम्बावधिकजननग्रामसीमान्तरेखामालम्बन्ते विमलमनसो विष्णुकान्ते दया ते ॥ १८ ॥ जाताकांक्षा जननि युवयोरेकसेवाधिकारे मायालीढं विभवमखिलं मन्यमानास्तृणाय । प्रीत्यै विष्णोस्तव च कृतिनः प्रीतिमन्तो भजन्ते वेलाभङ्गप्रशमनफलं वैदिकं धर्मसेतुम् ॥ १९ ॥ सेवे देवि त्रिदशमहिलामौलिमालार्चितं ते सिद्धिक्षेत्रं शमितविपदां संपदां पादपद्मम् । यस्मिन्नीषन्नमितशिरसो यापयित्वा शरीरं वर्तिष्यन्ते वितमसि पदे वासुदेवस्य धन्याः ॥ २० ॥ सानुप्रासप्रकटितदयैः सान्द्रवात्सल्यदिग्धैरम्ब स्निग्धैरमृतलहरीलब्धसब्रह्मचर्यैः । घर्मे तापत्रयविरचिते गाढतप्तं क्षणं मामाकिंचन्यग्लपितमनघैराद्रियेथाः कटाक्षैः ॥ २१ ॥ संपद्यन्ते भवभयतमीभानवस्त्वत्प्रसादाद्भावाः सर्वे भगवति हरौ भक्तिमुद्वेलयन्तः । याचे किं त्वामहमिह यतः शीतलोदारशीला भूयो भूयो दिशसि महतां मङ्गलानां प्रबन्धान् ॥ २२ ॥ माता देवि त्वमसि भगवान्वासुदेवः पिता मे जातः सोऽहं जननि युवयोरेकलक्ष्यं दयायाः । दत्तो युष्मत्परिजनतया देशिकैरप्यतस्त्वं किं ते भूयः प्रियमिति किल स्मेरवक्त्रा विभासि ॥ २३ ॥ कल्याणानामविकलनिधिः काऽपि कारुण्यसीमा नित्यामोदा निगमवचसां मौलिमन्दारमाला । संपद्दिव्या मधुविजयिनः संनिधत्तां सदा मे सैषा देवी सकलभुवनप्रार्थनाकामधेनुः ॥ २४ ॥ उपचितगुरुभक्तेरुत्थितं वेङ्कटेशात्कलिकलुषनिवृत्त्यै कल्प्यमानं प्रजानाम् ।

सरसिजनिलयायाः स्तोत्रमेतत्पठन्तः सकलकुशलसीमा सार्वभौमा भवन्ति ॥ २५ ॥ इति श्रीवेङ्कटेशार्यविरचिता श्रीस्तुतिः संपूर्णा ॥

## ३२४. लक्ष्मीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अगस्त्य उवाच ॥ पद्मे पद्मपलाशाक्षि जय त्वं श्रीपतिप्रिये । जगन्मातर्महालक्ष्मीः संसारार्णवतारिणि ॥ १ ॥ महालक्ष्मि नमस्तुभ्यं नमस्तुभ्यं सुरेश्वरि । हरिप्रिये नमस्तुभ्यं नमस्तुभ्यं दयानिधे ॥ २ ॥ पद्मालये नमस्तुभ्यं नमस्तुभ्यं शिवप्रिये । सर्वभूतहितार्थाय वसुवृष्टिं सदा कुरु ॥ ३ ॥ जगन्मातर्नमस्तुभ्यं नमस्तुभ्यं कृपावति । दयावति नमस्तुभ्यं विश्वेश्वरि नमो नमः ॥ ४ ॥ नमः क्षीराब्धितनये नमस्त्रैलोक्यधारिणि । शशिवक्त्रे नमस्तुभ्यं रक्ष मां शरणागतम् ॥ ५ ॥ रक्ष त्वं देवि देवेशि देवदेवेशवल्लभे । दारिद्र्यात्त्राहि मां लक्ष्मि कृपां कुरु ममोपरि ॥ ६ ॥ नमस्त्रैलोक्यजननि नमस्त्रैलोक्यपावनि । ब्रह्मादयो नमन्ति त्वां जगदानन्ददायिनि ॥ ७ ॥ विष्णुप्रिये नमस्तुभ्यं नमस्तुभ्यं जगद्धिते । आर्तिहन्त्रि नमस्तुभ्यं समृद्धिं कुरु मे रमे ॥ ८ ॥ पद्मवासे नमस्तुभ्यं चपलायै नमो नमः । चञ्चलायै नमस्तुभ्यं ललितायै नमो नमः ॥ ९ ॥ नमः प्रद्युम्नमातस्ते पाहि मां त्वां नमाम्यहम् । परिपालय मां मातः सर्वथा शरणागतम् ॥ १० ॥ शरणं त्वां प्रपन्नोऽस्मि कमले कमलानने । त्राहि त्राहि महालक्ष्मि परित्राणपरायणे ॥ ११ ॥ पाण्डित्यं शोभते नैव न शोभन्ते गुणा नरे । शीलं चापि न शोभेत महालक्ष्मि त्वया विना ॥ १२ ॥ तावद्विराजते रूपं तावच्छीलं विराजते । तावद्गुणा नराणां च यावल्लक्ष्मीः प्रसीदति ॥ १३ ॥ लक्ष्मि त्वयालंकृतमानवा ये पापैर्विमुक्ता नृपलोकमान्याः । गुणैर्विहीना गुणिनो भवन्ति विशीलिनः

शीलवतां वरिष्ठाः ॥ १४ ॥ लक्ष्मीर्भूषयते रूपं लक्ष्मीर्भूषयते कुलम् । लक्ष्मीर्भूषयते विद्यां सर्वाल्लक्ष्मीर्विशिष्यते ॥ १५ ॥ लक्ष्मि त्वद्गुणकीर्तने कमलभूर्यायादलं जिह्मतां रुद्राद्या रविचन्द्रदेवपतयो वक्तुं च नैव क्षमाः । अस्माभिस्तव रूपलक्षणगुणा वक्तुं कथं पार्यते मातर्मां परिपाहि विश्वजननि कृत्वा ममेष्टं ध्रुवम् ॥ १६ ॥ दीनार्तिभीतं क्षुधया प्रपीडितं वासोविहीनं तव पार्श्वमागतम् । कृपां विधत्से मम लक्ष्मि सत्वरं धनप्रदे मां धननायकं कुरु ॥ १७ ॥ मां विलोक्य जननी हरिप्रिये निर्धनं तव समीपमागतम् । देहि मे झटिति लक्ष्मि कराग्रं वस्त्रकाञ्चनवरान्नमद्भुतम् ॥ १८ ॥ त्वमेव जननी लक्ष्मीः पिता लक्ष्मीस्त्वमेव च । भ्राता त्वं च सखा लक्ष्मीर्विद्या लक्ष्मीस्त्वमेव च ॥ १९ ॥ त्राहि त्राहि महालक्ष्मि त्राहि त्राहि सुरेश्वरि । त्राहि त्राहि जगन्मातर्दारिद्र्यात्त्राहि वेगतः ॥ २० ॥ नमस्तुभ्यं जगद्धात्रि विधात्र्यै ते नमो नमः । धर्मध्वजे नमस्तुभ्यं नमः संपत्तिदायिनि ॥ २१ ॥ दारिद्र्यार्णवमग्नोऽहं निमग्नोऽहं रसातले । मज्जमानं करं धृत्वाऽप्युद्धर त्वं रमे द्रुतम् ॥ २२ ॥ किं लक्ष्मि बहुनोक्तेन जल्पितं च पुनः पुनः । अन्यन्मे शरणं नास्ति सत्यं सत्यं हरिप्रिये ॥ २३ ॥ एतच्छ्रुत्वाऽगस्त्यवाक्यं हर्षपूर्णा हरिप्रिया । उवाच मधुरां वाणीं तुष्टाऽहं तव सुव्रत ॥ २४ ॥ श्रीरुवाच ॥ यत्त्वयोक्तमिदं स्तोत्रं ये पठिष्यन्ति मानवाः । ये च शृण्वन्ति भक्त्याऽहं तेषां वशवर्तिनी ॥ २५ ॥ नित्यं पठन्ति ये भक्त्या तेषां दैन्यं विनश्यति । ऋणं नश्यति शीघ्रं च वियोगो नैव जायते ॥ २६ ॥ यः पठेत्प्रातरुत्थाय श्रद्धाभक्तिसमन्वितः । गृहे तस्य सदा तिष्ठेन्नित्यं श्रीः पतिना सह ॥ २७ ॥ सुखसौभाग्यसंपन्नो मनुष्यो बुद्धिमान्भवेत् । पुत्रवान् पशुमान् श्रेष्ठो भुक्त्वा भोगांश्च मानवः ॥ २८ ॥ कीर्तिमांश्च महाभाग्यो नारायणपदं

लभेत् । अपुत्राः पुत्रिणः सन्ति पुत्रिणः सन्ति पौत्रिणः ॥ २९ ॥ निर्धनाः सधनाः सन्ति जीवन्ति शरदां शतम् । इदं स्तोत्रं महापुण्यं महालक्ष्म्याः प्रकीर्तितम् । विष्णुप्रसादजननं चतुर्वर्गफलप्रदम् ॥ ३० ॥ राजद्वारे जयश्चैव शत्रोश्चैव पराजयः । भूतप्रेतपिशाचानां व्याघ्राणां न भयं तथा ॥ ३१ ॥ न शस्त्रानलतोयौघाद्भयं तस्य प्रजायते । दुर्वृत्तानां च पापानां बहुहानिकरं परम् ॥ ३२ ॥ मन्दुराकरिशालासु गवां गोष्ठे समाहितः । पठेत्तद्दोषशान्त्यर्थं महापातकनाशनम् ॥ ३३ ॥ सर्वसौख्यकरं नृणामायुरारोग्यदं तथा । अगस्त्यमुनिना प्रोक्तं प्रजानां हितकाम्यया ॥ ३४ ॥ इत्यगस्त्यमुनिविरचितं लक्ष्मीस्तोत्रं संपूर्णम् ॥

## ३२५. लक्ष्मीहृदयम् ।

श्रीगणेशाय नमः ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीलक्ष्मीनारायणप्रसादसिद्ध्या ममाभीष्टकामनासिद्ध्यर्थं अद्यप्रभृत्यमुकदिनपर्यंतं संकलीकरणरीत्या, संपुटीकरणरीत्या, पुरश्चरणरीत्या, सकृदावर्तनपाठरीत्या वा लक्ष्मीनारायणहृदयजपाख्यं कर्म करिष्ये इति संकल्प्य न्यासादि कुर्यात् ॥ अस्य श्रीमहालक्ष्मीहृदयमालामंत्रस्य, भार्गव ऋषिः, आद्यादिश्रीमहालक्ष्मीर्देवता, अनुष्टुबादिनानाछंदांसि, श्रीर्बीजम्, ह्रीं शक्तिः, ऐं कीलकम्, श्रीमहालक्ष्मीप्रसादसिद्ध्यर्थं जपे विनियोगः ॥ ॥ अथ न्यासः ॥ ॐ भार्गवऋषये नमः शिरसि ॥ अनुष्टुबादिनानाछंदोभ्यो नमो मुखे ॥ आद्यादिश्रीमहालक्ष्म्यै देवतायै नमो हृदये ॥ श्रीं बीजाय नमो गुह्ये ॥ ह्रीं शक्तये नमः पादयोः ॥ ऐं कीलकाय नमः सर्वांगे ॥ ॥ अथ करन्यासः ॥ ॐ श्रीं अंगुष्ठाभ्यां नमः ॥ ॐ ह्रीं तर्जनीभ्यां नमः ॥ ॐ ऐं मध्यमाभ्यां नमः ॥ श्रीं अनामिकाभ्यां नमः ॥ ॐ ह्रीं कनिष्ठिकाभ्यां नमः ॥ ॐ ऐं करतलकरपृष्ठाभ्यां नमः ॥ ॐ हृदयाय नमः ॥ ॐ शिरसे स्वाहा ॥ ॐ ऐं

शिखायै वषट् ॥ ॐ श्रीं कवचाय हुम् ॥ ॐ ह्रीं नेत्रत्रयाय वौषट् ॥ ॐ ऐं अस्त्राय फट् ॥ ॐ श्रीं ह्रीं ऐं इति दिग्बन्धः ॥ अथ ध्यानम् ॥ हस्तद्वयेन कमले धारयंतीं स्वलीलया ॥ हारनूपुरसंयुक्तां लक्ष्मीं देवीं विचिंतये ॥ इति मनसि ध्यात्वा मानसोपचारैः संपूजयेत् ॥ शंखचक्रगदाहस्ते शुभ्रवर्णे सुवासिनि ॥ मम देहि वरं लक्ष्मीः सर्वसिद्धिप्रदायिनि ॥ इति संप्रार्थ्य ॐश्रीं ह्रीं ऐं महालक्ष्म्यै कमलधारिण्यै सिंहवाहिन्यै स्वाहा ॥ इति मंत्रं जप्त्वा पुनः पूर्ववद्धृदयादिषडंगन्यासं कृत्वा स्तोत्रं पठेत् ॥ वंदे लक्ष्मीं परशिवमयीं शुद्धजांबूनदाभां तेजोरूपां कनकवसनां सर्वभूषोज्वलांगीम् ॥ बीजापूरं कनककलशं हेमपद्मं दधानामाद्यां शक्तिं सकलजननीं विष्णुवामांकसंस्थाम् ॥ १ ॥ श्रीमत्सौभाग्यजननीं स्तौमि लक्ष्मीं सनातनीम् ॥ सर्वकामफलावाप्तिसाधनैकसुखावहाम् ॥ २ ॥ स्मरामि नित्यं देवेशि त्वया प्रेरितमानसः ॥ त्वदाज्ञां शिरसा धृत्वा भजामि परमेश्वरीम् ॥ ३ ॥ समस्तसंपत्सुखदां महाश्रियं समस्तसौभाग्यकरीं महाश्रियम् ॥ समस्तकल्याणकरीं महाश्रियं भजाम्यहं ज्ञानकरीं महाश्रियम् ॥ ४ ॥ विज्ञानसंपत्सुखदां सनातनीं विचित्रवाग्भूतिकरीं मनोहराम् ॥ अनंतसंमोदसुखप्रदायिनीं नमाम्यहं भूतिकरीं हरिप्रियाम् ॥ ५ ॥ समस्तभूतांतरसंस्थिता त्वं समस्तभोक्त्रीश्वरि विश्वरूपे ॥ तन्नास्ति यत्त्वद्व्यतिरिक्तवस्तु त्वत्पादपद्मं प्रणमाम्यहं श्रीः ॥ ६ ॥ दारिद्र्यदुःखौघतमोपहंत्रि त्वत्पादपद्मं मयि संनिधत्स्व ॥ दीनार्तिविच्छेदनहेतुभूतैः कृपाकटाक्षैरभिषिंच मां श्रीः ॥ ७ ॥ अम्ब प्रसीद करुणासुधयार्द्रदृष्ट्या मां त्वत्कृपाद्रविणगेहमिमं कुरुष्व ॥ आलोकय प्रणतहृद्गतशोकहंत्रि त्वत्पादपद्मयुगलं प्रणमाम्यहं श्रीः ॥८॥ शान्त्यै नमोऽस्तु शरणागतरक्षणायै कान्त्यै नमोऽस्तु कमनीयगुणाश्रयायै ॥ क्षान्त्यै नमोऽस्तु दुरितक्षयकारणायै धात्र्यै नमोऽस्तु धनधान्यसमृद्धिदायै ॥ ९ ॥ शक्त्यै नमोऽस्तु शशिशेखरसंस्तुतायै

रत्यै नमोऽस्तु रजनीकरसोदरायै ॥ भक्त्यै नमोऽस्तु भवसागरतारिकायै मत्यै नमोऽस्तु मधुसूदनवल्लभायै ॥ १० ॥ लक्ष्म्यै नमोऽस्तु शुभलक्षणलक्षितायै सिद्ध्यै नमोऽस्तु शिवसिद्धसुपूजितायै ॥ धृत्यै नमोऽस्त्वमितदुर्गतिभंजनायै गत्यै नमोऽस्तु वरसद्गतिदायिकायै ॥ ११ ॥ देव्यै नमोऽस्तु दिवि देवगणार्चितायै भूत्यै नमोऽस्तु भुवनार्तिविनाशनायै ॥ दात्र्यै नमोऽस्तु धरणीधरवल्लभायै पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै ॥ १२ ॥ सुतीव्रदारिद्र्यविदुःखहंत्र्यै नमोऽस्तु ते सर्वभयापहंत्र्यै ॥ श्रीविष्णुवक्षःस्थलसंस्थितायै नमो नमः सर्वविभूतिदायै ॥ १३ ॥ जयतु जयतु लक्ष्मीर्लक्षणालंकृतांगी जयतु जयतु पद्मा पद्मसद्माभिवंद्या ॥ जयतु जयतु विद्या विष्णुवामांकसंस्था जयतु जयतु सम्यक् सर्वसंपत्करी श्रीः ॥ १४ ॥ जयतु जयतु देवी देवसंघाभिपूज्या जयतु जयतु भद्रा भार्गवी भाग्यरूपा ॥ जयतु जयतु नित्या निर्मलज्ञानवेद्या जयतु जयतु सत्या सर्वभूतान्तरस्था ॥ १५ ॥ जयतु जयतु रम्या रत्नगर्भान्तरस्था जयतु जयतु शुद्धा शुद्धजांबूनदाभा ॥ जयतु जयतु कांता कांतिमद्भासितांगी जयतु जयतु शांता शीघ्रमागच्छ सौम्ये ॥ १६ ॥ यस्याः कलायाः कमलोद्भवाद्या रुद्राश्च शक्रप्रमुखाश्च देवाः ॥ जीवन्ति सर्वा अपि शक्तयस्ताः प्रभुत्वमाप्ताः परमायुषस्ते ॥ १७ ॥ लिलेख निटिले विधिर्मम लिपिं विसृज्यापरं त्वया विलिखितव्यमेतदिति तत्फलप्राप्तये ॥ तदंतरफले स्फुटं कमलवासिनि श्रीरिमां समर्पय स्वमुद्रिकां सकलभाग्यसंसूचिकाम् ॥ १८ ॥ कलया ते यथा देवि जीवन्ति सचराचराः ॥ तथा संपत्करे लक्ष्मीः सर्वदा संप्रसीद मे ॥ १९ ॥ यथा विष्णुर्ध्रुवे नित्यं स्वकलां संन्यवेशयत् ॥ तथैव स्वकलां लक्ष्मि मयि सम्यक् समर्पय ॥ २० ॥ सर्वसौख्यप्रदे देवि भक्तानामभयप्रदे ॥ अचलां कुरु यत्नेन कलां मयि

निवेशिताम् ॥ २१ ॥ मुदास्तां मद्भाले परमपदलक्ष्मीः स्फुटकला सदा वैकुंठश्रीर्निवसतु कला मे नयनयोः ॥ वसेत्सत्ये लोके मम वचसि लक्ष्मीर्वरकला श्रियः श्वेतद्वीपे निवसतु कला मेऽस्तु करयोः ॥ २२ ॥ तावन्नित्यं ममांगेषु क्षीराब्धौ श्रीकला वसेत् ॥ सूर्याचन्द्रमसौ यावद्यावल्लक्ष्मीपतिः श्रिया ॥ २३ ॥ सर्वमंगलसंपूर्णा सर्वैश्वर्यसमन्विता ॥ आद्यादिश्रीर्महालक्ष्मीस्त्वत्कला मयि तिष्ठतु ॥ २४ ॥ अज्ञानतिमिरं हंतुं शुद्धज्ञानप्रकाशिका ॥ सर्वैश्वर्यप्रदा मेऽस्तु त्वत्कला मयि संस्थिता ॥ २५ ॥ अलक्ष्मीं हरतु क्षिप्रं तमः सूर्यप्रभा यथा ॥ वितनोतु मम श्रेयस्त्वत्कला मयि संस्थिता ॥ २६ ॥ ऐश्वर्यमंगलोत्पत्तिस्त्वत्कलायां निधीयते ॥ मयि तस्मात्कृतार्थोऽस्मि पात्रमस्मि स्थितेस्तव ॥ २७ ॥ भवदावेशभाग्यार्हो भाग्यवानस्मि भार्गवि ॥ त्वत्प्रसादात्पवित्रोऽहं लोकमातर्नमोऽस्तु ते ॥ २८ ॥ पुनासि मां त्वं कलयैव यस्मादतः समागच्छ ममाग्रतस्त्वम् ॥ परं पदं श्रीर्भव सुप्रसन्ना मय्यच्युतेन प्रविशादिलक्ष्मि ॥ २९ ॥ श्रीवैकुंठस्थिते लक्ष्मि समागच्छ ममाग्रतः ॥ नारायणेन सह मां कृपादृष्ट्याऽवलोकय ॥ ३० ॥ सत्यलोकस्थिते लक्ष्मि त्वं ममागच्छ संनिधिम् ॥ वासुदेवेन सहिता प्रसीद वरदा भव ॥ ३१ ॥ श्वेतद्वीपस्थिते लक्ष्मि शीघ्रमागच्छ सुव्रते ॥ विष्णुना सहिते देवि जगन्मातः प्रसीद मे ॥ ३२ ॥ क्षीरांबुधिस्थिते लक्ष्मि समागच्छ समाधवे ॥ त्वत्कृपादृष्टिसुधया सततं मां विलोकय ॥ ३३ ॥ रत्नगर्भस्थिते लक्ष्मि परिपूर्णहिरण्मयि ॥ समागच्छ समागच्छ स्थित्वाशु पुरतो मम ॥ ३४ ॥ स्थिरा भव महालक्ष्मि निश्चला भव निर्मले ॥ प्रसन्ने कमले देवि प्रसन्नहृदया भव ॥ ३५ ॥ श्रीधरे श्रीमहाभूते त्वदंतःस्थं महानिधिम् ॥ शीघ्रमुद्धृत्य पुरतः प्रदर्शय समर्पय ॥ ३६ ॥ वसुंधरे श्रीवसुधे

वसुदोग्ध्रि कृपां मयि ॥ त्वत्कुक्षिगतसर्वस्वं शीघ्रं मे संप्रदर्शय ॥ ३७ ॥ विष्णुप्रिये रत्नगर्भे समस्तफलदे शिवे ॥ त्वद्गर्भगतहेमादीन् संप्रदर्शय दर्शय ॥ ३८ ॥ रसातलगते लक्ष्मि शीघ्रमागच्छ मे पुरः ॥ न जाने परमं रूपं मातर्मे संप्रदर्शय ॥ ३९ ॥ आविर्भव मनोवेगाच्छीघ्रमागच्छ मे पुरः ॥ मा वत्स भैरिहेत्युक्त्वा कामं गौरिव रक्ष माम् ॥ ४० ॥ देवि शीघ्रं समागच्छ धरणीगर्भसंस्थिते ॥ मातस्त्वद्भृत्यभृत्योऽहं मृगये त्वां कुतूहलात् ॥ ४१ ॥ उत्तिष्ठ जागृहि त्वं मे समुत्तिष्ठ सुजागृहि ॥ अक्षयान् हेमकलशान् सुवर्णेन सुपूरितान् ॥ ४२ ॥ निक्षेपान्मे समाकृष्य समुद्धृत्य ममाग्रतः ॥ समुन्नतानना भूत्वा समाधेहि धरांतरात् ॥ ४३ ॥ मत्संनिधिं समागच्छ मदाहितकृपारसात् ॥ प्रसीद श्रेयसां दोग्ध्रि लक्ष्मि मे नयनाग्रतः ॥ ४४ ॥ अत्रोपविश लक्ष्मि त्वं स्थिरा भव हिरण्मयि ॥ सुस्थिरा भव संप्रीत्या प्रसीद वरदा भव ॥ ४५ ॥ आनीय त्वं तथा देवि निधीन्मे संप्रदर्शय ॥ अद्य क्षणेन सहसा दत्त्वा संरक्ष मां सदा ॥ ४६ ॥ मयि तिष्ठ तथा नित्यं यथेन्द्रादिषु तिष्ठसि ॥ अभयं कुरु मे देवि महालक्ष्मि नमोऽस्तु ते ॥ ४७ ॥ समागच्छ महालक्ष्मि शुद्धजांबूनदप्रभे ॥ प्रसीद पुरतः स्थित्वा प्रणतं मां विलोकय ॥ ४८ ॥ लक्ष्मीर्भुवं गता भासि यत्र यत्र हिरण्मयि । तत्र तत्र स्थिता त्वं मे तत्र रूपं प्रदर्शय ॥ ४९ ॥ क्रीडसे बहुधा भूमौ परिपूर्णा कृपा मयि । मम मूर्ध्नि स्थिते हस्तमविलम्बितमर्पय ॥ ५० ॥ फलद्भाग्योदये लक्ष्मि समस्तपुरवासिनी । प्रसीद मे महालक्ष्मि परिपूर्णमनोरथे ॥ ५१ ॥ अयोध्यादिषु सर्वेषु नगरेषु समाश्रिते । विभवैर्विविधैर्युक्ते समागच्छ बलान्विते ॥ ५२ ॥ समागच्छ समागच्छ ममाग्रे भव सुस्थिरा ॥ करुणारसनिष्यन्दनेत्रद्वयविशालिनि ॥ ५३ ॥

संविधत्स्व महालक्ष्मि त्वं पाणिं मम मस्तके । करुणासुधया मां त्वमभिषिञ्चय स्थिरं कुरु ॥ ५४ ॥ सर्वराजगृहे लक्ष्मि समागच्छ बलान्विते । स्थित्वाऽऽशु पुरतो मेऽद्य प्रसादेनाभयं कुरु ॥ ५५ ॥ सादरं मस्तके हस्तं मम त्वं कृपयाऽर्पय । सर्वराजगृहे लक्ष्मीस्त्वत्कला मयि तिष्ठतु ॥ ५६ ॥ आद्यादिश्रीर्महालक्ष्मीर्विष्णुवामाङ्कसंस्थिते । प्रत्यक्षं कुरु मे रूपं रक्ष मां शरणागतम् ॥ ५७ ॥ प्रसीद मे महालक्ष्मि सुप्रसीद महाशिवे । अचला भव संप्रीत्या सुस्थिरा भव मद्गृहे ॥ ५८ ॥ यावत्तिष्ठन्ति वेदाश्च यावत्त्वन्नाम तिष्ठति । यावद्विष्णुश्च यावत्त्वं तावत्कुरु कृपां मयि ॥ ५९ ॥ चान्द्री कला यथा शुक्ले वर्धते सा दिने दिने । तथा दया ते मय्येव वर्धतामभिवर्धताम् ॥ ६० ॥ यथा वैकुण्ठनगरे यथा वै क्षीरसागरे । तथा मद्भवने तिष्ठ स्थिरं श्रीविष्णुना सह ॥ ६१ ॥ योगिनां हृदये नित्यं यथा तिष्ठसि विष्णुना । तथा मद्भवने तिष्ठ स्थिरं श्रीविष्णुना सह ॥ ६२ ॥ नारायणस्य हृदये भवती यथाऽऽस्ते नारायणोऽपि तव हृत्कमले यथाऽऽस्ते । नारायणस्त्वमपि नित्यमुभौ तथैव तौ तिष्ठतां हृदि ममापि दयावती श्रीः ॥ ६३ ॥ विज्ञानवृद्धिं हृदये कुरु श्रीः सौभाग्यवृद्धिं कुरु मे गृहे श्रीः । दयासुवृद्धिं कुरुतां मयि श्रीः सुवर्णवृद्धिं कुरु मे गृहे श्रीः ॥ ६४ ॥ न मां त्यजेथाः श्रितकल्पवल्लि सद्भक्तिचिन्तामणिकामधेनो । विश्वस्य मातर्भव सुप्रसन्ना गृहे कलत्रेषु च पुत्रवर्गे ॥ ६५ ॥ आद्यादिमाये त्वमजांडबीजं त्वमेव साकारनिराकृतिस्त्वम् ॥ त्वया धृताश्चाब्जभवांडसंघाश्चित्रं चरित्रं तव देवि विष्णोः ॥ ६६ ॥ ब्रह्मरुद्रादयो देवा वेदाश्चापि न शक्नुयुः ॥ महिमानं तव स्तोतुं मंदोऽहं शक्नुयां कथम् ॥ ६७ ॥ अंब त्वद्वत्सवाक्यानि सूक्तासूक्तानि यानि च ॥ तानि स्वीकुरु

सर्वज्ञे दयालुत्वेन सादरम् ॥ ६८ ॥ भवतीं शरणं गत्वा कृतार्थाः स्युः पुरातनाः ॥ इति संचिंत्य मनसा त्वामहं शरणं व्रजे ॥ ६९ ॥ अनंता नित्यसुखिनस्त्वद्भक्तास्त्वत्परायणाः ॥ इति वेदप्रमाणाद्धि देवि त्वां शरणं व्रजे ॥ ७० ॥ तव प्रतिज्ञा मद्भक्ता न नश्यंतीत्यपि क्वचित् ॥ इति संचिंत्य संचिंत्य प्राणान् संधारयास्यहम् ॥ ७१ ॥ त्वदधीनस्त्वहं मातस्त्वत्कृपा मयि विद्यते ॥ यावत्संपूर्णकामः स्यां तावद्देहि दयानिधे ॥ ७२ ॥ क्षणमात्रं न शक्नोमि जीवितुं त्वत्कृपां विना ॥ न जीवंतीह जलजा जलं त्यक्त्वा जलग्रहाः ॥ ७३ ॥ यथा हि पुत्रवात्सल्याज्जननी प्रस्नुतस्तनी ॥ वत्सं त्वरितमागत्य संप्रीणयति वत्सला ॥ ७४ ॥ यदि स्यां तव पुत्रोऽहं माता त्वं यदि मामकी ॥ दयापयोधरस्तन्यसुधाभिरभिषिंच माम् ॥ ७५ ॥ मृग्यो न गुणलेशोऽपि मयि दोषैकमंदिरे ॥ पांसूनां वृष्टिबिंदूनां दोषाणां च न मे मितिः ॥ ७६ ॥ पापिनामहमेवाग्र्यो दयालूनां त्वमग्रणीः ॥ दयनीयो मदन्योऽस्ति तव कोऽत्र जगत्त्रये ॥ ७७ ॥ विधिनाहं न सृष्टश्चेन्न स्यात्तव दयालुता ॥ आमयो वा न सृष्टश्चेदौषधस्य वृथोदयः ॥ ७८ ॥ कृपा मदग्रजा किं ते अहं किं वा तदग्रजः ॥ विचार्य देहि मे वित्तं तव देवि दयानिधे ॥ ७९ ॥ माता पिता त्वं गुरुः सद्गतिः श्रीस्त्वमेव संजीवनहेतुभूता ॥ अन्यन्न मन्ये जगदेकनाथे त्वमेव सर्वं मम देवि सत्ये ॥ ८० ॥ आद्यादिलक्ष्मीर्भव सुप्रसन्ना विशुद्धविज्ञानसुखैकदोग्ध्री ॥ अज्ञानहंत्री त्रिगुणातिरिक्ता प्रज्ञाननेत्री भव सुप्रसन्ना ॥ ८१ ॥ अशेषवाग्जाड्यमलापहर्त्री नवं नवं स्पष्टसुवाक्प्रदायिनी ॥ ममेह जिह्वाग्रसुरंगनर्तकी भव प्रसन्ना वदने च मे श्रीः ॥ ८२ ॥ समस्तसंपत्सु विराजमाना समस्ततेजश्चयभासमाना ॥ विष्णुप्रिये त्वं भव दीप्यमाना वाग्देवता मे नयने प्रसन्ना ॥ ८३ ॥ सर्वप्रदर्शे

सकलार्थदे त्वं प्रभासुलावण्यदयाप्रदोग्ध्री ॥ सुवर्णदे त्वं सुमुखी भव श्रीर्हिरण्मयी मे नयने प्रसन्ना ॥ ८४ ॥ सर्वार्थदा सर्वजगत्प्रसूतिः सर्वेश्वरी सर्वभयापहंत्री ॥ गर्वोन्नता त्वं सुमुखी भव श्रीर्हिरण्मयी मे नयने प्रसन्ना ॥ ८५ ॥ समस्तविघ्नौघविनाश-कारिणी समस्तभक्तोद्धरणे विचक्षणा ॥ अनन्तसौभाग्यसुखप्रदा-यिनी हिरण्मयी मे नयने प्रसन्ना ॥ ८६ ॥ देवि प्रसीद दयनीय-तमाय मह्यं देवाधिनाथभवदेवगणाभिवंद्ये ॥ मातस्तथैव भव संनिहिता दृशोर्मे पत्या समं मम मुखे भव सुप्रसन्ना ॥ ८७ ॥ मा वत्स भैरभयदानकरोऽर्पितस्ते मौलौ ममेति मयि दीनदयानुकंपे ॥ मातः समर्पय मुदा करुणाकटाक्षं मांगल्यबीजमिह नः सृज जन्म मातः ॥ ८८ ॥ कटाक्ष इह कामधुक् तव मनस्तु चिंतामणिः करः सुरतरुः सदा नवनिधिस्त्वमेवेंदिरे ॥ भवेत्तव दयारसो मम रसा-यनं चान्वहं सुखं तव कलानिधिर्विविधवांछितार्थप्रदम् ॥ ८९ ॥ यथा रसस्पर्शनतोऽयसोऽपि सुवर्णता स्यात्कमले तथा ते ॥ कटाक्ष-संस्पर्शनतो जनानाममंगलानामपि मंगलत्वम् ॥ ९० ॥ देहीति नास्तीति वचः प्रवेशाद्भीतो रमे त्वां शरणं प्रपद्ये ॥ अतः सदा-स्मिन्नभयप्रदा त्वं सहैव पत्या मयि संनिधेहि ॥ ९१ ॥ कल्प-द्रुमेण मणिना सहिता सुरम्या श्रीस्ते कला मयि रसेन रसायनेन ॥ आस्तां यतो मम च दृक्शिरपाणिपादस्पृष्टाः सुवर्णवपुषः स्थिर-जंगमाः स्युः ॥ ९२ ॥ आद्यादिविष्णोः स्थिरधर्मपत्नी त्वमेव पत्या मयि संनिधेहि ॥ आद्यादिलक्ष्मि त्वदनुग्रहेण पदे पदे मे निधि-दर्शनं स्यात् ॥ ९३ ॥ आद्यादिलक्ष्मीहृदयं पठेद्यः स राज्यलक्ष्मी-मचलां तनोति ॥ महादरिद्रोऽपि भवेद्धनाढ्यस्तदन्वये श्रीः स्थिरतां प्रयाति ॥ ९४ ॥ यस्य स्मरणमात्रेण तुष्टा स्याद्विष्णुवल्लभा ॥ तस्या-भीष्टं ददत्याशु तं पालयति पुत्रवत् ॥ ९५ ॥ इदं रहस्यं हृदयं

सर्वकामफलप्रदम् ॥ जपः पंचसहस्रं तु पुरश्चरणमुच्यते ॥ ९६ ॥ त्रिकालमेककालं वा नरो भक्तिसमन्वितः ॥ यः पठेच्छृणुयाद्वापि स याति परमां श्रियम् ॥ ९७ ॥ महालक्ष्मीं समुद्दिश्य निशि भार्गववासरे ॥ इदं श्रीहृदयं जप्त्वा पञ्चवारं धनी भवेत् ॥ ९८ ॥ अनेन हृदयेनान्नं गर्भिण्या अभिमंत्रितम् ॥ ददाति तत्कुले पुत्रो जायते श्रीपतिः स्वयम् ॥ ९९ ॥ नरेण वाऽथवा नार्या लक्ष्मीहृदयमंत्रिते ॥ जले पीते च तद्वंशे मंदभाग्यो न जायते ॥ १०० ॥ य आश्विने मासि च शुक्लपक्षे रमोत्सवे संनिहितैकभक्त्या ॥ पठेत्तथैकोत्तरवारवृद्ध्या लभेत्स सौवर्णमयीं सुवृष्टिम् ॥ १०१ ॥ य एकभक्तोऽन्वहमेकवर्षं विशुद्धधीः सप्ततिवारजापी ॥ स मंदभाग्योऽपि रमाकटाक्षाद्भवेत्सहस्राक्षशताधिकश्रीः ॥ १०२ ॥ श्रीशांघ्रिभक्तिं हरिदासदास्यं प्रपन्नमंत्रार्थदृढैकनिष्ठाम् ॥ गुरोः स्मृतिं निर्मलबोधबुद्धिं प्रदेहि मातः परमं पदं श्रीः ॥ १०३ ॥ पृथ्वीपतित्वं पुरुषोत्तमत्वं विभूतिवासं विविधार्थसिद्धिम् ॥ संपूर्णकीर्तिं बहुवर्षभोगं प्रदेहि मे देवि पुनःपुनस्त्वम् ॥ १०४ ॥ वादार्थसिद्धिं बहुलोकवश्यं वयःस्थिरत्वं ललनासु भोगम् ॥ पौत्रादिलब्धिं सकलार्थसिद्धिं प्रदेहि मे भार्गवि जन्मजन्मनि ॥ १०५ ॥ सुवर्णवृद्धिं कुरु मे गृहे श्रीर्विभूतिवृद्धिं कुरु मे गृहे श्रीः ॥ १०६ ॥ अथ शिरोबीजम् ॥ ॐ यंहंकंलंपंश्रीं ॥ ध्यायेल्लक्ष्मीं प्रहसितमुखीं कोटिबालार्कभासां विद्युद्वर्णांबरवरधरां भूषणाढ्यां सुशोभाम् ॥ बीजापूरं सरसिजयुगं बिभ्रतीं स्वर्णपात्रं भर्त्रा युक्तां मुहुरभयदां मह्यमप्यच्युतश्रीः ॥ १०७ ॥ गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ॥ सिद्धिर्भवतु मे देवि त्वत्प्रसादान्मयि स्थिता ॥ १०८ ॥ इति श्रीअथर्वणरहस्ये लक्ष्मीहृदयस्तोत्रं संपूर्णम् ॥



# ❀ सरस्वतीस्तोत्राणि । ❀



या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रान्विता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥



## ३२६. जगन्मङ्गलास्तोत्रम् ।

श्रीगणेशाय नमः ॥ वीणावादनतत्पराङ्गुलिनदल्लोलांचितैः किंकिणीजालैः शोभितकङ्कणे शशिमुखे बालेंदुचूडामणे ॥ हेलाराजितचारुनेत्रयुगले ग्रैवेयशोभांचिते बाले पालय पापसंहतितमस्तारे जगन्मङ्गले ॥१॥ कुक्षौ ते बहुजीवलोकसमितेः कोटिं चिरं बिभ्रती कल्पादौ त्रिपुरे सृजस्यवसि तान् सर्वास्ववस्थास्वहो ॥ अन्ते तानखिलान्विनाशयसि सर्वं भो विलासस्तव बाले पालय० ॥ २ ॥ लोके नीरधराग्निवायुगगनाः सर्वे भवल्लीलया मातः संचलिता हि तारकगणाः सूर्यादिसर्वे ग्रहाः ॥ सर्वं खल्विह ते स्वरूपमपि च त्वं चोदयित्री सदा बाले पालय० ॥ ३ ॥ मायामेयविलासमात्रविभवा मातस्तवेयं कृतिर्गेया सर्वगुणान्विता च बहुदा मेयापि वेद्या नहि ॥ ध्येया ज्ञानविशारदैश्च विविधैः शास्त्रैर्विलोक्यापि वै बाले पालय० ॥ ४ ॥ नेत्रैः श्वेतविनीलशोणरुचिभिः पूर्णानुकंपान्वितैः पापानां मम भंजनाय गिरिजे पूरत्रयाणामिव ॥ तीर्थानामुपसंगमस्य नयसीत्येतद्ध्रुवं मां तथा बाले पालय० ॥ ५ ॥ मातस्ते दरलोलशीतविमलैर्नेत्रैः शिवे पश्य मां दुःखात्यन्तविपाकदीनवदनं शीघ्रं दयार्द्रैर्यतः । ग्रामे वा विपिनेऽपि वा हिमकरो ज्योत्स्नानिपातैः समं बाले पालय० ॥ ६ ॥ वेदानां शिखराणि पादयुगली धत्ते तवाम्बान्वहं पाद्यं तद्धरमौलिजूटतटिनीलाक्षांकितो रागिमा ॥ श्रीविष्णोर्हि किरीटरत्नसुषमा यस्यास्तु वंदेतरां बाले पालय० ॥ ७ ॥ या शंभोश्चरितामृतेन चलिता रोषा च गंगाहृदे या सख्यां परमादरा शिवगले या संगता सर्वदा ॥ दृष्ट्या ते शशिशीतया च दिशती सन्मङ्गलं संततं बाले ॥८॥ वाग्देवीं चतुराननस्य गृहिणीमाहुर्विधिज्ञा नराः श्रीविष्णोर्गृहिणीं सुधाब्धितनयां श्रीकण्ठपत्नीमुमाम् ॥ मातः का भवती विलासचतुरा माया परा देवता बाले पालय० ॥ ९ ॥ इति श्रीजगन्मङ्गलास्तोत्रं संपूर्णम् ॥

## ३२७. शारदाभुजङ्गप्रयातस्तोत्रम् ।

श्रीगणेशाय नमः ॥ सुवक्षोजकुंभां सुधापूर्णकुंभां प्रसादावलम्बां प्रपुण्यावलम्बाम् । सदास्येन्दुबिम्बां सदानोष्ठबिम्बां भजे शारदाम्बामजस्रं मदम्बाम् ॥ १ ॥ कटाक्षे दयार्द्रां करे ज्ञानमुद्रां कलाभिर्विनिद्रां कलापैः सुभद्राम् । पुरस्त्रीं विनिद्रां पुरस्तुङ्गभद्रां भजे शारदाम्बामजस्रं मदम्बाम् ॥ २ ॥ ललामाङ्कफालां लसद्गानलोलां स्वभक्तैकपालां यशःश्रीकपोलाम् । करे त्वक्षमालां कनत्प्रत्नलोलां भजे शारदाम्बामजस्रं मदम्बाम् ॥ ३ ॥ सुसीमन्तवेणीं दृशा निर्जितैणीं रमत्कीरवाणीं नमद्वज्रपाणिम् । सुधामन्थरास्यां मुदा चिन्त्यवेणीं भजे शारदाम्बामजस्रं मदम्बाम् ॥ ४ ॥ सुशान्तां सुदेहां दृगन्ते कचान्तां लसत्सल्लताङ्गीमनन्तामचिन्त्याम् । स्मरेत्तापसैः संगपूर्वस्थितां तां भजे शारदाम्बामजस्रं मदम्बाम् ॥ ५ ॥ कुरङ्गे तुरङ्गे मृगेन्द्रे खगेन्द्रे मराले मदेभे महोक्षेऽधिरूढाम् । महत्यां नवम्यां सदा सामरूपां भजे शारदाम्बामजस्रं मदम्बाम् ॥ ६ ॥ ज्वलत्कान्तिवह्निं जगन्मोहनाङ्गीं भजे मानसाम्भोजसुभ्रान्तभृङ्गीम् । निजस्तोत्रसंगीतनृत्यप्रभाङ्गीं भजे शारदाम्बामजस्रं मदम्बाम् ॥ ७ ॥ भवाम्भोजनेत्राजसंपूज्यमानां लसन्मन्दहासप्रभावक्त्रचिह्नाम् । चलच्चञ्चलाचारुताटङ्ककर्णां भजे शारदाम्बामजस्रं मदम्बाम् ॥ ८ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यप्रणीतं शारदाभुजङ्गप्रयातस्तोत्रं संपूर्णम् ॥

## ३२८. सरस्वतीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ बृहस्पतिरुवाच ॥ सरस्वति नमस्यामि चेतनां हृदि संस्थिताम् । कण्ठस्थां पद्मयोनिं त्वां ह्रीङ्कारां सुप्रियां सदा ॥ १ ॥ मतिदां वरदां चैव सर्वकामफलप्रदाम् । केशवस्य प्रियां

देवीं वीणाहस्तां वरप्रदाम् ॥ २ ॥ मन्त्रप्रियां सदा हृद्यां कुमतिध्वंसकारिणीम् । स्वप्रकाशां निरालम्बामज्ञानतिमिरापहाम् ॥ ३ ॥ मोक्षप्रियां शुभां नित्यां सुभगां शोभनप्रियाम् । पद्मोपविष्टां कुण्डलिनीं शुक्लवस्त्रां मनोहराम् ॥ ४ ॥ आदित्यमण्डले लीनां प्रणमामि जनप्रियाम् । ज्ञानाकारां जगद्दीपां भक्तविघ्नविनाशिनीम् ॥५॥ इति सत्यं स्तुता देवी वागीशेन महात्मना । आत्मानं दर्शयामास शरदिन्दुसमप्रभाम् ॥ ६ ॥ श्रीसरस्वत्युवाच ॥ वरं वृणीष्व भद्रं त्वं यत्ते मनसि वर्तते । बृहस्पतिरुवाच ॥ प्रसन्ना यदि मे देवि परं ज्ञानं प्रयच्छ मे ॥ ७ ॥ श्रीसरस्वत्युवाच ॥ दत्तं ते निर्मलं ज्ञानं कुमतिध्वंसकारकम् । स्तोत्रेणानेन मां भक्त्या ये स्तुवन्ति सदा नराः ॥ ८ ॥ लभन्ते परमं ज्ञानं मम तुल्यपराक्रमाः । कवित्वं मत्प्रसादेन प्राप्नुवन्ति मनोगतम् ॥ ९ ॥ त्रिसन्ध्यं प्रयतो भूत्वा यस्त्विमं पठते नरः । तस्य कण्ठे सदा वासं करिष्यामि न संशयः ॥ १० ॥ इति श्रीरुद्रयामले श्रीबृहस्पतिविरचितं सरस्वतीस्तोत्रं सम्पूर्णम् ॥

## ३२९. शारदाष्टकस्तोत्रम् ।

श्रीगणेशाय नमः ॥ वेदाभ्यासजडोऽपि यत्करसरोजातग्रहात्पद्मभूश्चित्रं विश्वमिदं तनोति विविधं वीतक्रियं सक्रियम् । तां तुङ्गातटवाससक्तहृदयां श्रीचक्रराजालयां श्रीमच्छंकरदेशिकेन्द्रविनुतां श्रीशारदाम्बां भजे ॥ १ ॥ यः कश्चिद्बुद्धिहीनोऽन्यविदितनमनध्यानपूजाविधानः कुर्याद्यद्यम्ब सेवां तव पदसरसीजातसेवारतस्य । चित्रं तस्यास्यमध्यात्प्रसरति कविता वाहिनीवामराणां सालंकारा सुवर्णा सरसपदयुता यत्नलेशं विनैव ॥ २ ॥ सेवापूजानमनविधयः सन्तु दूरे नितान्तं कादाचित्का स्मृतिरपि पदाम्भोजयुग्मस्य तेऽम्ब । मूकं रङ्कं

कलयति सुराचार्यमिन्द्रं च वाचा लक्ष्म्या लोको न च कलयते तां कलेः किं हि दौःस्थ्यम् ॥ ३ ॥ दृष्ट्वा त्वत्पादपङ्केरुहनमनविधावुद्यतान्भक्तलोकान्दूरं गच्छन्ति रोगा हरिमिव हरिणा वीक्ष्य तद्वत्सुदूरम् । कालः कुत्रापि लीनो भवति दिनकरे प्रोद्यमाने तमोवत् सौख्यं चायुर्यथार्थं विकसति वचसां देवि श्रृङ्गाद्रिवासे ॥ ४ ॥ त्वत्पादांबुजपूजनासहृदयाम्भोजातशुद्धिर्जनः स्वर्गं रौरवमेव वेत्ति कमलानाथास्पदं दुःखदम् । कारागारमवैति चन्द्रनगरं वाग्देवि किं वर्णनैर्दृश्यं सर्वमुदीक्षते स हि पुना रज्जूरगाद्यैः समम् ॥ ५ ॥ त्वत्पादाम्बुरुहं हृदाख्यसरसि स्याद्दृढमूलं यदा वक्त्राब्जे त्वमिवाम्ब पद्मनिलया तिष्ठेद्गृहे निश्चला । कीर्तिर्यास्यति दिक्तटानपि नृपैः संपूजिता स्यात्तदा वादे सर्वनयेष्वपि प्रतिभटान्दूरे करोत्येव हि ॥ ६ ॥ इति श्रीजगद्गुरुनृसिंहभारतीस्वामिविरचितं शारदाषट्कस्तोत्रं संपूर्णम् ॥

## ३३०. सरस्वतीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्वेतपद्मासना देवि श्वेतपुष्पोपशोभिता । श्वेताम्बरधरा नित्या श्वेतगन्धानुलेपना ॥ १ ॥ श्वेताक्षी शुक्लवस्त्रा च श्वेतचन्दनचर्चिता । वरदा सिद्धगन्धर्वैर्ऋषिभिः स्तूयते सदा ॥ २ ॥ स्तोत्रेणानेन तां देवीं जगद्धात्रीं सरस्वतीम् । ये स्तुवन्ति त्रिकालेषु सर्वविद्यां लभन्ति ते ॥ ३ ॥ या देवी स्तूयते नित्यं ब्रह्मेन्द्रसुरकिंनरैः । सा ममैवास्तु जिह्वाग्रे पद्महस्ता सरस्वती ॥ ४ ॥ इति श्रीसरस्वतीस्तोत्रं संपूर्णम् ॥

## ३३१. शारदास्तोत्रम् ।

श्रीगणेशाय नमः ॥ शिशुमिव पदनतलोकं परिरक्षामीति बोधनायैव । अङ्के निधाय बालं भातीयं पङ्कजातभवदयिता ॥ १ ॥ पुराण-

वस्त्राणि न धारयामि नवाम्बराण्येव तु धारयामि। इति प्रबोधाय जनस्य नूनं नवाम्बराण्येव दधाति वाणी ॥ २ ॥ एकमेवाम्बरं वाणि विरूपं च वदन्ति हि। नवाम्बराणि धत्से त्वं सुरूपाणि कथं वद ॥ ३ ॥ आकाशवत्सर्वगतश्च नित्यं इत्यादिवेदेऽम्ब किलाम्बरस्य। प्रत्नत्वमेकत्वमपि प्रसिद्धं कथं नवत्वं समभूदमुष्मिन् ॥ ४ ॥ हंसैरेव परैः सेव्या नाहमन्यैर्जनैरिति। प्रबोधनकृते मातर्हंसं वाहं करोषि किम् ॥ ५ ॥ हंसे हि शब्दे किमु मुख्यवृत्त्या स्थिताहमेवेति विबोधनाय। विभासि हंसे जगदम्बिके त्वमित्यस्मदीये हृदये विभाति ॥ ६ ॥ हंसो बाह्यान्धकारप्रदलनचतुरो ह्यह्नि मोक्षप्रदायी पद्मानामेष मेऽन्तःस्थिततिमिरततेर्वारयित्र्याश्च रात्रौ। अप्यामोदप्रदात्र्या नतहृदयसरोजातपंक्तेरधस्ताद्भूतो हीत्येव बोधं रचयितुमिव किं हंसमारोहसीशे ॥ ७ ॥ वृषं पुरस्तात्कुरुषे किमद्य वृषप्रदानाय नमज्जनेभ्यः। द्रुतं पयोजन्मभवप्रमोदपयोधिराकाशशिबिम्बपंक्ते ॥ ८ ॥ शार्दूलचर्म परिवीक्ष्य भवांगसंस्थं भीतः पलाय्य तव सन्निधिमागतः किम्। उक्षाधिपः सरसिजासनधर्मपत्नि ब्रूह्यद्य संशयनिमग्नमतेर्ममाशु ॥ ९ ॥ कर्तुमात्मनि सार्थां किं वृषेन्द्रः पुर एतु नः। इत्यादिकां श्रुतिं वाणि पुरस्तात्कुरुषे वृषम् ॥ १० ॥ वृषभो वृषभो नो चेत्कथं तव पदाम्बुजम्। वाणि सेवितुमर्हः स्यात्तस्माद्वृषभ एव हि ॥ ११ ॥ शशिसूर्यचन्द्रमुख्यानहमेवास्थाय पालयामीदम्। जगदिति विबोधनार्थं वागीश्वरि भासि शिखिनमास्थाय ॥ १२ ॥ शंभौ सन्ति शशाङ्कसूर्यशिखिनो नेत्रापदेशात्सदा सागर्भ्यं त इमे निरीक्ष्य गिरिजानाथस्य मातस्त्वयि। वक्त्रारक्तपटीसुवाहमिषतः सेवां सदा कुर्वते मोदादेव हि तेन चात्र विषयः कश्चिद्गिरां देवते ॥ १३ ॥ शिखिवच्छुद्ध एवेति नाम्नैवाह यतः शिखी। तस्मात्त्वद्वाहता चास्य युक्तैव विधिवल्लभे ॥ १४ ॥ शिखी

मुण्डी जटीत्याद्याः सर्वे त्वत्सेवका इति । द्योतनाय शिखी किं वा मातस्त्वामेव सेवते ॥ १५ ॥ निशम्य संप्रेषितवान्मयूरमुद्धर्ष इत्येव पितृष्वसुः किम् । षडाननो ब्रूहि गिरां सवित्रि नम्रस्य संदेहयुजो ममाशु ॥ १६ ॥ के का न पूजयेयुस्त्वां भुवनेऽस्मिन्महोत्सवे वाणि । इति नाम्नैव हि वक्तुं भाति त्वत्सन्निधौ केकी ॥ १७ ॥ विनतातनूद्भवत्वं प्रकटं प्रभवेद्विनत्यैव । इति बुद्ध्या खगराट् किं विनतस्त्वत्पादपद्मयोर्वाणि ॥ १८ ॥ मानसविहरणशीलां देवीं त्यक्त्वाऽन्यदेवतासेवा । नैवोचितेति खगराड् वहति त्वां तादृशीं नूनम् ॥ १९ ॥ सुवर्णनीकाशभवत्प्रतीककान्तैः परिष्वङ्गत एव साध्वी । सुवर्णतेत्यात्मन आकलय्य खगेट् करोत्यम्ब तवांघ्रिसेवाम् ॥ २० ॥ विष्णौ वीक्ष्य जडाधिवासमथ च स्वामित्रशायित्वमप्यण्डोद्भूतपतिर्विहाय तमिमं विज्ञानरूपासयम् । त्वामेवाद्य निषेवते खलु मुदा वाग्देवि युक्तं च तत्को वा शत्रुसहासिकां हि सहते लोकेषु विद्वज्जनः ॥ २१ ॥ भूताकाशचरेट् त्वमेव भुवने सिद्धं हि का तेन मे बुद्धिश्चाभवदित्यवेत्य खगराट् नूनं गिरां देवते । हार्दाकाशचराधिपत्यमपि मे भूयादितीच्छावशात्तत्प्राप्त्यै तव पादपङ्कजयुगीसेवां करोत्यादरात् ॥ २२ ॥ लोके ह्येकः पक्षः शुक्लश्चान्यश्च कृष्ण एवेह । द्वावपि शुक्लौ पक्षौ धत्ते गरुडः किमम्ब तव वाहः ॥ २३ ॥ हस्तान्तरस्थपरशुं शंभोर्भूषार्थमाहृतान्नागान् । दृष्ट्वा भीतो हरिणश्चरणं शरणं जगाम तव वाणि ॥ २४ ॥ समाश्रयेयं यदि पुष्करस्थमब्जं तदा स्यात्पतनं हि दर्शे । ममेति मत्वा मृगशावकोऽयं पदाब्जसेवाश्रयते तवाम्ब ॥ २५ ॥ पिबेयुरपि मां सुरा यदि वसामि चन्द्रे तदेत्यपायरहितं पदं जिगमिषुश्चिरं संचरन् । अपायवचनोज्झितं तव पदाब्जयोरन्तरं विलोक्य मृगशावको वसति तत्र

वाग्देवि किम् ॥ २६ ॥ लालयति वाणि किं त्वां पञ्चास्यः स्कन्धमारोप्य । युक्तमिदं भ्रातॄणां सोदर्यालालनं लोके ॥ २७ ॥ नाथस्यापि ममानिवेद्य हरिणः सेवां कथं प्रातनोद्वाग्देव्याश्चरणाब्जयोरिति रुषा सारङ्गबालं भृशम् । त्वां शीघ्रप्रपलायनोत्सवपरं सेवां करोत्यादराद्दृश्येशः स्वयमित्यवैमि करुणावारांनिधे शारदे ॥ २८ ॥ विष्णवर्धत्वात्पालकत्वं ममास्ते संहर्तृत्वं नैजमेवास्ति किंतु । स्रष्टुर्भावो वाणि नास्तीति मत्वा तत्प्राप्त्यै त्वां सेवते पञ्चवक्त्रः ॥ २९ ॥ उन्नम्य पादद्वितयं तुरङ्गो वदन्निति़ीवास्ति गिरां सवित्रि । विलङ्घ्य तां किं सरिदीश्वरोऽयमुत्प्लुत्य गच्छेयमथाम्बरं वा ॥ ३० ॥ पदे पदे दानववश्यता मे भवेच्छचीनाथसमीपवासे । उच्चैःश्रवा इत्यभिगम्य मातस्तवांघ्रिसेवां प्रकरोति किं वा ॥ ३१ ॥ कुरङ्गवेगस्तव दृष्टपूर्वस्तुरङ्गवेगं परिपश्य वाणि। इतीव गर्वादधिगम्य मातस्तुरङ्गमस्त्वां परिसेवते किम् ॥ ३२ ॥ विहङ्गं कुरङ्गं तुरङ्गं च वाहं विधायाशुगं श्रान्तिमासाद्य किं त्वम् । गजं मन्दगं वाहमद्यातनोषि प्रणम्रस्य मे ब्रूहि वाचामधीशे ॥ ३३ ॥ जम्भारौ कौशिकत्वं ह्यथ च तदनुजे वीक्ष्य सम्यग्घरित्वं त्यक्त्वा ह्रीसाध्वसाभ्यामयमिभकुलराट् तौ शरच्चन्द्रशुभ्रः । इन्द्रोपेन्द्रादिसेव्यामपि सकलसुराराध्यपादारविन्दां त्वामेवातिप्रमोदात्कमलजदयिते सेवते नूनमेतत् ॥ ३४ ॥ नतेष्टदानाय सदादयार्द्रकराम्बुजा त्वं यत एव वाणि । तस्मादिभोऽप्येष तवाङ्घ्रिसङ्गाद्दानाम्बुसंसिक्तकरो विभाति ॥ ३५ ॥ मत्पादाब्जप्रणम्रं न रमति तरसा सेवते चेभमुख्या लक्ष्मीर्हस्ताग्रराजद्वरकनकमयस्रग्धरेत्येव बोधम् । कर्तुं हस्ताग्रराजद्वारकनकसरं नागराजं प्रधत्से वाणि प्रब्रूहि किं त्वं कमलजहृदयाम्भोजसूर्यप्रभे मे ॥ ३६ ॥ त्यक्ष्यामि नैव रागं कालत्रितयेऽपि

नम्रवर्गेषु । इति बोधनाय वाणी रक्तसुमानां त्रयं धत्ते ॥ ३७ ॥ एकः शुकः प्रसिद्धोऽस्ति पाराशर्यसुतः किल । शुकोऽपरस्तु को ब्रूहि शारदे प्रणताय मे ॥ ३८ ॥ पद्मासनस्थे सरसीरुहोत्थजाये वस त्वं हृदये सदा मे । तेनाहमाशाः सकला जयेयं न तत्र संदेहलवोऽस्ति मेऽद्य ॥ ३९ ॥ इति श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिविरचितं शारदास्तोत्रं संपूर्णम् ॥

## ३३२. नीलसरस्वतीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ घोररूपे महारावे सर्वशत्रुभयङ्करि । भक्तेभ्यो वरदे देवि त्राहि मां शरणागतम् ॥ १ ॥ ॐ सुरासुरार्चिते देवि सिद्धगंधर्वसेविते । जाड्यपापहरे देवि त्राहि मां० ॥ २ ॥ जटाजूटसमायुक्ते लोलजिह्वान्तकारिणि । द्रुतबुद्धिकरे देवि त्राहि मां० ॥ ३ ॥ सौम्यक्रोधधरे रूपे चंडरूपे नमोऽस्तु ते । सृष्टिरूपे नमस्तुभ्यं त्राहि मां० ॥ ४ ॥ जडानां जडतां हन्ति भक्तानां भक्तवत्सला । मूढतां हर मे देवि त्राहि मां० ॥ ५ ॥ ह्रूं ह्रूंकारमये देवि बलिहोमप्रिये नमः । उग्रतारे नमो नित्यं त्राहि मां० ॥ ६ ॥ बुद्धिं देहि यशो देहि कवित्वं देहि देवि मे । मूढत्वं च हरेर्देवि त्राहि मां० ॥ ७ ॥ इन्द्रादिविलसन्द्वन्द्ववन्दिते करुणामयि । तारे ताराधिनाथास्ये त्राहि मां० ॥ ८ ॥ अष्टम्यां च चतुर्दश्यां नवम्यां यः पठेन्नरः । षण्मासैः सिद्धिमाप्नोति नात्र कार्या विचारणा ॥ ९ ॥ मोक्षार्थी लभते मोक्षं धनार्थी लभते धनम् । विद्यार्थी लभते विद्यां तर्कव्याकरणादिकाम् ॥ १० ॥ इदं स्तोत्रं पठेद्यस्तु सततं श्रद्धयान्वितः । तस्य शत्रुः क्षयं याति महाप्रज्ञा प्रजायते ॥ ११ ॥ पीडायां वापि संग्रामे जाड्ये दाने तथा भये । य इदं पठति स्तोत्रं शुभं तस्य न संशयः । इति प्रणम्य स्तुत्वा च योनिमुद्रां प्रदर्शयेत् ॥ १२ ॥ इति नीलसरस्वतीस्तोत्रं संपूर्णम् ॥



# ❀ नवग्रहस्तोत्राणि । ❀



## ३३३. आदित्यस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीआदित्यस्तोत्रस्य आङ्गिरस ऋषिः, त्रिष्टुप् छन्दः, सूर्यो देवता, सूर्यप्रीत्यर्थं जपे विनियोगः । नवग्रहाणां सर्वेषां सूर्यादीनां पृथक् पृथक् । पीडा च दुःसहा राजन् जायते सततं नृणाम् ॥ १ ॥ पीडानाशाय राजेन्द्र नामानि शृणु भास्वतः । सूर्यादीनां च सर्वेषां पीडा नश्यति शृण्वतः ॥ २ ॥ आदित्यः सविता सूर्यः पूषाऽर्कः शीघ्रगो रविः । भगस्त्वष्टाऽर्यमा हंसो हेलिस्तेजोनिधिर्हरिः ॥ ३ ॥ दिननाथो दिनकरः सप्तसप्तिः प्रभाकरः । विभावसुर्वेदकर्ता वेदाङ्गो वेदवाहनः ॥ ४ ॥ हरिदश्वः कालवक्त्रः कर्मसाक्षी जगत्पतिः । पद्मिनीबोधको भानुर्भास्करः करुणाकरः ॥ ५ ॥ द्वादशात्मा विश्वकर्मा लोहिताङ्गस्तमोनुदः । जगन्नाथोऽरविन्दाक्षः कालात्मा कश्यपात्मजः ॥ ६ ॥ भूताश्रयो ग्रहपतिः सर्वलोकनमस्कृतः । जपाकुसुमसंकाशो भास्वानदितिनन्दनः ॥ ७ ॥ ध्वान्तेभसिंहः सर्वात्मा लोकनेत्रो

विकर्तनः । मार्तण्डो मिहिरः सूरस्तपनो लोकतापनः ॥ ८ ॥ जगत्कर्ता जगत्साक्षी शनैश्चरपिता जयः । सहस्ररश्मिस्तरणिर्भगवान् भक्तवत्सलः ॥ ९ ॥ विवस्वानादिदेवश्च देवदेवो दिवाकरः । धन्वन्तरिर्व्याधिहर्ता दद्रुकुष्ठविनाशनः ॥ १० ॥ चराचरात्मा मैत्रेयोऽमितो विष्णुर्विकर्तनः । लोकशोकापहर्ता च कमलाकर आत्मभूः ॥ ११ ॥ नारायणो महादेवो रुद्रः पुरुष ईश्वरः । जीवात्मा परमात्मा च सूक्ष्मात्मा सर्वतोमुखः ॥ १२ ॥ इन्द्रोऽनलो यमश्चैव नैर्ऋतो वरुणोऽनिलः । श्रीद ईशान इन्दुश्च भौमः सौम्यो गुरुः कविः ॥१३॥ शौरिर्विधुन्तुदः केतुः कालः कालात्मको विभुः । सर्वदेवमयो देवः कृष्णः कामप्रदायकः ॥ १४ ॥ य एतैर्नामभिर्मर्त्यो भक्त्या स्तौति दिवाकरम् । सर्वपापविनिर्मुक्तः सर्वरोगविवर्जितः ॥ १५ ॥ पुत्रवान् धनवान् श्रीमान् जायते स न संशयः । रविवारे पठेद्यस्तु नामान्येतानि भास्वतः ॥१६॥ पीडाशान्तिर्भवेत्तस्य ग्रहाणां च विशेषतः । सद्यः सुखमवाप्नोति चायुर्दीर्घं च नीरुजम् ॥ १७ ॥ इति श्रीभविष्यपुराणे आदित्यस्तोत्रं संपूर्णम् ॥

## ३३४. सूर्यकवचम् ।

श्रीगणेशाय नमः ॥ श्रीसूर्य उवाच ॥ सांब सांब महाबाहो शृणु मे कवचं शुभम् । त्रैलोक्यमंगलं नाम कवचं परमाद्भुतम् ॥ १ ॥ यज्ज्ञात्वा मंत्रवित्सम्यक् फलं प्राप्नोति निश्चितम् । यद्धृत्वा च महादेवो गणानामधिपोऽभवत् ॥ २ ॥ पठनाद्धारणाद्विष्णुः सर्वेषां पालकः सदा । एवमिन्द्रादयः सर्वे सर्वैश्वर्यमवाप्नुवन् ॥ ३ ॥ कवचस्य ऋषिर्ब्रह्मा छंदोऽनुष्टुबुदाहृतः । श्रीसूर्यो देवता चात्र सर्वदेवनमस्कृतः ॥ ४ ॥ यशआरोग्यमोक्षेषु विनियोगः प्रकीर्तितः । प्रणवो मे शिरः पातु घृणिर्मे पातु भालकम् ॥ ५ ॥ सूर्योऽव्यान्नयनद्वंद्वमादित्यः कर्णयुग्म-

कम् । अष्टाक्षरो महामंत्रः सर्वाभीष्टफलप्रदः ॥ ६ ॥ ह्रीं बीजं मे मुखं पातु हृदयं भुवनेश्वरी । चंद्रबिंबं विंशदाद्यं पातु मे गुह्यदेशकम् ॥ ७ ॥ अक्षरोऽसौ महामंत्रः सर्वतंत्रेषु गोपितः । शिवो वह्निसमायुक्तो वामाक्षीबिंदुभूषितः ॥ ८ ॥ एकाक्षरो महामंत्रः श्रीसूर्यस्य प्रकीर्तितः । गुह्याद्गुह्यतरो मंत्रो वाञ्छाचिंतामणिः स्मृतः ॥ ९ ॥ शीर्षादिपादपर्यंतं सदा पातु मनूत्तमः । इति ते कथितं दिव्यं त्रिषु लोकेषु दुर्लभम् ॥ १० ॥ श्रीप्रदं कांतिदं नित्यं धनारोग्यविवर्धनम् । कुष्ठादिरोगशमनं महाव्याधिविनाशनम् ॥ ११ ॥ त्रिसंध्यं यः पठेन्नित्यमरोगी बलवान् भवेत् । तत्पुनः किमिहोक्तेन यद्यन्मनसि वर्तते ॥ १२ ॥ तत्तत्सर्वं भवेत्तस्य कवचस्य च धारणात् । भूतप्रेतपिशाचाश्च यक्षगंधर्वराक्षसाः ॥ १३ ॥ ब्रह्मराक्षसवेताला न द्रष्टुमपि ते क्षमाः । दूरादेव पलायंते तस्य संकीर्तनादपि ॥ १४ ॥ भूर्जपत्रे समालिख्य रोचनागरुकुंकुमैः । रविवारे च संक्रांत्यां सप्तम्यां च विशेषतः । धारयेत्साधकश्रेष्ठः श्रीसूर्यस्य प्रियो भवेत् ॥ १५ ॥ त्रिलोहमध्यगं कृत्वा धारयेद्दक्षिणे करे । शिखायामथवा कंठे सोऽपि सूर्यो न संशयः ॥ १६ ॥ इति ते कथितं सांब त्रैलोक्यमंगलाभिधम् । कवचं दुर्लभं लोके तव स्नेहात्प्रकाशितम् ॥ १७ ॥ अज्ञात्वा कवचं दिव्यं यो जपेत्सूर्यमन्त्रकम् । सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि ॥ १८ ॥

इति श्रीब्रह्मयामले त्रैलोक्यमंगलं नाम सूर्यकवचं संपूर्णम् ॥



## ३३२. चन्द्राष्टाविंशतिनामस्तोत्रम् ।



श्रीगणेशाय नमः ॥ अस्य श्रीचन्द्राष्टाविंशतिनामस्तोत्रस्य गौतम ऋषिः, सोमो देवता, विराट् छन्दः, चन्द्रप्रीत्यर्थे जपे विनियोगः ॥ चन्द्रस्य शृणु नामानि शुभदानि महीपते । यानि श्रुत्वा नरो दुःखान्मुच्यते नात्र संशयः ॥ १ ॥ सुधाकरश्च सोमश्च ग्लौरब्जः कुमुदप्रियः । लोकप्रियः शुभ्रभानुश्चन्द्रमा रोहिणीपतिः ॥ २ ॥ शशी हिमकरो राजा द्विजराजो निशाकरः । आत्रेय इन्दुः शीतांशुरोषधीशः कलानिधिः ॥ ३ ॥ जैवातृको रमाभ्राता क्षीरोदार्णवसंभवः । नक्षत्रनायकः शंभुशिरश्चूडामणिर्विभुः ॥ ४ ॥ तापहर्ता नभोदीपो नामान्येतानि यः पठेत् । प्रत्यहं भक्तिसंयुक्तस्तस्य पीडा विनश्यति ॥ ५ ॥ तद्दिने च पठेद्यस्तु लभेत्सर्वं समीहितम् । ग्रहादीनां च सर्वेषां भवेच्चन्द्रबलं सदा ॥ ६ ॥ इति श्रीचन्द्राष्टाविंशतिनामस्तोत्रं संपूर्णम् ॥

## ३३६. चंद्रकवचम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीचंद्रकवचस्तोत्रमंत्रस्य गौतम ऋषिः । अनुष्टुप् छंदः, श्रीचन्द्रो देवता, चंद्रप्रीत्यर्थं जपे विनियोगः ॥ समं

चतुर्भुजं वन्दे केयूरमुकुटोज्ज्वलम् । वासुदेवस्य नयनं शंकरस्य च भूषणम् ॥ १ ॥ एवं ध्यात्वा जपेन्नित्यं शशिनः कवचं शुभम् । शशी पातु शिरोदेशं भालं पातु कलानिधिः ॥ २ ॥ चक्षुषी चंद्रमाः पातु श्रुती पातु निशापतिः । प्राणं क्षपाकरः पातु मुखं कुमुदबांधवः ॥ ३ ॥ पातु कण्ठं च मे सोमः स्कंधे जैवातृकस्तथा । करौ सुधाकरः पातु वक्षः पातु निशाकरः ॥ ४ ॥ हृदयं पातु मे चंद्रो नाभिं शंकरभूषणः । मध्यं पातु सुरश्रेष्ठः कटिं पातु सुधाकरः ॥ ५ ॥ ऊरू तारापतिः पातु मृगांको जानुनी सदा । अब्धिजः पातु मे जंघे पातु पादौ विधुः सदा ॥ ६ ॥ सर्वाण्यन्यानि चांगानि पातु चंद्रोऽखिलं वपुः । एतद्धि कवचं दिव्यं भुक्तिमुक्तिप्रदायकम् । यः पठेच्छृणुयाद्वापि सर्वत्र विजयी भवेत् ॥ ७ ॥ इति श्रीचंद्रकवचं संपूर्णम् ॥

## ३३७. अङ्गारकस्तोत्रम् ।



श्रीगणेशाय नमः ॥ अ श्रीअङ्गारकस्तोत्रस्य विरूपाङ्गिरस ऋषिः, अग्निर्देवता, गायत्री छन्दः, भौमप्रीत्यर्थं जपे विनियोगः । अङ्गारकः शक्तिधरो लोहिताङ्गो धरासुतः । कुमारो मङ्गलो भौमो महाकायो धनप्रदः ॥ १ ॥ ऋणहर्ता दृष्टिकर्ता रोगकृद्रोगनाशनः ।

विद्युत्प्रभो व्रणकरः कामदो धनहृत् कुजः ॥ २ ॥ सामगानप्रियो रक्तवस्त्रो रक्तायतेक्षणः । लोहितो रक्तवर्णश्च सर्वकर्मावबोधकः ॥३॥ रक्तमाल्यधरो हेमकुण्डली ग्रहनायकः । नामान्येतानि भौमस्य यः पठेत्सततं नरः ॥ ४ ॥ ऋणं तस्य च दौर्भाग्यं दारिद्र्यं च विनश्यति । धनं प्राप्नोति विपुलं स्त्रियं चैव मनोरमाम् ॥ ५ ॥ वंशोद्योतकरं पुत्रं लभते नात्र संशयः । योऽर्चयेदह्नि भौमस्य मङ्गलं बहुपुष्पकैः ॥ ६ ॥ सर्वा नश्यति पीडा च तस्य ग्रहकृता ध्रुवम् ॥ ७ ॥ इति श्रीस्कन्दपुराणे अङ्गारकस्तोत्रं संपूर्णम् ॥

## ३३८. ऋणमोचकमङ्गलस्तोत्रम् ।

श्रीगणेशाय नमः ॥ मङ्गलो भूमिपुत्रश्च ऋणहर्ता धनप्रदः । स्थिरासनो महाकायः सर्वकर्मावरोधकः ॥ १ ॥ लोहितो लोहिताक्षश्च सामगानां कृपाकरः । धरात्मजः कुजो भौमो भूतिदो भूमिनन्दनः ॥ २ ॥ अङ्गारको यमश्चैव सर्वरोगापहारकः । वृष्टेः कर्ताऽपहर्ता च सर्वकामफलप्रदः ॥ ३ ॥ एतानि कुजनामानि नित्यं यः श्रद्धया पठेत् । ऋणं न जायते तस्य धनं शीघ्रमवाप्नुयात् ॥ ४ ॥ धरणीगर्भसंभूतं विद्युत्कान्तिसमप्रभम् । कुमारं शक्तिहस्तं तं मङ्गलं प्रणमाम्यहम् ॥ ५ ॥ स्तोत्रमङ्गारकस्यैतत् पठनीयं सदा नृभिः । न तेषां भौमजा पीडा स्वल्पापि भवति क्वचित् ॥ ६ ॥ अङ्गारक महाभाग भगवन् भक्तवत्सल । त्वां नमामि ममाशेषमृणमाशु विनाशय ॥ ७ ॥ ऋणरोगादिदारिद्र्यं ये चान्ये ह्यपमृत्यवः । भयक्लेशमनस्तापा नश्यंतु मम सर्वदा ॥ ८ ॥ अतिवक्र दुराराध्य भोगमुक्तजितात्मनः । तुष्टो ददासि साम्राज्यं रुष्टो हरसि तत्क्षणात् ॥ ९ ॥ विरिञ्चिशक्रविष्णूनां मनुष्याणां तु का कथा । तेन त्वं सर्वसत्त्वेन ग्रहराजो

महाबलः ॥ १० ॥ पुत्रान् देहि धनं देहि त्वामस्मि शरणं गतः । ऋणदारिद्र्यदुःखेन शत्रूणां च भयात्ततः ॥ ११ ॥ एभिर्द्वादशभिः श्लोकैर्यः स्तौति च धरासुतम् । महतीं श्रियमाप्नोति ह्यपरो धनदो युवा ॥ १२ ॥ इति श्रीस्कन्दपुराणे भार्गवप्रोक्तं ऋणमोचकमङ्गलस्तोत्रं संपूर्णम् ॥

## ३३९. मंगलकवचम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीअंगारककवचस्तोत्रमंत्रस्य कश्यप ऋषिः, अनुष्टुप् छंदः, अंगारको देवता, भौमप्रीत्यर्थं जपे विनियोगः । रक्तांबरो रक्तवपुः किरीटी चतुर्भुजो मेषगमो गदाभृत् । धरासुतः शक्तिधरश्च शूली सदा मम स्याद्वरदः प्रशांतः ॥ १ ॥ अंगारकः शिरो रक्षेन्मुखं वै धरणीसुतः । श्रवौ रक्तांबरः पातु नेत्रे मे रक्तलोचनः ॥ २ ॥ नासां शक्तिधरः पातु मुखं मे रक्तलोचनः । भुजौ मे रक्तमाली च हस्तौ शक्तिधरस्तथा ॥ ३ ॥ वक्षः पातु वरांगश्च हृदयं पातु रोहितः । कटिं मे ग्रहराजश्च मुखं चैव धरासुतः ॥ ४ ॥ जानुजंघे कुजः पातु पादौ भक्तप्रियः सदा । सर्वाण्यन्यानि चांगानि रक्षेन्मे मेषवाहनः ॥ ५ ॥ य इदं कवचं दिव्यं सर्वशत्रुनिवारणम् । भूतप्रेतपिशाचानां नाशनं सर्वसिद्धिदम् ॥ ६ ॥ सर्वरोगहरं चैव सर्वसंपत्प्रदं शुभम् । भुक्तिमुक्तिप्रदं नृणां सर्वसौभाग्यवर्धनम् । रोगबंधविमोक्षं च सत्यमेतन्न संशयः ॥ ७ ॥ इति श्रीमार्कंडेयपुराणे मङ्गलकवचं संपूर्णम् ॥

## ३४०. बुधपञ्चविंशतिनामस्तोत्रम् ।



श्रीगणेशाय नमः ॥ अस्य श्रीबुधपञ्चविंशतिनामस्तोत्रस्य प्रजापतिर्ऋषिः, त्रिष्टुप् छन्दः, बुधो देवता, बुधप्रीत्यर्थं जपे विनियोगः ॥ बुधो बुद्धिमतां श्रेष्ठो बुद्धिदाता धनप्रदः । प्रियङ्गुकलिकाश्यामः कञ्जनेत्रो मनोहरः ॥ १ ॥ ग्रहोपमो रौहिणेयो नक्षत्रेशो दयाकरः । विरुद्धकार्यहन्ता च सौम्यो बुद्धिविवर्धनः ॥ २ ॥ चन्द्रात्मजो विष्णुरूपी ज्ञानी ज्ञो ज्ञानिनायकः । ग्रहपीडाहरो दारपुत्रधान्यपशुप्रदः ॥ २ ॥ लोकप्रियः सौम्यमूर्तिर्गुणदो गुणिवत्सलः । पञ्चविंशतिनामानि बुधस्यैतानि यः पठेत् ॥ ४ ॥ स्मृत्वा बुधं सदा तस्य पीडा सर्वा विनश्यति । तद्दिने वा पठेद्यस्तु लभते स मनोगतम् ॥ ५ ॥ इति श्रीपद्मपुराणे बुधपञ्चविंशतिनामस्तोत्रं संपूर्णम् ॥

## ३४१. बुधकवचम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीबुधकवचस्तोत्रमंत्रस्य कश्यप ऋषिः, अनुष्टुप् छंदः, बुधो देवता, बुधप्रीत्यर्थं जपे विनियोगः ॥ बुधस्तु पुस्तकधरः कुंकुमस्य समद्युतिः । पीतांबरधरः पातु पीतमाल्यानु-

लेपनः ॥ १ ॥ कटिं च पातु मे सौम्यः शिरोदेशं बुधस्तथा । नेत्रे ज्ञानमयः पातु श्रोत्रे पातु निशाप्रियः ॥ २ ॥ घ्राणं गंधप्रियः पातु जिह्वां विद्याप्रदो मम । कंठं पातु विधोः पुत्रो भुजौ पुस्तकभूषणः ॥ ३ ॥ वक्षः पातु वरांगश्च हृदयं रोहिणीसुतः । नाभिं पातु सुराराध्यो मध्यं पातु खगेश्वरः ॥ ४ ॥ जानुनी रौहिणेयश्च पातु जंघेऽखिलप्रदः । पादौ मे बोधनः पातु पातु सौम्योऽखिलं वपुः ॥ ५ ॥ एतद्धि कवचं दिव्यं सर्वपापप्रणाशनम् । सर्वरोगप्रशमनं सर्वदुःखनिवारणम् ॥ ६ ॥ आयुरारोग्यशुभदं पुत्रपौत्रप्रवर्धनम् । यः पठेच्छृणुयाद्वापि सर्वत्र विजयी भवेत् ॥ ७ ॥ इति श्रीब्रह्मवैवर्तपुराणे बुधकवचं संपूर्णम् ॥

## ३४२. बृहस्पतिस्तोत्रम् ।



श्रीगणेशाय नमः ॥ अस्य श्रीबृहस्पतिस्तोत्रस्य गृत्समद ऋषिः, अनुष्टुप् छन्दः, बृहस्पतिर्देवता, बृहस्पतिप्रीत्यर्थं जपे विनियोगः ॥ गुरुर्बृहस्पतिर्जीवः सुराचार्यो विदांवरः । वागीशो धिषणो दीर्घश्मश्रुः पीताम्बरो युवा ॥ १ ॥ सुधादृष्टिर्ग्रहाधीशो ग्रहपीडापहारकः ।

दयाकरः सौम्यमूर्तिः सुरार्च्यः कुड्मलद्युतिः ॥ २ ॥ लोकपूज्यो लोकगुरुर्नीतिज्ञो नीतिकारकः । तारापतिश्चाङ्गिरसो वेदवैद्यपितामहः ॥ ३ ॥ भक्त्या बृहस्पतिं स्मृत्वा नामान्येतानि यः पठेत् । अरोगी बलवान् श्रीमान् पुत्रवान् स भवेन्नरः ॥ ४ ॥ जीवेद्वर्षशतं मर्त्यो पापं नश्यति नश्यति । यः पूजयेद्गुरुदिने पीतगन्धाक्षताम्बरैः ॥ ५ ॥ पुष्पदीपोपहारैश्च पूजयित्वा बृहस्पतिम् । ब्राह्मणान्भोजयित्वा च पीडाशान्तिर्भवेद्गुरोः ॥ ६ ॥ इति श्रीस्कन्दपुराणे बृहस्पतिस्तोत्रं संपूर्णम् ॥

## ३४३. बृहस्पतिकवचम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीबृहस्पतिकवचस्तोत्रमंत्रस्य ईश्वर ऋषिः, अनुष्टुप् छंदः, गुरुर्देवता, गं बीजं, श्रीशक्तिः, क्लीं कीलकं, गुरुप्रीत्यर्थं जपे विनियोगः ॥ अभीष्टफलदं देवं सर्वज्ञं सुरपूजितम् । अक्षमालाधरं शांतं प्रणमामि बृहस्पतिम् ॥ १ ॥ बृहस्पतिः शिरः पातु ललाटं पातु मे गुरुः । कर्णौ सुरगुरुः पातु नेत्रे मेऽभीष्टदायकः ॥ २ ॥ जिह्वां पातु सुराचार्यो नासां मे वेदपारगः । मुखं मे पातु सर्वज्ञो कंठं मे देवतागुरुः ॥ ३ ॥ भुजावांगिरसः पातु करौ पातु शुभप्रदः । स्तनौ मे पातु वागीशः कुक्षिं मे शुभलक्षणः ॥ ४ ॥ नाभिं देवगुरुः पातु मध्यं पातु सुखप्रदः । कटिं पातु जगद्वंद्य ऊरू मे पातु वाक्पतिः ॥ ५ ॥ जानुजंघे सुराचार्यो पादौ विश्वात्मकस्तथा । अन्यानि यानि चांगानि रक्षेन्मे सर्वतो गुरुः ॥ ६ ॥ इत्येतत्कवचं दिव्यं त्रिसंध्यं यः पठेन्नरः । सर्वान्कामानवाप्नोति सर्वत्र विजयी भवेत् ॥ ७ ॥ इति श्रीब्रह्मयामलोक्तं बृहस्पतिकवचं संपूर्णम् ॥

## ३४४. शुक्रस्तवराजः ।



श्रीगणेशाय नमः ॥ अस्य श्रीशुक्रस्तवराजस्य प्रजापतिर्ऋषिः, अनुष्टुप् छन्दः, शुक्रो देवता, शुक्रप्रीत्यर्थं जपे विनियोगः ॥ नमस्ते भार्गवश्रेष्ठ दैत्यदानवपूजित । वृष्टिरोधप्रकर्त्रे च वृष्टिकर्त्रे नमो नमः ॥ १ ॥ देवयानिपितस्तुभ्यं वेदवेदांगपारग । परेण तपसा शुद्धः शंकरो लोकसुंदरः ॥ २ ॥ प्राप्तो विद्यां जीवनाख्यां तस्मै शुक्रात्मने नमः । नमस्तस्मै भगवते भृगुपुत्राय वेधसे ॥ ३ ॥ तारामंडलमध्यस्थ स्वभासाभासितांबर । यस्योदये जगत्सर्वं मंगलार्हं भवेदिह ॥ ४ ॥ अस्तं याते ह्यरिष्टं स्यात्तस्मै मंगलरूपिणे । त्रिपुरावासिनो दैत्यान् शिवबाणप्रपीडितान् ॥ ५ ॥ विद्ययाऽजीवयच्छुक्रो नमस्ते भृगुनंदन । ययातिगुरवे तुभ्यं नमस्ते कविनंदन ॥ ६ ॥ बलिराज्यप्रदो जीवस्तस्मै जीवात्मने नमः । भार्गवाय नमस्तुभ्यं पूर्वगीर्वाणवंदित ॥ ७ ॥ जीवपुत्राय यो विद्यां प्रादात्तस्मै नमो नमः । नमः शुक्राय काव्याय भृगुपुत्राय धीमहि ॥ ८ ॥ नमः कारणरूपाय नमस्ते कारणात्मने । स्तवराजमिमं

पुण्यं भार्गवस्य महात्मनः ॥ ९ ॥ यः पठेच्छृणुयाद्वापि लभते वांछितं फलम् । पुत्रकामो लभेत्पुत्रान् श्रीकामो लभते श्रियम् ॥ १० ॥ राज्यकामो लभेद्राज्यं स्त्रीकामः स्त्रियमुत्तमाम् । भृगुवारे प्रयत्नेन पठितव्यं समाहितैः ॥ ११ ॥ अन्यवारे तु होरायां पूजयेद्भृगुनन्दनम् । रोगार्तो मुच्यते रोगाद्भयार्तो मुच्यते भयात् ॥ १२ ॥ यद्यत्प्रार्थयते जन्तुस्तत्तत्प्राप्नोति सर्वदा । प्रातःकाले प्रकर्तव्या भृगुपूजा प्रयत्नतः । सर्वपापविनिर्मुक्तः प्राप्नुयाच्छिवसन्निधिम् ॥ १३ ॥ इति श्रीब्रह्मयामले शुक्रस्तवराजः संपूर्णः ॥

## ३४५. शुक्रकवचम् ।

श्रीगणेशाय नमः ॥ मृणालकुन्देन्दुपयोजसुप्रभं पीतांबरं प्रसृतमक्षमालिनम् ॥ समस्तशास्त्रार्थविधिं महांतं ध्यायेत्कविं वांछितमर्थसिद्धये ॥ १ ॥ ॐ शिरो मे भार्गवः पातु भालं पातु ग्रहाधिपः । नेत्रे दैत्यगुरुः पातु श्रोत्रे मे चन्दनद्युतिः ॥ २ ॥ पातु मे नासिकां काव्यो वदनं दैत्यवन्दितः । वचनं चोशनाः पातु कंठं श्रीकंठभक्तिमान् ॥ ३ ॥ भुजौ तेजोनिधिः पातु कुक्षिं पातु मनोव्रजः । नाभिं भृगुसुतः पातु मध्यं पातु महीप्रियः ॥ ४ ॥ कटिं मे पातु विश्वात्मा ऊरू मे सुरपूजितः । जानुं जाड्यहरः पातु जंघे ज्ञानवतां वरः ॥ ५ ॥ गुल्फौ गुणनिधिः पातु पातु पादौ वरांबरः । सर्वाण्यंगानि मे पातु स्वर्णमालापरिष्कृतः ॥ ६ ॥ य इदं कवचं दिव्यं पठति श्रद्धयान्वितः । न तस्य जायते पीडा भार्गवस्य प्रसादतः ॥ ७ ॥ इति श्रीब्रह्मांडपुराणे शुक्रकवचं संपूर्णम् ॥



## ३४६. शनैश्चरस्तवराजः ।



श्रीगणेशाय नमः ॥ नारद उवाच ॥ ध्यात्वा गणपतिं राजा धर्मराजो युधिष्ठिरः । धीरः शनैश्चरस्येमं चकार स्तवमुत्तमम् ॥ १ ॥ शिरो मे भास्करिः पातु भालं छायासुतोऽवतु । कोटराक्षो दृशौ पातु शिखिकण्ठनिभः श्रुती ॥ २ ॥ घ्राणं मे भीषणः पातु मुखं बलिमुखोऽवतु । स्कन्धौ संवर्तकः पातु भुजौ मे भयदोऽवतु ॥ ३ ॥ सौरिर्मे हृदयं पातु नाभिं शनैश्चरोऽवतु । ग्रहराजः कटिं पातु सर्वतो रविनन्दनः ॥ ४ ॥ पादौ मन्दगतिः पातु कृष्णः पात्वखिलं वपुः । रक्षामेतां पठेन्नित्यं सौरेर्नामबलैर्युताम् ॥ ५ ॥ सुखी पुत्री चिरायुश्च स भवेन्नात्र संशयः । सौरिः शनैश्चरः कृष्णो नीलोत्पलनिभः शनिः ॥ ६ ॥ शुष्कोदरो विशालाक्षो दुर्निरीक्ष्यो विभीषणः । शिखिकण्ठनिभो नीलश्छायाहृदयनन्दनः ॥ ७ ॥ कालदृष्टिः कोटराक्षः स्थूलरोमावलीमुखः । दीर्घो निर्मांसगात्रस्तु शुष्को घोरो भयानकः ॥ ८ ॥ नीलांशुः क्रोधनो रौद्रो दीर्घश्मश्रुर्जटाधरः । मन्दो मन्दगतिः खंजो तृप्तः संवर्तको यमः ॥ ९ ॥ ग्रहराजः कराली च सूर्य-

पुत्रो रविः शशी । कुजो बुधो गुरुः काव्यो भानुजः सिंहिकासुतः ॥ १० ॥ केतुर्देवपतिर्बाहुः कृतान्तो नैर्ऋतस्तथा । शशी मरुत् कुबेरश्च ईशानः सुर आत्मभूः ॥ ११ ॥ विष्णुर्हरो गणपतिः कुमारः काम ईश्वरः । कर्ता हर्ता पालयिता राज्येशो राज्यदायकः ॥ १२ ॥ छायासुतः श्यामलाङ्गो धनहर्ता धनप्रदः । क्रूरकर्मविधाता च सर्वकर्मावरोधकः ॥ १३ ॥ तुष्टो रुष्टः कामरूपः कामदो रविनन्दनः । ग्रहपीडाहरः शान्तो नक्षत्रेशो ग्रहेश्वरः ॥ १४ ॥ स्थिरासनः स्थिरगतिर्महाकायो महाबलः । महाप्रभो महाकालः कालात्मा कालकालकः १५ ॥ आदित्यभयदाता च मृत्युरादित्यनन्दनः । शतभिरुक्षदयिता त्रयोदशीतिथिप्रियः ॥ १६ ॥ तिथ्यात्मकस्तिथिगणो नक्षत्रगणनायकः । योगराशिर्मुहूर्तात्मा कर्ता दिनपतिः प्रभुः ॥ १७ ॥ शमीपुष्पप्रियः श्यामस्त्रैलोक्याभयदायकः । नीलवासाः क्रियासिन्धुर्नीलाञ्जनचयच्छविः ॥ १८ ॥ सर्वरोगहरो देवः सिद्धो देवगणस्तुतः । अष्टोत्तरशतं नाम्नां सौरेश्छायासुतस्य यः ॥ १९ ॥ पठेन्नित्यं तस्य पीडा समस्ता नश्यति ध्रुवम् । कृत्वा पूजां पठेन्मर्त्यो भक्तिमान् यः स्तवं सदा ॥ २० ॥ विशेषतः शनिदिने पीडा तस्य विनश्यति । जन्मलग्ने स्थितिर्वापि गोचरे क्रूरराशिगे ॥ २१ ॥ दशासु च गते सौरौ तदा स्तवमिमं पठेत् । पूजयेद्यः शनिं भक्त्या शमीपुष्पाक्षताम्बरैः ॥ २२ ॥ विधाय लोहप्रतिमां नरो दुःखाद्विमुच्यते । बाधा याऽन्यग्रहाणां च यः पठेत्तस्य नश्यति ॥ २३ ॥ भीतो भयाद्विमुच्येत बद्धो मुच्येत बन्धनात् । रोगी रोगाद्विमुच्येत नरः स्तवमिमं पठेत् । पुत्रवान् धनवान् श्रीमान् जायते नात्र संशयः ॥ २४ ॥

नारद उवाच ॥ स्तवं निशम्य पार्थस्य प्रत्यक्षोऽभूत् शनैश्वरः । दत्त्वा राज्ञे वरः कामं शनिश्चान्तर्दधे तदा ॥ २५ ॥ इति श्रीभविष्यपुराणे शनैश्वरस्तवराजः संपूर्णः ॥

## ३४७. शनैश्वरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ दशरथ उवाच ॥ कोणोऽन्तको रौद्रयमोऽथ बभ्रुः कृष्णः शनिः पिंगलमन्दसौरिः । नित्यं स्मृतो यो हरते च पीडां तस्मै नमः श्रीरविनन्दनाय ॥ १ ॥ सुरासुराः किंपुरुषोरगेन्द्रा गन्धर्वविद्याधरपन्नगाश्च । पीड्यन्ति सर्वे विषमस्थितेन तस्मै० ॥ २ ॥ नरा नरेन्द्राः पशवो मृगेन्द्रा वन्याश्च ये कीटपतंगभृंगाः । पीड्यन्ति सर्वे विषमस्थितेन तस्मै० ॥ ३ ॥ देशाश्च दुर्गाणि वनानि यत्र सेनानिवेशाः पुरपत्तनानि । पीड्यन्ति सर्वे विषमस्थितेन तस्मै० ॥ ४ ॥ तिलैर्यवैर्माषगुडान्नदानैर्लोहेन नीलाम्बरदानतो वा । प्रीणाति मन्त्रैर्निजवासरे च तस्मै० ॥ ५ ॥ प्रयागकूले यमुनातटे च सरस्वतीपुण्यजले गुहायाम् । यो योगिनां ध्यानगतोऽपि सूक्ष्मस्तस्मै० ॥ ६ ॥ अन्यप्रदेशात्स्वगृहं प्रविष्टस्तदीयवारे स नरः सुखी स्यात् । गृहाद्गतो यो न पुनः प्रयाति तस्मै० ॥ ७ ॥ स्रष्टा स्वयंभूर्भुवनत्रयस्य त्राता हरीशो हरते पिनाकी । एकस्त्रिधा ऋग्यजुःसाममूर्तिस्तस्मै० ॥ ८ ॥ शन्यष्टकं यः प्रयतः प्रभाते नित्यं सुपुत्रैः पशुबान्धवैश्च । पठेत्तु सौख्यं भुवि भोगयुक्तः प्राप्नोति निर्वाणपदं तदन्ते ॥ ९ ॥ कोणस्थः पिङ्गलो बभ्रुः कृष्णो रौद्रोऽन्तको यमः । सौरिः शनैश्चरो मन्दः पिप्पलादेन संस्तुतः ॥ १० ॥ एतानि दश नामानि प्रातरुत्थाय यः पठेत् । शनैश्चरकृता पीडा न कदाचिद्भविष्यति ॥ ११ ॥ इति श्रीब्रह्माण्डपुराणे श्रीशनैश्चरस्तोत्रं संपूर्णम् ॥

## ३४८. शनिवज्रपञ्जरकवचम् ।

श्रीगणेशाय नमः ॥ नीलांबरो नीलवपुः किरीटी गृध्रस्थितस्त्रासकरो धनुष्मान् । चतुर्भुजः सूर्यसुतः प्रसन्नः सदा मम स्याद्वरदः प्रशान्तः ॥ १ ॥ ब्रह्मा उवाच ॥ शृणुध्वमृषयः सर्वे शनिपीडाहरं महत् । कवचं शनिराजस्य सौरेरिदमनुत्तमम् ॥ २ ॥ कवचं देवतावासं वज्रपंजरसंज्ञकम् । शनैश्चरप्रीतिकरं सर्वसौभाग्यदायकम् ॥ ३ ॥ ॐ श्रीशनैश्चरः पातु भालं मे सूर्यनंदनः । नेत्रे छायात्मजः पातु पातु कर्णौ यमानुजः ॥ ४ ॥ नासां वैवस्वतः पातु मुखं मे भास्करः सदा । स्निग्धकंठश्च मे कंठं भुजौ पातु महाभुजः ॥ ५ ॥ स्कंधौ पातु शनिश्चैव करौ पातु शुभप्रदः । वक्षः पातु यमभ्राता कुक्षिं पात्वसितस्तथा ॥ ६ ॥ नाभिं ग्रहपतिः पातु मंदः पातु कटिं तथा । ऊरू ममांतकः पातु यमो जानुयुगं तथा ॥ ७ ॥ पादौ मंदगतिः पातु सर्वांगं पातु पिप्पलः । अङ्गोपाङ्गानि सर्वाणि रक्षेन् मे सूर्यनंदनः ॥ ८ ॥ इत्येतत्कवचं दिव्यं पठेत्सूर्यसुतस्य यः । न तस्य जायते पीडा प्रीतो भवति सूर्यजः ॥ ९ ॥ व्ययजन्मद्वितीयस्थो मृत्युस्थानगतोऽपि वा । कलत्रस्थो गतो वापि सुप्रीतस्तु सदा शनिः ॥ १० ॥ अष्टमस्थे सूर्यसुते व्यये जन्मद्वितीयगे । कवचं पठते नित्यं न पीडा जायते क्वचित् ॥ ११ ॥ इत्येतत्कवचं दिव्यं सौरेर्यन्निर्मितं पुरा । द्वादशाष्टमजन्मस्थदोषान्नाशयते सदा । जन्मलग्नस्थितान् दोषान् सर्वान्नाशयते प्रभुः ॥ १२ ॥ इति श्रीब्रह्मांडपुराणे ब्रह्मनारदसंवादे शनिवज्रपंजरकवचं संपूर्णम् ॥



## ३४९. राहुस्तोत्रम् ।



श्रीगणेशाय नमः ॥ राहुर्दानवमन्त्री च सिंहिकाचित्तनन्दनः । अर्धकायः सदाक्रोधी चन्द्रादित्यविमर्दनः ॥ १ ॥ रौद्रो रुद्रप्रियो दैत्यः स्वर्भानुर्भानुभीतिदः । ग्रहराजः सुधापायी राकातिथ्यभिलाषुकः ॥ २ ॥ कालदृष्टिः कालरूपः श्रीकण्ठहृदयाश्रयः । विधुंतुदः सैंहिकेयो घोररूपो महाबलः ॥ ३ ॥ ग्रहपीडाकरो दंष्ट्री रक्तनेत्रो महोदरः । पञ्चविंशतिनामानि स्मृत्वा राहुं सदा नरः ॥ ४ ॥ यः पठेन्महती पीडा तस्य नश्यति केवलम् । आरोग्यं पुत्रमतुलां श्रियं धान्यं पशूंस्तथा ॥ ५ ॥ ददाति राहुस्तस्मै यः पठते स्तोत्रमुत्तमम् । सततं पठते यस्तु जीवेद्वर्षशतं नरः ॥ ६ ॥ इति श्रीस्कंदपुराणे राहुस्तोत्रं संपूर्णम् ॥

## ३५०. राहुकवचम् ।

श्रीगणेशाय नमः ॥ प्रणमामि सदा राहुं शूर्पाकारं किरीटिनम् । सैंहिकेयं करालास्यं लोकानामभयप्रदम् ॥ १ ॥ नीलांबरः शिरः पातु ललाटं लोकवंदितः । चक्षुषी पातु मे राहुः श्रोत्रे त्वर्धशरीरवान् ॥ २ ॥ नासिकां मे धूम्रवर्णः शूलपाणिर्मुखं मम । जिह्वां मे सिंहिकासूनुः कंठं मे कठिनांघ्रिकः ॥ ३ ॥ भुजंगेशो भुजौ पातु

नीलमाल्याम्बरः करौ। पातु वक्षःस्थलं मंत्री पातु कुक्षिं विधुंतुदः ॥ ४ ॥ कटिं मे विकटः पातु ऊरू मे सुरपूजितः। स्वर्भानुर्जानुनी पातु जंघे मे पातु जाड्यहा ॥ ५ ॥ गुल्फौ ग्रहपतिः पातु पादौ मे भीषणाकृतिः। सर्वाण्यंगानि मे पातु नीलचन्दनभूषणः ॥ ६ ॥ राहोरिदं कवचमृद्धिदवस्तुदं यो भक्त्या पठत्यनुदिनं नियतः शुचिः सन्। प्राप्नोति कीर्तिमतुलां श्रियमृद्धिमायुरारोग्यमात्मविजयं च हि तत्प्रसादात् ॥ ७ ॥ इति श्रीमहाभारते धृतराष्ट्रसंजयसंवादे द्रोणपर्वणि राहुकवचं संपूर्णम् ॥

## ३५१. केतुपञ्चविंशतिनामस्तोत्रम्।



श्रीगणेशाय नमः ॥ केतुः कालः कलयिता धूम्रकेतुर्विवर्णकः। लोककेतुर्महाकेतुः सर्वकेतुर्भयप्रदः ॥ १ ॥ रौद्रो रुद्रप्रियो रुद्रः क्रूरकर्मा सुगन्धधृक्। पलाशधूमसंकाशश्चित्रयज्ञोपवीतधृक् ॥ २ ॥ तारागणविमर्दी च जैमिनेयो ग्रहाधिपः। पञ्चविंशतिनामानि केतोर्यः सततं पठेत् ॥ ३ ॥ तस्य नश्यति बाधा च सर्वकेतुप्रसादनः। धनधान्यपशूनां च भवेद्वृद्धिर्न संशयः ॥ ४ ॥ इति श्रीस्कन्दपुराणे केतोः पञ्चविंशतिनामस्तोत्रं संपूर्णम् ॥

न्याभ्यां करादिषु ॥ ३२ ॥ कृत्वा यजेद्देवदेवं यत्रन्यस्तमभीष्टदम् । दत्तात्रेय हरे कृष्ण उन्मत्तानन्ददायक ॥ ३३ ॥ दिगम्बर मुने बाल पिशाचज्ञानसागर । आनुष्टुभः शिवार्षोऽयं षड्भुजात्रेयदैवतः ॥३४॥ द्वाभ्यां द्वाभ्यां हृच्छिरसोः शिखायामेकतो गले । द्वाभ्यामेकैकेन दोर्द्वन्द्वये द्वाभ्यां तथाखके ॥ ३५ ॥ विन्यस्य जपिता दोषमुक्ता सर्वोपकारकृत् । तारं वायुं क्रां कामं क्रुं हां दुर्गां हूं च विद्धि सौः ॥ ३६ ॥ दत्तात्रेयं चतुर्थ्यन्तं स्वाहान्तं षोडशाक्षरम् । वायुस्थाने तु वाग्बीजं नमोऽन्ते योजयाथवा ॥ ३७ ॥ स्वाहैकत्र नमोऽन्यत्र शक्तिर्बीजं च कीलकम् । तारश्चतुर्थी गायत्री मंत्रराजः शिवोदितः ॥ ३८ ॥ हृदि द्वे के त्रीणि शिखायां चैकं कवचे दृशोः । चतुर्थीमन्त्यमस्त्रे च विन्यस्य जपकामदम् ॥ ३९ ॥ सच्चिदानन्दस्वरूपी सुखी मुक्तो भवत्यतः । सिद्धगन्धर्वादिसङ्गी लक्षजाप्यष्टसिद्धिभाक् ॥ ४० ॥ त्रिदेवलोकसंचारी कोटिजापि च दत्तवत् । दशकोटिजपी साक्षाज्जरामरणवर्जितः ॥ ४१ ॥ द्व्यष्टकोटिजपी सिद्धः परकायगतादिकृत् । मन्त्रशक्तिरियं श्लोका असिगीता इहाप्यमी ॥ ४२ ॥ खड्गस्तम्भो जलस्तम्भः सेनास्तम्भस्तथैव च । इच्छासिद्धिर्वशित्वं च दिक्पालैः सह भाषणम् ॥ ४३ ॥ वायुवद्गतिरित्याहुराह्लादित्वं च चन्द्रवत् । अग्निवत्सर्वभक्षत्वं नित्यतृप्तत्वमेव च ॥ ४४ ॥ सर्वभाषापरिज्ञानं सर्वचित्तावबोधनम् । वापीकूपसमुद्राणां पर्वतानां च चालनम् ॥ ४५ ॥ दत्तात्रेयमयः स्वच्छो भवेत्स व्यासवत्कविः । इतीदं षोडशार्णस्य माहात्म्यं तत्प्रयत्नतः ॥ ४६ ॥ प्राणो देयो मनश्चक्षुश्छित्त्वा देयं शिरो वपुः । न देयः षोडशार्णोऽसौ सच्छिष्याय महात्मने ॥ ४७ ॥ महागुणव्रते देयः कुप्येत प्रभुरन्यथा । मालाकमण्डलुखाद्यत्रिशूले शङ्खचक्रके ॥ ४८ ॥ दधानमत्रिवरदं दत्तात्रेयं त्र्यधीश्वरम् । ध्यात्वेत्थं

विधिवन्मन्त्रजाप्युक्तफलभाग्भवेत् ॥ ४९ ॥ ॐ नमो भगवान्दत्तात्रेयः स्मरणमात्रसंतुष्टो महाभयनिवारणो महाज्ञानप्रदः ॥ ५० ॥ चिदानन्दात्मा बालोन्मत्तपिशाचवेषो महायोग्यवधूतोऽनसूयानन्दवर्धनोऽत्रिपुत्रः ॥ ५१ ॥ ॐ भवबन्धविमोचनो ह्रीं सर्वभूतिदः क्रों असाध्याकर्षण ऐं वाक्प्रदः ॥ ५२ ॥ क्लींजगत्त्रयवशीकरणः सौः सर्वमनःक्षोभणः श्रींमहासंपत्प्रदो ग्लौं भूमण्डलाधिपत्यप्रदः ॥ ५३ ॥ द्रां चिरजीवी वषड्वशीकुरु वौषडाकर्षय हुं विद्वेषय फडुच्चाटय ठः ठः ॥ ५४ ॥ स्तम्भय खें खें मारय नमः संपन्नय स्वाहा पोषय परमन्त्रपरयन्त्रपरतन्त्राणि ॥ ५५ ॥ छिन्धि ग्रहान्निवारय व्याधीन्विनाशय दुःखं हर दारिद्र्यं विद्रावय देहं पोषय ॥ ५६ ॥ चित्तं तोषय सर्वमन्त्रस्वरूपः सर्वतन्त्रस्वरूपः सर्वपल्लवस्वरूपः ॥ ५७ ॥ ॐ नमो महासिद्धः स्वाहान्तो मालामन्त्रः । प्रथमान्तां चतुर्थ्यां द्विः क्रियाश्च व्याहरेत् ॥ ५८ ॥ विष्णुनोक्ता इमे मन्त्रा ब्रह्मणे कामधेनवः । प्रयोगग्रहभूतारिकुदृग्रुक्तापभीतिहाः ॥ ५९ ॥ कामिनोऽभीष्टफलदा देवसांनिध्यकारकाः । तद्वच्च वज्रकवचं दत्तनामसहस्रकम् ॥ ६० ॥ एषामन्यतमेनेशं यो वैदिकविधानतः । उपास्ते चित्तशुद्ध्या स मुच्यतेऽत्र परत्र वा ॥ ६१ ॥ दत्तात्रेयनिवासं तदाचण्डालश्वगोखरम् । ब्रह्मादिस्तम्बपर्यन्तं समदृक् प्रणमेत्सुधीः ॥ ६२ ॥ चालको भासकोऽस्त्येषां सच्चिदात्मा स्वयंप्रभः । अस्ति भाति प्रियत्वेन भगवानेव नापरः ॥ ६३ ॥ यथाधिपे वशा भृत्या निर्माना ईश्वरे तथा । विदध्यात्स्वामनो दास्यं निरीहं द्वैतदर्शने ॥ ६४ ॥ सख्योः सख्यं यथा लोके निरीपेक्षं तथात्मनः । परात्मनापि सततं समाधेः प्राक् प्रकल्पयेत् ॥ ६५ ॥ कर्तृत्वादि न मत्येके शुद्धे देहादिसाक्षिणि । इतीक्षणमसंदिग्धं सर्वस्वात्मनिवेदनम् ॥ ६६ ॥ अतीत्य वरदेशादीन् काश्यां

संतोष्य दीपकः । वेदधर्मगुरुं रुग्णं कष्टेन हि महामतिः ॥ ६७ ॥ श्रीदत्तलीलाश्रवणं नयाचे तुष्ट एव सः । गुरुः शिष्याय यत्प्राह मुक्त्यै तत्सार उच्यते ॥ ६८ ॥ इति श्रीदत्तात्रेयभक्तिनिरूपणस्तोत्रं संपूर्णम् ॥

## ३६६. गुरुवरप्रार्थनापंचरत्नस्तोत्रम् ।

श्रीगणेशाय नमः ॥ यं विज्ञातुं भृगुर्यः स्वापितरमुपगतः पंचवारं यथावज्ज्ञादेवामृतासेः सततमनुपमं चिद्विवेकादि लब्ध्वा । तस्मै तुभ्यं नमः श्रीहरिहरगुरवे सच्चिदानंदमुक्तानंताद्वैतप्रतीते म कुरु कितवतां पाहि मां दीनबंधो ॥ १ ॥ यस्माद्दृश्यस्य जन्मस्थितिविलयमिमे तैत्तिरीयाः पठंति स्वाविद्यामात्रयोगात्सुखशयनतले मुख्यतः स्वप्नवच्च । तस्मै० ॥ २ ॥ यो वेदांतैकलभ्यः श्रुतिषु नियमितस्तैत्तिरीयैश्च काण्वैरन्यैरप्यानिषेकादुदयपरिमितं चारुसंस्कारभाजाम् । तस्मै० ॥ ३ ॥ यस्मिन्नवावसन्नाः सकलनिगमवाङ्मौलयः सुप्तपुंसि प्रोक्तं तन्नाम यद्वन्निजमहिमगतध्वांततत्कार्यरूपे । तस्मै० ॥ ४ ॥ चित्त्वात्संकल्पपूर्वं सृजति जगदिदं योगिवन्मायया यः स्वात्मन्येवाद्वितीये परमसुखदृशि स्वप्नवद्भूम्नि नित्ये । तस्मै० ॥ ५ ॥ इत्यच्युतविरचितं गुरुवरप्रार्थनापंचरत्नस्तोत्रं संपूर्णम् ॥

## ३६७. दक्षिणामूर्तिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ विश्वं दर्पणदृश्यमाननगरीतुल्यं निजांतर्गतं पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया । यः साक्षी कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ १ ॥ बीजस्यांतरिवांकुरो जगदिदं प्राङ्निर्विकल्पं पुनर्मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् । मायावीव विजृंभयत्यपि महायोगीव यः स्वेच्छया तस्मै श्रीगुरु० ॥ २ ॥

यस्यैव स्फुरणं सदात्मकमसत्कल्पार्थकं भासते साक्षात्तत्त्वमसीति वेदवचसा यो बोधयत्याश्रितान् । यत्साक्षात्करणाद्भवेन्न पुनरावृत्ति-र्भवांभोनिधौ तस्मै श्रीगुरु० ॥ ३ ॥ नानाछिद्रघटोदरस्थितमहादीप-प्रभाभास्वरं ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पंदते । जानामीति तमेव भांतमनुभात्येतत्समस्तं जगत्तस्मै श्रीगुरु० ॥ ४ ॥ देहप्राणमपींद्रियाण्यपि चलां बुद्धिं च शून्यं विदुः स्त्रीबालांधजडोप-मास्त्वहमिति भ्रांता भृशं वादिनः । मायाशक्तिविलासकल्पितमहा-व्यामोहसंहारिणे तस्मै श्रीगुरु० ॥ ५ ॥ राहुग्रस्तदिवाकरेंदुसदृशो मायासमाच्छादनात्सन्मात्रः करणोपसंहरणतो योऽभूत्सुषुप्तः पुमान् । प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते तस्मै श्रीगुरु० ॥ ६ ॥ बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि व्यावृत्तास्वनुवर्तमा-नमहमित्यंतः स्फुरंतं सदा । स्वात्मानं प्रकटीकरोति भजतां यो मद्रया तस्मै श्रीगु० ॥ ७ ॥ विश्वं पश्यति कार्यकारणतया स्वस्वामिसंबंधतः शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः । स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामितस्तस्मै श्रीगुरु० ॥८॥ भूरम्भांस्यनलोऽनि-लोंऽबरमहर्नाथोहिमांशुः पुमानित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टम् । नान्यत्किंचन विद्यते विमृशतां यस्मात्परस्माद्विभोस्तस्मै श्रीगुरु० ॥ ९ ॥ सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिन्स्तवे तेनास्य श्रवणात्तथार्थमननाद्ध्यानाच्च संकीर्तनात् । सर्वात्मत्वमहावि-भूतिसहितं स्यादीश्वरत्वं स्वतः सिद्ध्येत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्या-हतम् ॥ १० ॥ वटविटपिसमीपे भूमिभागे निषण्णं सकलमुनिजनानां ज्ञानदातारमारात् । त्रिभुवनगुरुमीशं दक्षिणामूर्तिदेवं जननमरण-दुःखच्छेददक्षं नमामि ॥ ११ ॥ चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा । गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः ॥ १२ ॥

ॐ नमः प्रणवार्थाय शुद्धज्ञानैकमूर्तये। निर्मलाय प्रशांताय दक्षिणामूर्तये नमः ॥ १३ ॥ निधये सर्वविद्यानां भिषजे भवरोगिणाम्। गुरवे सर्वलोकानां दक्षिणामूर्तये नमः ॥ १४ ॥ मौनव्याख्याप्रकटितपरब्रह्मतत्त्वं युवानं वर्षिष्ठांतेवसदृषिगणैरावृतं ब्रह्मनिष्ठैः। आचार्येन्द्रं करकलितचिन्मुद्रमानंदरूपं स्वात्मारामं मुदितवदनं दक्षिणामूर्तिमीडे ॥ १५ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं दक्षिणामूर्तिस्तोत्रं संपूर्णम् ॥

## ३६८. श्रीदत्तात्रेयवज्रकवचम्।

श्रीगणेशाय नमः ॥ श्रीदत्तात्रेयाय नमः ॥ ऋषयः ऊचुः ॥ कथं संकल्पसिद्धिः स्याद्वेदव्यास कलौ युगे। धर्मार्थकाममोक्षाणां साधनं किमुदाहृतम् ॥ १ ॥ व्यास उवाच ॥ शृण्वन्तु ऋषयः सर्वे शीघ्रं संकल्पसाधनम्। सकृदुच्चारमात्रेण भोगमोक्षप्रदायकम् ॥ २ ॥ गौरीशृंगे हिमवतः कल्पवृक्षोपशोभितम्। दीप्ते दिव्यमहारत्नहेममंडपमध्यगम् ॥ ३ ॥ रत्नसिंहासनासीनं प्रसन्नं परमेश्वरम्। मंदस्मितमुखांभोजं शंकरं प्राह पार्वती ॥ ४ ॥ श्रीदेव्युवाच ॥ देवदेव महादेव लोकशंकर शंकर। मंत्रजालानि सर्वाणि यंत्रजालानि कृत्स्नशः ॥ ५ ॥ तंत्रजालान्यनेकानि मया त्वत्तः श्रुतानि वै। इदानीं द्रष्टुमिच्छामि विशेषेण महीतलम् ॥ ६ ॥ इत्युदीरितमाकर्ण्य पार्वत्या परमेश्वरः। करेणामृज्य संतोषात्पार्वतीं प्रत्यभाषत ॥ ७ ॥ मयेदानीं त्वया सार्धं वृषमारुह्य गम्यते। इत्युक्त्वा वृषमारुह्य पार्वत्या सह शंकरः ॥ ८ ॥ ययौ भूमंडलं द्रष्टुं गौर्याश्चित्राणि दर्शयन्। क्वचित् विंध्याचलप्रान्ते महारण्ये सुदुर्गमे ॥ ९ ॥ तत्र व्याहर्तुमायान्तं भिल्लं परशुधारिणम्। वध्यमानं महाव्याघ्रं नखदंष्ट्राभिरावृतम् ॥ १० ॥ अतीव चित्रचारित्र्यं वज्रकायसमायुतम्। अप्रयत्नमनायासमखिलं

सुखमास्थितम् ॥ ११ ॥ पलायन्तं मृगं पश्चाद्व्याघ्रो भीत्या पलायितः। एतदाश्चर्यमालोक्य पार्वती प्राह शंकरम् ॥ १२ ॥ श्रीपार्वत्युवाच ॥ किमाश्चर्यं किमाश्चर्यमग्रे शंभो निरीक्ष्यताम्। इत्युक्तः स ततः शंभुर्दृष्ट्वा प्राह पुराणवित् ॥ १३ ॥ श्रीशंकर उवाच ॥ गौरि वक्ष्यामि ते चित्रमवाङ्मानसगोचरम् । अदृष्टपूर्वमस्माभिर्नास्ति किंचिन्न कुत्रचित् ॥ १४ ॥ मया सम्यक् समासेन वक्ष्यते शृणु पार्वति। अयं दूरश्रवा नाम भिल्लः परमधार्मिकः ॥ १५ ॥ समित्कुशप्रसूनानि कंदमूलफलादिकम्। प्रत्यहं विपिनं गत्वा समादाय प्रयासतः ॥ १६ ॥ प्रिये पूर्वं मुनींद्रेभ्यः प्रयच्छति न वांछति। तेऽपि तस्मिन्नपि दयां कुर्वते सर्वमौनिनः ॥ १७ ॥ दलादनो महायोगी वसन्नेव निजाश्रमे । कदाचिदस्मरत् सिद्धं दत्तात्रेयं दिगम्बरम् ॥ १८ ॥ दत्तात्रेयः स्मर्तृगामी चेतिहासं परीक्षितुम्। तत्क्षणात्सोऽपि योगींद्रो दत्तात्रेयः समुत्थितः ॥ १९ ॥ तं दृष्ट्वाऽऽश्चर्यतोषाभ्यां दलादनमहामुनिः । संपूज्याग्रे निषीदन्तं दत्तात्रेयमुवाच तम् ॥ २० ॥ मयोपहूतः संप्राप्तो दत्तात्रेय महामुने। स्मर्तृगामी त्वमित्येतत् किंवदन्ती परीक्षितुम् ॥ २१ ॥ मयाद्य संस्मृतोऽसि त्वमपराधं क्षमस्व मे। दत्तात्रेयो मुनिं प्राह मम प्रकृतिरीदृशी ॥ २२ ॥ अभक्त्या वा सुभक्त्या वा यः स्मरेन्मामनन्यधीः । तदानीं तमुपागत्य ददामि तदभीप्सितम् ॥ २३ ॥ दत्तात्रेयो मुनिं प्राह दलादनमुनीश्वरम्। यदिष्टं तद्वृणीष्व त्वं यत् प्राप्तोऽहं त्वया स्मृतः ॥ २४ ॥ दत्तात्रेयं मुनिः प्राह मया किमपि नोच्यते। त्वच्चित्ते यत्स्थितं तन्मे प्रयच्छ मुनिपुंगव ॥ २५ ॥ श्रीदत्तात्रेय उवाच ॥ ममास्ति वज्रकवचं गृहाणेत्यवदन्मुनिम् । तथेत्यंगीकृतवते दलादमुनये मुनिः ॥ २६ ॥ स्ववज्रकवचं प्राह

ऋषिच्छन्दःपुरःसरम् । न्यासं ध्यानं फलं तत्र प्रयोजनमशेषतः ॥ २७ ॥ अस्य श्रीदत्तात्रेयवज्रकवचस्तोत्रमंत्रस्य, किरातरूपी महारुद्र ऋषिः, अनुष्टुप् छन्दः, श्रीदत्तात्रेयो देवता, द्रां बीजम्, आं शक्तिः, क्रौं कीलकम्, ॐ आत्मने नमः ॥ ॐ द्रीं मनसे नमः ॥ ॐ आं द्रीं श्रीं सौः ॐ क्लां क्लीं क्लूं क्लैं क्लौं क्लः ॥ श्रीदत्तात्रेयप्रसाद-सिद्ध्यर्थे जपे विनियोगः ॥ ॐ द्रां अंगुष्ठाभ्यां नमः ॐ द्रीं तर्ज-नीभ्यां नमः ॥ ॐ द्रूं मध्यमाभ्यां नमः ॥ ॐ द्रैं अनामिकाभ्यां नमः ॥ ॐ द्रौं कनिष्ठिकाभ्यां नमः ॥ ॐ द्रः करतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादिन्यासः ॥ ॐ भूर्भुवःस्वरोमिति दिग्बंधः ॥ अथ ध्यानम् ॥ जगदंकुरकंदाय सच्चिदानंदमूर्तये । दत्तात्रेयाय योगीन्द्रचन्द्राय परमात्मने ॥ १ ॥ कदा योगी कदा भोगी कदा नग्नः पिशाचवत् । दत्तात्रेयो हरिः साक्षाद्भुक्तिमुक्तिप्रदायकः ॥ २ ॥ वाराणसीपुरस्नायी कोल्हापुरजपादरः । माहुरीपुरभिक्षाशी सह्यशायी दिगंबरः ॥ ३ ॥ इन्द्रनीलसमाकारश्चन्द्रकांतिसमद्युतिः । वैडूर्यसदृशस्फूर्तिश्चलत्किंचिज्जटाधरः ॥ ४ ॥ स्निग्धधावल्ययुक्ता-क्षोऽत्यंतनीलकनीनिकः । भ्रूवक्षःश्मश्रुनीलांकः शशांकसदृशाननः ॥ ५ ॥ हासनिर्जितनीहारः कंठनिर्जितकंबुकः । मांसलांसो दीर्घ-बाहुः पाणिनिर्जितपल्लवः ॥ ६ ॥ विशालपीनवक्षाश्च ताम्रपाणि-र्दलोदरः । पृथुलश्रोणिललितो विशालजघनस्थलः ॥ ७ ॥ रंभास्तं-भोपमानोरुर्जानुपूर्वैकजंघकः । गूढगुल्फः कूर्मपृष्ठो लसत्पादोपरि-स्थलः ॥ ८ ॥ रक्तारविंदसदृशरमणीयपदाधरः । चर्माम्बरधरो योगी स्मर्तृगामी क्षणे क्षणे ॥ ९ ॥ ज्ञानोपदेशनिरतो विपद्धरण-दीक्षितः । सिद्धासनसमासीन ऋजुकायो हसन्मुखः ॥ १० ॥ वाम-हस्तेन वरदो दक्षिणेनाभयंकरः । बालोन्मत्तपिशाचीभिः क्वचिद्युक्तः

परीक्षितः ॥ ११ ॥ त्यागी भोगी महायोगी नित्यानन्दो निरंजनः । सर्वरूपी सर्वदाता सर्वगः सर्वकामदः ॥ १२ ॥ भस्मोद्धूलितसर्वाङ्गो महापातकनाशनः । भुक्तिप्रदो मुक्तिदाता जीवन्मुक्तो न संशयः ॥ १३ ॥ एवं ध्यात्वाऽनन्यचित्तो मद्वज्रकवचं पठेत् । मामेव पश्यन्सर्वत्र स मया सह संचरेत् ॥ १४ ॥ दिगंबरं भस्मसुगंधलेपनं चक्रं त्रिशूलं डमरुं गदायुधम् । पद्मासनं योगिमुनीन्द्रवंदितं दत्तेति नामस्मरणेन नित्यम् ॥ १५ ॥ ( अथ पंचोपचारैः संपूज्य, ॐ द्राम् इति १०८ वारं जपेत् ) ॐ दत्तात्रेयः शिरः पातु सहस्राब्जेषु संस्थितः । भालं पात्वानसूयेयश्चंद्रमंडलमध्यगः ॥ १ ॥ कूर्चं मनोमयः पातु हं क्षं द्विदलपद्मभूः । ज्योतीरूपोऽक्षिणी पातु पातु शब्दात्मकः श्रुती ॥ २ ॥ नासिकां पातु गंधात्मा मुखं पातु रसात्मकः । जिह्वां वेदात्मकः पातु दंतोष्ठौ पातु धार्मिकः ॥ ३ ॥ कपोलावत्रिभूः पातु पात्वशेषं ममात्मवित् । स्वरात्मा षोडशाराब्जस्थितः स्वात्माऽवताद्गलम् ॥ ४ ॥ स्कन्धौ चन्द्रानुजः पातु भुजौ पातु कृतादिभूः । जत्रुणी शत्रुजित् पातु पातु वक्षःस्थलं हरिः ॥ ५ ॥ कादिठांतद्वादशारपद्मगो मरुदात्मकः । योगीश्वरेश्वरः पातु हृदयं हृदयस्थितः ॥ ६ ॥ पार्श्वे हरिः पार्श्ववर्ती पातु पार्श्वस्थितः स्मृतः । हठयोगादियोगज्ञः कुक्षी पातु कृपानिधिः ॥ ७ ॥ डकारादिफकारान्तदशारसरसीरुहे । नाभिस्थले वर्तमानो नाभिं वह्न्यात्मकोऽवतु ॥ ८ ॥ वह्नितत्त्वमयो योगी रक्षतान्मणिपूरकम् । कटिं कटिस्थब्रह्मांडवासुदेवात्मकोऽवतु ॥ ९ ॥ वकारादिलकारान्तषट्पत्रांबुजबोधकः । जलतत्त्वमयो योगी स्वाधिष्ठानं ममावतु ॥ १० ॥ सिद्धासनसमासीन ऊरू सिद्धेश्वरोऽवतु । वादिसांतचतुष्पत्रसरोरुहनिबोधकः ॥ ११ ॥

मूलाधारं महीरूपो रक्षताद्वीर्यनिग्रही । पृष्ठं च सर्वतः पातु जानुन्यस्तकरांबुजः ॥ १२ ॥ जंघे पात्ववधूतेंद्रः पात्वंघ्री तीर्थपावनः । सर्वांगं पातु सर्वात्मा रोमाण्यवतु केशवः ॥ १३ ॥ चर्म चर्मांबरः पातु रक्तं भक्तिप्रियोऽवतु । मांसं मांसकरः पातु मज्जां मज्जात्मकोऽवतु ॥ १४ ॥ अस्थीनि स्थिरधीः पायान्मेधां वेधाः प्रपालयेत् । शुक्रं सुखकरः पातु चित्तं पातु दृढाकृतिः ॥ १५ ॥ मनोबुद्धिमहंकारं हृषीकेशात्मकोऽवतु । कर्मेंद्रियाणि पात्वीशः पातु ज्ञानेंद्रियाण्यजः ॥ १६ ॥ बंधून् बंधूत्तमः पायाच्छत्रुभ्यः पातु शत्रुजित् : गृहारामधनक्षेत्रपुत्रादीञ्छंकरोऽवतु ॥ १७ ॥ भार्यां प्रकृतिवित् पातु पश्वादीन्पातु शार्ङ्गभृत् । प्राणान्पातु प्रधानज्ञो भक्ष्यादीन्पातु भास्करः ॥ १८ ॥ सुखं चंद्रात्मकः पातु दुःखात् पातु पुरांतकः । पशून्पशुपतिः पातु भूतिं भूतेश्वरो मम ॥ १९ ॥ प्राच्यां विषहरः पातु पात्वाग्नेय्यां मखात्मकः । याम्यां धर्मात्मकः पातु नैर्ऋत्यां सर्ववैरिहृत् ॥ २० ॥ वराहः पातु वारुण्यां वायव्यां प्राणदोऽवतु । कौबेर्यां धनदः पातु पात्वैशान्यां महागुरुः ॥ २१ ॥ ऊर्ध्वं पातु महासिद्धः पात्वधस्ताज्जटाधरः । रक्षाहीनं तु यत्स्थानं रक्षत्वादिमुनीश्वरः ॥ २२ ॥ मालामंत्रजपः ॥ हृदयादिन्यासः ॥ एतन्मे वज्रकवचं यः पठेच्छृणुयादपि । वज्रकायश्चिरंजीवी दत्तात्रेयोऽहमब्रुवम् ॥ २३ ॥ त्यागी भोगी महायोगी सुखदुःखविवर्जितः । सर्वत्रसिद्धसंकल्पो जीवन्मुक्तोऽद्य वर्तते ॥ २४ ॥ इत्युक्त्वान्तर्दधे योगी दत्तात्रेयो दिगंबरः । दलादनोऽपि तज्जप्त्वा जीवन्मुक्तः स वर्तते ॥ २५ ॥ भिल्लो दूरश्रवा नाम तदानीं श्रुतवानिदम् । सकृच्छ्रवणमात्रेण वज्राङ्गोऽभवदप्यसौ ॥ २६ ॥ इत्येतद्वज्रकवचं दत्तात्रेयस्य योगिनः । श्रुत्वाशेषं शम्भुमुखात् पुनरप्याह पार्वती ॥ २७ ॥ पार्वत्युवाच ॥

एतत्कवचमाहात्म्यं वद विस्तरतो मम । कुत्र केन कदा जाप्यं किं यज्जाप्यं कथं कथम् ॥ २८ ॥ उवाच शंभुस्तत्सर्वं पार्वत्या विनयोदितम् ॥ श्रीशिव उवाच ॥ शृणु पार्वति वक्ष्यामि समाहितमनाविलम् ॥ २९ ॥ धर्मार्थकाममोक्षाणामिदमेव परायणम् । हस्त्यश्वरथपादातिसर्वैश्वर्यप्रदायकम् ॥ ३० ॥ पुत्रमित्रकलत्रादिसर्वसंतोषसाधनम् । वेदशास्त्रादिविद्यानां निधानं परमं हि तत् ॥ ३१ ॥ सङ्गीतशास्त्रसाहित्यसत्कवित्वविधायकम् । बुद्धिविद्यास्मृतिप्रज्ञामतिप्रौढिप्रदायकम् ॥ ३२ ॥ सर्वसंतोषकरणं सर्वदुःखनिवारणम् ॥ शत्रुसंहारकं शीघ्रं यशःकीर्तिविवर्धनम् ॥ ३३ ॥ अष्टसंख्या महारोगाः सन्निपातास्त्रयोदश । षण्णवत्यक्षिरोगाश्च विंशतिर्मेहरोगकाः ॥ ३४ ॥ अष्टादश तु कुष्ठानि गुल्मान्यष्टविधान्यपि । अशीतिर्वातरोगाश्च चत्वारिंशत्तु पैत्तिकाः ॥ ३५ ॥ विंशति श्लेष्मरोगाश्च क्षयचातुर्थिकादयः । मंत्रयंत्रकुयोगाद्याः कल्पतंत्रादिनिर्मिताः ॥ ३६ ॥ ब्रह्मराक्षसवेतालकूष्मांडादिग्रहोद्भवाः । संग्रजादेशकालस्थास्तापत्रयसमुत्थिताः ॥ ३७ ॥ नवग्रहसमुद्भूता महापातकसंभवाः । सर्वे रोगाः प्रणश्यन्ति सहस्रावर्तनाद्ध्रुवम् ॥ ३८ ॥ अयुतावृत्तिमात्रेण वंध्या पुत्रवती भवेत् । अयुतद्वितयावृत्त्या ह्यपमृत्युजयो भवेत् ॥ ३९ ॥ अयुतत्रितयाच्चैव खेचरत्वं प्रजायते । सहस्रादयुतादर्वाक् सर्वकार्याणि साधयेत् ॥ ४० ॥ लक्षावृत्त्या कार्यसिद्धिर्भवत्येव न संशयः ॥ ४१ ॥ विषवृक्षस्य मूलेषु तिष्ठन् वै दक्षिणामुखः । कुरुते मासमात्रेण वैरिणी विकलेंद्रियम् ॥ ४२ ॥ औदुंबरतरोर्मूले वृद्धिकामेन जाप्यते । श्रीवृक्षमूले श्रीकामी तिंतिणी शांतिकर्मणि ॥ ४३ ॥ ओजस्कामोऽश्वत्थमूले स्त्रीकामैः सहकारके । ज्ञानार्थी तुलसीमूले गर्भगेहे सुतार्थिभिः ॥ ४४ ॥

धनार्थिभिस्तु सुक्षेत्रे पशुकामैस्तु गोष्ठके । देवालये सर्वकामैस्तत्काले सर्वदर्शितम् ॥ ४५ ॥ नाभिमात्रजले स्थित्वा भानुमालोक्य यो जपेत् । युद्धे वा शास्त्रवादे वा सहस्रेण जयो भवेत् ॥ ४६ ॥ कण्ठमात्रे जले स्थित्वा यो रात्रौ कवचं पठेत् । ज्वरापस्मारकुष्ठादितापज्वरनिवारणम् ॥ ४७ ॥ यत्र यत्स्यात्स्थिरं यद्यत्प्रसन्नं तन्निवर्तते । तेन तत्र हि जप्तव्यं ततः सिद्धिर्भवेद्ध्रुवम् ॥ ४८ ॥ इत्युक्तवान् च शिवो गौर्यै रहस्यं परमं शुभम् । यः पठेत् वज्रकवचं दत्तात्रेयसमो भवेत् ॥ ४९ ॥ एवं शिवेन कथितं हिमवत्सुतायै प्रोक्तं दलादमुनयेऽत्रिसुतेन पूर्वम् । यः कोऽपि वज्रकवचं पठतीह लोके दत्तोपमश्चरति योगिवरश्चिरायुः ॥ ५० ॥ इति श्रीरुद्रयामले हिमवत्खंडे उमामहेश्वरसंवादे श्रीदत्तात्रेयवज्रकवचस्तोत्रं संपूर्णम् ॥

## ३६९. श्रीदत्तशरणाष्टकम् ।

श्रीपादश्रीवल्लभ त्वं सदैव श्रीदत्तास्मान्पाहि देवाधिदेव । भावग्राह्यक्लेशहारिन्सुकीर्ते घोरात्कष्टादुद्धरास्मान्नमस्ते ॥ १ ॥ त्वं नो माता त्वं पिताप्तोऽधिपस्त्वं त्राता योगक्षेमकृत्सद्गुरुस्त्वम् । त्वं सर्वस्वं नो प्रभो विश्वमूर्ते घोरात्कष्टा० ॥ २ ॥ पापं तापं व्याधिमाधिं च दैन्यं भीतिं क्लेशं त्वं हराशु त्वदन्यम् । त्रातारं नो वीक्ष ईशास्तजूर्ते घोरात्कष्टा० ॥ ३ ॥ नान्यस्त्राता नापि दाता न भर्ता त्वत्तो देव त्वं शरण्योऽकहर्ता । कुर्वात्रेयानुग्रहं पूर्णराते घोरात्कष्टा० ॥ ४ ॥ धर्मे प्रीतिं सन्मतिं देवभक्तिं सत्संगाप्तिं देहि भुक्तिं च मुक्तिम् । भावासक्तिं चाखिलानंदमूर्ते घोरा० ॥ ५ ॥ श्लोकपंचकमेतद्यो लोकमंगलवर्धनम् । प्रपठेन्नियतो भक्त्या स श्रीदत्तप्रियो भवेत् ॥ ६ ॥ इति वासुदेवानन्दसरस्वतियतिविरचितं दत्तशरणाष्टकस्तोत्रं संपूर्णम् ॥



श्रीमद्भागवतपुराणान्तर्गतानि

# ❀ दशावतारस्तोत्राणि ❀

## ३७०. मत्स्यस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नूनं त्वं भगवान्साक्षाद्धरिर्नारायणोऽव्ययः । अनुग्रहाय भूतानां धत्से रूपं जलौकसाम् ॥ १ ॥ नमस्ते पुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर । भक्तानां नः प्रपन्नानां मुख्यो ह्यात्मगतिर्विभो ॥ २ ॥ सर्वे लीलावतारांस्ते भूतानां भूतिहेतवः । ज्ञातुमिच्छाम्यदो रूपं यदर्थं भवता धृतम् ॥ ३ ॥ न तेऽरविन्दाक्ष पदोपसर्पणं मृषा भवेत्सर्वसुहृत्प्रियात्मनः । यथेतरेषां पृथगात्मनां सतामदीदृशो यद्वपुरद्भुतं हि नः ॥ ४ ॥ इति श्रीमद्भागवतपुराणांतर्गतं मत्स्यस्तोत्रं संपूर्णम् ॥

## ३७१. कूर्मस्तोत्रम् ।

श्रीगणेशाय नमः ॥ देवा ऊचुः ॥ नमाम ते देव पदारविंदं प्रपन्नतापोपशमातपत्रम् । यन्मूलकेता यतयोऽजसोरुसंसारदुःखं बहिरुत्क्षिपंति ॥ १ ॥ धातर्यदस्मिन्भव ईश जीवास्तापत्रयेणोपहता न शर्म । आत्मँल्लभंते भगवंस्तवांघ्रिच्छायां सविद्यामत आश्रयेम ॥ २ ॥ मार्गंति यत्ते मुखपद्मनीडैश्छंदःसुपर्णैर्ऋषयो विविक्ते । यस्याघमर्षोदसरिद्वरायाः पदं पदं तीर्थपदः प्रपन्नाः ॥ ३ ॥ यच्छ्रद्धया श्रुतवत्या च भक्त्या संमृज्यमाने हृदयेऽवधाय । ज्ञानेन वैराग्यबलेन धीरा व्रजेम तत्तेऽघ्रिसरोजपीठम् ॥ ४ ॥ विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदांबुजं ते । व्रजेम सर्वे शरणं यदीश स्मृतं प्रयच्छत्यभयं स्वपुंसाम् ॥ ५ ॥ यत्सानुबंधेऽसति देहगेहे ममाह-

मित्यूढदुराग्रहाणाम् । पुंसां सुदूरं वसतोऽपि पुर्यां भजेम तत्ते भगवन् पदाब्जम् ॥ ६ ॥ तान्वा असद्वृत्तिभिरक्षिभिर्ये पराहृतांतर्मनसः परेश । अथो न पश्यंत्युरुगाय नूनं ये ते पदन्यासविलासलक्ष्म्याः ॥ ७ ॥ पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये । वैराग्यसारं प्रतिलभ्य बोधं यथांजसाऽन्वीयुरकुण्ठधिष्ण्यम् ॥ ८ ॥ तथापरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् । त्वामेव धीराः पुरुषं विशंति तेषां श्रमः स्यान्न तु सेवया ते ॥ ९ ॥ तत्ते वयं लोकसिसृक्षयाद्य त्वयानुसृष्टास्त्रिभिरात्मभिः स्म । सर्वे वियुक्ताः स्वविहारतंत्रं न शक्नुमस्तत्प्रतिहर्तवे ते ॥ १० ॥ यावद्बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र । यथोभयेषां त इमे हि लोका बलिं हरंतोऽन्नमदंत्यनूहाः ॥ ११ ॥ त्वं नः सुराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः । त्वं देवशक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविमादधेऽजः ॥ १२ ॥ ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन्करवाम किं ते । त्वं नः स्वचक्षुः परिदेहि शक्त्या देवक्रियार्थे यदनुग्रहाणाम् ॥ १३ ॥ इति श्रीमद्भागवतपुराणांतर्गतं कूर्मस्तोत्रं समाप्तम् ॥

## ३७२. वराहस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ऋषय ऊचुः ॥ जितं जितं तेऽजित यज्ञभावना त्रयीं तनुं स्वां परिधुन्वते नमः । यद्रोमगर्तेषु निलिल्युरध्वरास्तस्मै नमः कारणसूकराय ते ॥ १ ॥ रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव यदध्वरात्मकम् । छंदांसि यस्य त्वचि बर्हि रोमस्वाज्यं दृशि त्वंघ्रिषु चातुर्होत्रम् ॥ २ ॥ स्रुक् तुण्ड आसीत्स्रुव ईश नासयोरिडोदरे चमसाः कर्णरंध्रे । प्राशित्रमास्ये ग्रसने ग्रहास्तु ते

यच्चर्वणं ते भगवन्नग्निहोत्रम् ॥ ३ ॥ दीक्षानुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः । जिह्वा प्रवर्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते ॥ ४ ॥ सोमस्तु रेतः सवनान्यवस्थितिसंस्थाविभेदास्तव देव धातवः । सत्राणि सर्वाणि शरीरसंधिस्त्वं सर्वयज्ञक्रतुरिष्टिबंधनः ॥ ५ ॥ नमो नमस्तेऽखिलयन्त्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने । वैराग्यभक्त्यात्मजयानुभावितज्ञानाय विद्यागुरवे नमो नमः ॥ ६ ॥ दंष्ट्राग्रकोट्या भगवंस्त्वया धृता विराजते भूधर भूः सभूधरा । यथा वनान्निःसरतो दता धृता मतंगजेंद्रस्य सपत्रपद्मिनी ॥ ७ ॥ त्रयीमयं रूपमिदं च सौकरं भूमंडले नाथ दतः धृतेन ते । चकास्ति शृंगोढघनेन भूयसा कुलाचलेंद्रस्य यथैव विभ्रमः ॥ ८ ॥ संस्थापयैनां जगतां सतस्थुषां लोकाय पत्नीमसि मातरं पिता । विधेम चास्यै नमसा सह त्वया यस्यां स्वतेजोऽग्निमिवारणावधाः ॥ ९ ॥ कः श्रद्दधीतान्यतमस्तव प्रभो रसां गताया भुव उद्विबर्हणम् । न विस्मयोऽसौ त्वयि विश्वविस्मये यो माययेदं ससृजेऽतिविस्मयम् ॥ १० ॥ विधुन्वता वेदमयं निजं वपुर्जनस्तपःसत्यनिवासिनो जयम् । सटाशिखोद्धूतशिवांबुबिंदुभिर्विसृज्यमाना भृशमीश पाविताः ॥ ११ ॥ स वै बत भ्रष्टमतिस्तवैष ते यः कर्मणां पारमपारकर्मणः । यद्योगमायागुणयोगमोहितं विश्वं समस्तं भगवन्विधेहि शम् ॥ १२ ॥ इति श्रीमद्भागवतपुराणांतर्गतं वराहस्तोत्रं संपूर्णम् ॥

## ३७३. नृसिंहस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ब्रह्मोवाच ॥ नतोऽस्म्यनंताय दुरंतशक्तये विचित्रवीर्याय पवित्रकर्मणे । विश्वस्य सर्गस्थितिसंयमान्गुणैः स्वलीलया संदधतेऽव्ययात्मने ॥ १ ॥ श्रीरुद्र उवाच ॥ कोपकालो

युगांतस्ते हतोऽयमसुरोऽल्पकः । तत्सुतं पाह्युपसृतं भक्तं ते भक्त-
वत्सल ॥ २ ॥ इंद्र उवाच ॥ प्रत्यानीताः परम भवता त्रायतां नः
स्वभागा दैत्याक्रांतं हृदयकमलं त्वद्गृहं प्रत्यबोधि । कालग्रस्तं किय-
दिदमहो नाथ शुश्रूषतां ते मुक्तिस्तेषां नहि बहुमता नारसिंहापरैः
किम् ॥ ३ ॥ ऋषय ऊचुः ॥ त्वं नस्तपः परममात्थ यदात्मतेजो
येनेदमादिपुरुषात्मगतं ससर्ज । तद्विप्रलुप्तममुनाद्य शरण्यपाल रक्षा-
गृहीतवपुषा पुनरन्वमंस्थाः ॥ ४ ॥ पितर ऊचुः । श्राद्धानि नोऽधिबु-
भुजे प्रसभं तनूजैर्दत्तानि तीर्थसमयेऽप्यपिबत्तिलाम्बु । तस्योदरान्नख-
विदीर्णवपाद्य आर्च्छत्तस्मै नमो नृहरयेऽखिलधर्मगोप्त्रे ॥ ५ ॥ सिद्धा
ऊचुः ॥ यो नो गतिं योगसिद्धामसाधुरहारषीद्योगतपोबलेन ।
नानादर्पं तं नखैर्निर्ददार तस्मै तुभ्यं प्रणताः स्मो नृसिंह ॥ ६ ॥
विद्याधरा ऊचुः । विद्यां पृथग्धारणयाऽनुराद्धां न्यषेधदज्ञो बलवीर्य
दृप्तः । स येन संख्ये पशुवद्धतस्तं मायानृसिंहं प्रणताः स्म नित्यम्
॥ ७ ॥ नागा ऊचुः ॥ येन पापेन रत्नानि स्त्रीरत्नानि हृतानि नः ।
तद्वक्षःपाटनेनासां दत्तानन्द नमोऽस्तु ते ॥ ८ ॥ मनव ऊचुः ॥
मनवो वयं तव निदेशकारिणो दितिजेन देव परिभूतसेतवः । भवता
खलः स उपसंहृतः प्रभो करवाम ते किमनुशाधि किंकरान् ॥ ९ ॥
प्रजापतय ऊचुः ॥ प्रजेशा वयं ते परेशाभिसृष्टा न येन प्रजा वै
सृजामो निषिद्धाः । स एष त्वया भिन्नवक्षानुशेते जगन्मङ्गलं सत्त्वमूर्ते-
ऽवहारः ॥ १० ॥ गन्धर्वा ऊचुः ॥ वयं विभो ते नटनाट्यगायका
येनात्मसाद्वीर्यबलौजसा कृताः । स एष नीतो भवता दशामिमां
किमुत्पथस्थः कुशलाय कल्पते ॥ ११ ॥ चारणा ऊचुः ॥ हरे तवांघ्रि-
पंकजं भवापवर्गमाश्रिताः । यदेव साधु हृच्छयस्त्वयाऽसुरः समापितः
॥ १२ ॥ यक्षा ऊचुः ॥ वयमनुचरमुख्याः कर्मभिस्ते मनोज्ञैस्त इह

दितिसुतेन प्रापिता वाहकत्वम् । स तु जनपरितापं तत्कृतं जानता ते नरहर उपनीतः पंचतां पंचविंशः ॥ १३ ॥ किंपुरुषा ऊचुः ॥ वयं किंपुरुषास्त्वं तु महापुरुष ईश्वर । अयं कुपुरुषो नष्टो धिक्कृतः साधुभिर्यदा ॥ १४ ॥ वैतालिका ऊचुः ॥ सभासु सत्रेषु तवामलं यशो गीत्वा सपर्यां महतीं लभामहे । यस्तां व्यनैषीद्भृशमेष दुर्जनो दिष्ट्या हतस्ते भगवन्यथामयः ॥ १५ ॥ किन्नरा ऊचुः ॥ वयमीश किन्नरगणास्तवानुगा दितिजेन विष्टिममुनाऽनुकारिताः । भवता हरे स वृजिनोऽवसादितो नरसिंह नाथ विभवाय नो भव ॥ १६ ॥ विष्णुपार्षदा ऊचुः ॥ अद्यैतद्धरिनररूपमद्भुतं ते दृष्टं नः शरणद सर्वलोकशर्म । सोऽयं ते विधिकर ईश विप्रशप्तस्तस्येदं निधनमनुग्रहाय विद्मः ॥१७॥ इति श्रीमद्भागवतपुराणांतर्गतं नृसिंहस्तोत्रं संपूर्णम् ॥

## ३७४. लक्ष्मीनृसिंहस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीमत्पयोनिधिनिकेतन चक्रपाणे भोगींद्रभोगमणिरंजितपुण्यमूर्ते । योगीश शाश्वत शरण्य भवाब्धिपोत लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ १ ॥ ब्रह्मेंद्ररुद्रमरुदर्ककिरीटकोटिसंघट्टिताङ्घ्रिकमलामलकांतिकांत । लक्ष्मीलसत्कुचसरोरुहराजहंस लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ २ ॥ संसारघोरगहने चरतो मुरारे मारोग्रभीकरमृगप्रवरार्दितस्य । आर्तस्य मत्सरनिदाघनिपीडितस्य लक्ष्मीनृसिंह० ॥ ३ ॥ संसारकूपमतिघोरमगाधमूलं संप्राप्य दुःखशतसर्पसमाकुलस्य । दीनस्य देव कृपणापदमागतस्य लक्ष्मीनृसिंह० ॥ ४ ॥ संसारसागरविशालकरालकालनक्रग्रहग्रसननिग्रहविग्रहस्य । व्यग्रस्य रागरसनोर्मिनिपीडितस्य लक्ष्मीनृसिंह० ॥ ५ ॥ संसारवृक्षभवबीजमनंतकर्मशाखाशतं करणपत्रमनंगपुष्पम् । आरुह्य दुःखफलितं पततो दयालो लक्ष्मीनृसिंह० ॥ ६ ॥ संसारसर्पघनवक्त्रभयोग्रती-

त्रदंष्ट्राकरालविषदग्धविनष्टमूर्ते। नागारिवाहन सुधाब्धिनिवास शौरे लक्ष्मीनृसिंह० ॥ ७ ॥ संहारदावदहनातुरभीकरोरुज्वालावलीभिरतिदग्धतनूरुहस्य। त्वत्पादपद्मसरसीशरणागतस्य लक्ष्मीनृसिंह० ॥ ८ ॥ संसारजालपतितस्य जगन्निवास सर्वेंद्रियार्थबडिशार्थझषोपमस्य। प्रोत्खंडितप्रचुरतालुकमस्तकस्य लक्ष्मीनृसिंह० ॥ ९ ॥ संसारभीकरकरींद्रकलाभिघातनिष्पिष्टमर्मवपुषः सकलार्तिनाश। प्राणप्रयाणभवभीतिसमाकुलस्य लक्ष्मीनृसिंह० ॥ १० ॥ अंधस्य मे हृतविवेकमहाधनस्य चोरैः प्रभो बलिभिरिंद्रियनामधेयैः। मोहांधकूपकुहरे विनिपातितस्य लक्ष्मीनृसिंह० ॥ ११ ॥ लक्ष्मीपते कमलनाभ सुरेश विष्णो वैकुंठ कृष्ण मधुसूदन पुष्कराक्ष। ब्रह्मण्य केशव जनार्दन वासुदेव देवेश देहि कृपणस्य करावलंबम् ॥ १२ ॥ यन्माययोर्जितवपुःप्रचुरप्रवाहमग्नार्थमत्र निवहोरुकरावलंबम्। लक्ष्मीनृसिंहचरणाब्जमधुव्रतेन स्तोत्रं कृतं सुखकरं भुवि शंकरेण ॥ १३ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं संकष्टनाशनं लक्ष्मीनृसिंहस्तोत्रं संपूर्णम् ॥

## ३७५. वामनस्तोत्रम्।

श्रीगणेशाय नमः ॥ अदितिरुवाच ॥ यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद तीर्थश्रवः श्रवणमंगलनामधेय। आपन्नलोकवृजिनोपशमोदयाऽद्य शं नः कृधीश भगवन्नसि दीननाथः ॥ १ ॥ विश्वाय विश्वभवनस्थितिसंयमाय स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने। स्वस्थाय शश्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसे हरये नमस्ते ॥ २ ॥ आयुः परं वपुरभीष्टमतुल्यलक्ष्मीर्द्यौर्भूरसाः सकलयोगगुणास्त्रिवर्गः। ज्ञानं च केवलमनंत भवंति तुष्टात्त्वत्तो नृणां किमु सपत्नजयादिराशीः ॥ ३ ॥ इति श्रीमद्भागवतपुराणांतर्गतं वामनस्तोत्रं संपूर्णम् ॥

## ३७६. वामनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अदितिरुवाच ॥ नमस्ते देवदेवेश सर्वव्यापिन् जनार्दन । सत्त्वादिगुणभेदेन लोकव्यापारकारिणे ॥ १ ॥ नमस्ते बहुरूपाय अरूपाय नमो नमः । सर्वैकाद्भुतरूपाय निर्गुणाय गुणात्मने ॥ २ ॥ नमस्ते लोकनाथाय परमज्ञानरूपिणे । सद्भक्तजनवात्सल्यशीलिने मंगलात्मने ॥ ३ ॥ यस्यावताररूपाणि ह्यर्चयंति मुनीश्वराः । तमादिपुरुषं देवं नमामीष्टार्थसिद्धये ॥ ४ ॥ यं न जानंति श्रुतयो यं न जानंति सूरयः । तं नमामि जगद्धेतुं मायिनं तममायिनम् ॥ ५ ॥ यस्यावलोकनं चित्रं मायोपद्रववारणम् । जगद्रूपं जगत्पालं तं वंदे पद्मजाधवम् ॥ ६ ॥ यो देवस्त्यक्तसंगानां शांतानां करुणार्णवः । करोति ह्यात्मना संगं तं वंदे संगवर्जितम् ॥ ७ ॥ यत्पादाब्जजलक्लिन्नसेवारंजितमस्तकाः । अवापुः परमां सिद्धिं तं वंदे सर्ववंदितम् ॥ ८ ॥ यज्ञेश्वरं यज्ञभुजं यज्ञकर्मसु निष्ठितम् । नमामि यज्ञफलदं यज्ञकर्मप्रबोधकम् ॥ ९ ॥ अजामिलोऽपि पापात्मा यन्नामोच्चारणादनु । प्राप्तवान्परमं धाम तं वंदे लोकसाक्षिणम् ॥ १० ॥ ब्रह्माद्या अपि ये देवा यन्मायापाशयंत्रिताः । न जानंति परं भावं तं वंदे सर्वनायकम् ॥ ११ ॥ हृत्पद्मनिलयोऽज्ञानां दूरस्थ इव भाति यः । प्रमाणातीतसद्भावं तं वंदे ज्ञानसाक्षिणम् ॥ १२ ॥ यन्मुखाद्ब्राह्मणो जातो बाहुभ्यां क्षत्रियोऽजनि । तथैव ऊरुतो वैश्यः पद्भ्यां शूद्रो अजायत ॥ १३ ॥ मनसश्चंद्रमा जातो जातः सूर्यश्च चक्षुषः । मुखादिंद्रस्तथाग्निश्च प्राणाद्वायुरजायत ॥ १४ ॥ त्वमिंद्रः पवनः सोमस्त्वमीशानस्त्वमंतकः । त्वमग्निर्निर्ऋतिश्चैव वरुणस्त्वं दिवाकरः ॥ १५ ॥ देवाश्च स्थावराश्चैव पिशाचाश्चैव राक्षसाः । गिरयः सिद्धगंधर्वा नद्यो भूमिश्च सागराः ॥ १६ ॥

त्वमेव जगतामीशो यन्नामास्ति परात्परः । त्वद्रूपमखिलं तस्मात्पुत्रान् मे पाहि श्रीहरे ॥ १७ ॥ इति स्तुत्वा देवधात्री देवं नत्वा पुनः पुनः । उवाच प्राञ्जलिर्भूत्वा हर्षाश्रुक्षालितस्तनी ॥ १८ ॥ अनुग्राह्यास्मि देवेश हरे सर्वादिकारण । अकंटकश्रियं देहि मत्सुतानां दिवौकसाम् ॥ १९ ॥ अंतर्यामिन् जगद्रूप सर्वभूतपरेश्वर । तवाज्ञातं किमस्तीह किं मां मोहयसि प्रभो ॥ २० ॥ तथापि तव वक्ष्यामि यन्मे मनसि वर्तते । वृथापुत्रास्मि देवेश रक्षोभिः परिपीडिता ॥ २१ ॥ एतान्न हंतुमिच्छामि मत्सुता दितिजा यतः । तानहत्वा श्रियं देहि मत्सुतानामुवाच सा ॥ २२ ॥ इत्युक्तो देवदेवस्तु पुनः प्रीतिमुपागतः । उवाच हर्षयन् साध्वीं कृपयाभिपरिप्लुतः ॥ २३ ॥ श्रीभगवानुवाच ॥ प्रीतोऽस्मि देवि भद्रं ते भविष्यामि सुतस्तव । यतः सपत्नीतनयेष्वपि वात्सल्यशालिनी ॥ २४ ॥ त्वया च मे कृतं स्तोत्रं पठंति भुवि मानवाः । तेषां पुत्रा धनं संपन्न हीयंते कदाचन ॥ २५ ॥ अंते मत्पदमाप्नोति यद्विष्णोः परमं शुभम् ॥ २६ ॥ इति श्रीपद्मपुराणे वामनस्तोत्रं समाप्तम् ॥

## ३७७. परशुरामाष्टाविंशतिनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ऋषिरुवाच ॥ यमाहुर्वासुदेवांशं हैहयानां कुलान्तकम् ॥ त्रिःसप्तकृत्वो य इमां चक्रे निःक्षत्रियां महीम् ॥ १ ॥ दुष्टं क्षत्रं भुवो भारमब्रह्मण्यमनीनशत् ॥ तस्य नामानि पुण्यानि वच्मि ते पुरुषर्षभ ॥ २ ॥ भूभारहरणार्थाय मायामानुषविग्रहः ॥ जनार्दनांशसम्भूतः स्थित्युत्पत्त्यप्ययेश्वरः ॥ ३ ॥ भार्गवो जामदग्न्यश्च पित्राज्ञापरिपालकः ॥ मातृप्राणप्रदो धीमान् क्षत्रियान्तकरः प्रभुः ॥ ४ ॥ रामः परशुहस्तश्च कार्तवीर्यमदापहः ॥ रेणुकादुःखशोकघ्नो विशोकः शोकनाशनः ॥ ५ ॥ नवीननीरदश्यामो रक्तोत्पलविलोचनः ॥

घोरो दण्डधरो धीरो ब्रह्मण्यो ब्राह्मणप्रियः ॥ ६ ॥ तपोधनो महे-न्द्राद्रौ न्यस्तदण्डः प्रशान्तधीः ॥ उपगीयमानचरितः सिद्धगन्धर्वचा-रणैः ॥ ७ ॥ जन्ममृत्युजराव्याधिदुःखशोकभयातिगः ॥ इत्यष्टाविं-शतिर्नाम्नामुक्ता स्तोत्रात्मिका शुभा ॥ ८ ॥ अनया प्रीयतां देवो जामदग्न्यो महेश्वरः ॥ नेदं स्तोत्रमशान्ताय नादान्तायातपस्विने ॥ ९ ॥ नावेदविदुषे वाच्यमशिष्याय खलाय च ॥ नासूयकायानृजवे न चानिर्दिष्टकारिणे ॥ १० ॥ इदं प्रियाय पुत्राय शिष्यायानुगताय च ॥ रहस्यधर्मो वक्तव्यो नान्यस्मै तु कदाचन ॥ ११ ॥ इति परशुरामाष्टा-विंशतिनामस्तोत्रं संपूर्णम् ॥



# रामस्तोत्राणि ।



कल्याणानां निधानं कलिमलमथनं पावनं पावनानां
पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य ।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां
बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥

## ❀ रामस्तोत्राणि । ❀

### ३७८. रामहृदयम् ।

श्रीगणेशाय नमः ॥ श्रीमहादेव उवाच ॥ ततो रामः स्वयं प्राह हनूमंतमुपस्थितम् । शृणु यत्त्वं प्रवक्ष्यामि ह्यात्मानात्मपरात्मनाम् ॥ १ ॥ आकाशस्य यथा भेदस्त्रिविधो दृश्यते महान् । जलाशये महाकाशस्तदवच्छिन्न एव हि । प्रतिबिंबाख्यमपरं दृश्यते त्रिविधं नभः ॥ २ ॥ बुद्ध्यवच्छिन्नचैतन्यमेकं पूर्णमथापरम् । आभासस्त्वपरं बिंबभूतमेवं त्रिधा चितिः ॥ ३ ॥ साभासबुद्धेः कर्तृत्वमविच्छिन्नेऽविकारिणि । साक्षिण्यारोप्यते भ्रांत्या जीवत्वं च तथाऽबुधैः ॥ ४ ॥ आभासस्तु मृषाबुद्धिरविद्याकार्यमुच्यते । अविच्छिन्नं तु तद्ब्रह्म विच्छेदस्तु विकल्पितः ॥ ५ ॥ अविच्छिन्नस्य पूर्णेन एकत्वं प्रतिपद्यते । तत्त्वमस्यादिवाक्यैश्च साभासस्याहमस्तथा ॥ ६ ॥ ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चात्मनोः । तदाऽविद्या स्वकार्यैश्च नश्यत्येव न संशयः ॥ ७ ॥ एतद्विज्ञाय मद्भक्तो मद्भावायोपपद्यते ॥ ८ ॥ मद्भक्तिविमुखानां हि शास्त्रगर्तेषु मुह्यताम् । न ज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपि ॥ ९ ॥ इदं रहस्यं हृदयं ममात्मनो मयैव साक्षात्कथितं तवानघ । मद्भक्तिहीनाय शठाय न त्वया दातव्यमैंद्रादपि राज्यतोऽधिकम् ॥ १० ॥ इति श्रीमदध्यात्मरामायणे बालकांडे श्रीरामहृदयं संपूर्णम् ॥

### ३७९. रामस्तवराजः ।

श्रीगणेशाय नमः ॥ अस्य श्रीरामचंद्रस्तवराजस्तोत्रमंत्रस्य सनत्कुमार ऋषिः । श्रीरामो देवता । अनुष्टुप् छंदः । सीता बीजम् । हनूमान् शक्तिः । श्रीरामप्रीत्यर्थे जपे विनियोगः ॥ सूत उवाच ॥ सर्वशास्त्रार्थ-

तत्त्वज्ञं व्यासं सत्यवतीसुतम् । धर्मपुत्रः प्रहृष्टात्मा प्रत्युवाच मुनीश्वरम् ॥ १ ॥ युधिष्ठिर उवाच ॥ भगवन्योगिनां श्रेष्ठ सर्वशास्त्रविशारद । किं तत्त्वं किं परं जाप्यं किं ध्यानं मुक्तिसाधनम् ॥ २ ॥ श्रोतुमिच्छामि तत्सर्वं ब्रूहि मे मुनिसत्तम । वेदव्यास उवाच ॥ धर्मराज महाभाग शृणु वक्ष्यामि तत्त्वतः ॥ ३ ॥ यत्परं यद्गुणातीतं यज्ज्योतिरमलं शिवम् । तदेव परमं तत्त्वं कैवल्यपदकारणम् ॥ ४ ॥ श्रीरामेति परं जाप्यं तारकं ब्रह्मसंज्ञकम् । ब्रह्महत्यादिपापघ्नमिति वेदविदो विदुः ॥ ५ ॥ श्रीराम रामेति जना ये जपंति च सर्वदा । तेषां भुक्तिश्च मुक्तिश्च भविष्यति न संशयः ॥ ६ ॥ स्तवराजं पुरा प्रोक्तं नारदेन च धीमता । तत्सर्वं संप्रवक्ष्यामि हरिध्यानपुरःसरम् ॥ ७ ॥ तापत्रयाग्निशमनं सर्वाघौघनिकृंतनम् दारिद्र्यदुःखशमनं सर्वसंपत्करं शिवम् ॥ ८ ॥ विज्ञानफलदं दिव्यं मोक्षैकफलसाधनम् । नमस्कृत्य प्रवक्ष्यामि रामं कृष्णं जगन्मयम् ॥ ९ ॥ अयोध्यानगरे रम्ये रत्नमंडपमध्यगे । स्मरेत्कल्पतरोर्मूले रत्नसिंहासनं शुभम् ॥ १० ॥ तन्मध्येऽष्टदलं पद्मं नानारत्नैश्च वेष्टितम् । स्मरेन्मध्ये दाशरथिं सहस्रादित्यतेजसम् ॥ ११ ॥ पितुरंकगतं राममिंद्रनीलमणिप्रभम् । कोमलांगं विशालाक्षं विद्युद्वर्णांबरावृतम् ॥ १२ ॥ भानुकोटिप्रतीकाशं किरीटेन विराजितम् । रत्नग्रैवेयकेयूररत्नकुंडलमंडितम् ॥ १३ ॥ रत्नकंकणमंजीरकटिसूत्रैरलंकृतम् । श्रीवत्सकौस्तुभोरस्कं मुक्ताहारोपशोभितम् ॥ १४ ॥ दिव्यरत्नसमायुक्तमुद्रिकाभिरलंकृतम् । राघवं द्विभुजं बालं राममीषत्स्मिताननम् ॥ १५ ॥ तुलसीकुंदमंदारपुष्पमाल्यैरलंकृतम् । कर्पूरागरुकस्तूरीदिव्यगंधानुलेपनम् ॥ १६ ॥ योगशास्त्रेष्वभिरतं योगेशं योगदायकम् । सदा भरतसौमित्रिशत्रुघ्नैरुपशोभितम् ॥ १७ ॥ विद्याधरसुराधीश-

सिद्धगंधर्वकिन्नरैः । योगींद्रैर्नारदाद्यैश्च स्तूयमानमहर्निशम् ॥ १८ ॥ विश्वामित्रवसिष्ठादिमुनिभिः परिसेवितम् । सनकादिमुनिश्रेष्ठैर्योगिवृंदैश्च सेवितम् ॥ १९ ॥ रामं रघुवरं वीरं धनुर्वेदविशारदम् । मंगलायतनं देवं रामं राजीवलोचनम् ॥ २० ॥ सर्वशास्त्रार्थतत्त्वज्ञमानंदकरसुंदरम् । कौसल्यानंदनं रामं धनुर्बाणधरं हरिम् ॥ २१ ॥ एवं संचिंतयन्विष्णुं यज्ज्योतिरमलं विभुम् । प्रहृष्टमानसो भूत्वा मुनिवर्यः स नारदः ॥ २२ ॥ सर्वलोकहितार्थाय तुष्टाव रघुनंदनम् । कृतांजलिपुटो भूत्वा चिंतयन्नद्भुतं हरिम् ॥ २३ ॥ यदेकं यत्परं नित्यं यदनंतं चिदात्मकम् । यदेकं व्यापकं लोके तद्रूपं चिंतयाम्यहम् ॥ २४ ॥ विज्ञानहेतुं विमलायताक्षं प्रज्ञानरूपं स्वसुखैकहेतुम् । श्रीरामचंद्रं हरिमादिदेवं परात्परं राममहं भजामि ॥ २५ ॥ कविं पुराणं पुरुषं पुरस्तात्सनातनं योगिनमीशितारम् । अणोरणीयांसमनंतवीर्यं प्राणेश्वरं राममसौ ददर्श ॥ २६ ॥ नारद उवाच ॥ नारायणं जगन्नाथमभिरामं जगत्पतिम् । कविं पुराणं वागीशं रामं दशरथात्मजम् ॥ २७ ॥ राजराजं रघुवरं कौसल्यानंदवर्धनम् । भर्गं वरेण्यं विश्वेशं रघुनाथं जगद्गुरुम् ॥ २८ ॥ सत्यं सत्यप्रियं श्रेष्ठं जानकीवल्लभं विभुम् । सौमित्रिपूर्वजं शांतं कामदं कमलेक्षणम् ॥ २९ ॥ आदित्यं रविमीशानं घृणिं सूर्यमनामयम् । आनंदरूपिणं सौम्यं राघवं करुणामयम् ॥ ३० ॥ जामदग्न्यं तपोमूर्तिं रामं परशुधारिणम् । वाक्पतिं वरदं वाच्यं श्रीपतिं पक्षिवाहनम् ॥ ३१ ॥ श्रीशार्ङ्गधारिणं रामं चिन्मयानंदविग्रहम् । हलधृग्विष्णुमीशानं बलरामं कृपानिधिम् ॥ ३२ ॥ श्रीवल्लभं कृपानाथं जगन्मोहनमच्युतम् । मत्स्यकूर्मवराहादिरूपधारिणमव्ययम् ॥ ३३ ॥ वासुदेवं जगद्योनिमनादिनिधनं हरिम् । गोविंदं गोपतिं विष्णुं

गोपीजनमनोहरम् ॥ ३४ ॥ गोगोपालपरीवारं गोपकन्यासमा-
वृतम् । विद्युत्पुंजप्रतीकाशं रामं कृष्णं जगन्मयम् ॥ ३५ ॥ गो-
गोपिकासमाकीर्णं वेणुवादनतत्परम् । कामरूपं कलावंतं कामिनी-
कामदं विभुम् ॥ ३६ ॥ मन्मथं मथुरानाथं माधवं मकरध्वजम् ।
श्रीधरं श्रीकरं श्रीशं श्रीनिवासं परात्परम् ॥ ३७ ॥ भूतेशं भूपतिं
भद्रं विभूतिं भूतिभूषणम् । सर्वदुःखहरं वीरं दुष्टदानववैरिणम्
॥ ३८ ॥ श्रीनृसिंहं महाबाहुं महांतं दीप्ततेजसम् । चिदानंदमयं
नित्यं प्रणवं ज्योतिरूपिणम् ॥ ३९ ॥ आदित्यमंडलगतं निश्चितार्थ-
स्वरूपिणम् । भक्तप्रियं पद्मनेत्रं भक्तानामीप्सितप्रदम् ॥ ४० ॥
कौसल्येयं कलामूर्तिं काकुत्स्थं कमलाप्रियम् । सिंहासने समासीनं
नित्यव्रतमकल्मषम् ॥ ४१ ॥ विश्वामित्रप्रियं दांतं स्वदारनियत-
व्रतम् । यज्ञेशं यज्ञपुरुषं यज्ञपालनतत्परम् ॥ ४२ ॥ सत्यसंधं जित-
क्रोधं शरणागतवत्सलम् । सर्वक्लेशापहरणं विभीषणवरप्रदम्
॥ ४३ ॥ दशग्रीवहरं रौद्रं केशवं केशिमर्दनम् । वालिप्रमथनं वीरं
सुग्रीवेप्सितराज्यदम् ॥ ४४ ॥ नरवानरदेवैश्च सेवितं हनुम-
त्प्रियम् । शुद्धं सूक्ष्मं परं शांतं तारकब्रह्मरूपिणम् ॥ ४५ ॥ सर्वभूता-
त्मभूतस्थं सर्वाधारं सनातनम् । सर्वकारणकर्तारं निदानं प्रकृतेः
परम् ॥ ४६ ॥ निरामयं निराभासं निरवद्यं निरंजनम् । नित्यानंदं
निराकारमद्वैतं तमसः परम् ॥ ४७ ॥ परात्परतरं तत्त्वं सत्यानंदं
चिदात्मकम् । मनसा शिरसा नित्यं प्रणमामि रघूत्तमम् ॥ ४८ ॥
सूर्यमंडलमध्यस्थं रामं सीतासमन्वितम् । नमामि पुंडरीकाक्षममेयं
गुरुतत्परम् ॥ ४९ ॥ नमोऽस्तु वासुदेवाय ज्योतिषां पतये नमः ।
नमोऽस्तु रामदेवाय जगदानंदरूपिणे ॥ ५० ॥ नमो वेदांतनिष्ठाय
योगिने ब्रह्मवादिने । मायामयनिरासाय प्रपन्नजनसेविने ॥ ५१ ॥

वंदामहे महेशानचंडकोदंडखंडनम् । जानकीहृदयानंदवर्धनं रघुनंदनम् ॥ ५२ ॥ उत्फुल्लामलकोमलोत्पलदलश्यामाय रामाय ते कामाय प्रमदामनोहरगुणग्रामाय रामात्मने । योगारूढमुनींद्रमानससरोहंसाय संसारविध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः ॥ ५३ ॥ भवोद्भवं वेदविदां वरिष्ठमादित्यचंद्रानलसुप्रभावम् । सर्वात्मकं सर्वगतस्वरूपं नमामि रामं तमसः परस्तात् ॥ ५४ ॥ निरंजनं निःष्प्रतिमं निरीहं निराश्रयं निष्कलमप्रपंचम् । नित्यं ध्रुवं निर्विषयस्वरूपं निरंतरं राममहं भजामि ॥ ५५ ॥ भवाब्धिपोतं भरताग्रजं तं भक्तप्रियं भानुकुलप्रदीपम् । भूतत्रिनाथं भुवनाधिपं तं भजामि रामं भवरोगवैद्यम् ॥ ५६ ॥ सर्वाधिपत्यं समरांगधीरं सत्यं चिदानंदमयस्वरूपम् । सत्यं शिवं शांतिमयं शरण्यं सनातनं राममहं भजामि ॥ ५७ ॥ कार्यक्रियाकारणमप्रमेयं कविं पुराणं कमलायताक्षम् । कुमारवेद्यं करुणामयं तं कल्पद्रुमं राममहं भजामि ॥ ५८ ॥ त्रैलोक्यनाथं सरसीरुहाक्षं दयानिधिं द्वंद्वविनाशहेतुम् । महाबलं वेदविधिं सुरेशं सनातनं राममहं भजामि ॥ ५९ ॥ वेदांतवेद्यं कविमीशितारमनादिमध्यांतमचिंत्यमाद्यम् । अगोचरं निर्मलमेकरूपं नमामि रामं तमसः परस्तात् ॥ ६० ॥ अशेषवेदात्मकमादिसंज्ञमजं हरिं विष्णुमनंतमाद्यम् । अपारसंवित्सुखमेकरूपं परात्परं राममहं भजामि ॥ ६१ ॥ तत्त्वस्वरूपं पुरुषं पुराणं स्वतेजसा पूरितविश्वमेकम् । राजाधिराजं रविमंडलस्थं विश्वेश्वरं राममहं भजामि ॥ ६२ ॥ लोकाभिरामं रघुवंशनाथं हरिं चिदानंदमयं मुकुंदम् । अशेषविद्याधिपतिं कवींद्रं नमामि रामं तमसः परस्तात् ॥ ६३ ॥ योगींद्रसंघैश्च सुसेव्यमानं नारायणं निर्मलमादिदेवम् । ततोऽस्मि नित्यं जगदेकनाथमादित्य-

वर्णं तमसः परस्तात् ॥ ६४ ॥ विभूतिदं विश्वसृजं विरामं राजेंद्रमीशं रघुवंशनाथम् । अचिंत्यमव्यक्तमनंतमूर्तिं ज्योतिर्मयं राममहं भजामि ॥ ६५ ॥ अशेषसंसारविहारहीनमादित्यगं पूर्णसुखाभिरामम् । समस्तसाक्षिं तमसः परस्तान्नारायणं विष्णुमहं भजामि ॥ ६६ ॥ मुनींद्रगुह्यं परिपूर्णकामं कलानिधिं कल्मषनाशहेतुम् । परात्परं यत्परमं पवित्रं नमामि रामं महतो महांतम् ॥ ६७ ॥ ब्रह्मा विष्णुश्च रुद्रश्च देवेंद्रो देवतास्तथा । आदित्यादिग्रहाश्चैव त्वमेव रघुनंदन ॥ ६८ ॥ तापसा ऋषयः सिद्धाः साध्याश्च मरुतस्तथा । विप्रा वेदास्तथा यज्ञाः पुराणधर्मसंहिताः ॥ ६९ ॥ वर्णाश्रमास्तथा धर्मा वर्णधर्मास्तथैव च । यक्षराक्षसगंधर्वा दिक्पाला दिग्गजादयः ॥ ७० ॥ सनकादिमुनिश्रेष्ठास्त्वमेव रघुपुंगव । वसवोऽष्टौ त्रयः काला रुद्रा एकादश स्मृताः ॥ ७१ ॥ तारका दश दिक् चैव त्वमेव रघुनंदन । सप्तद्वीपाः समुद्राश्च नगा नद्यस्तथा द्रुमाः ॥ ७२ ॥ स्थावरा जंगमाश्चैव त्वमेव रघुनायक । देवतिर्यङ्मनुष्याणां दानवानां तथैव च ॥ ७३ ॥ माता पिता तथा भ्राता त्वमेव रघुवल्लभ । सर्वेषां त्वं परं ब्रह्म त्वन्मयं सर्वमेव हि ॥ ७४ ॥ त्वमक्षरं परं ज्योतिस्त्वमेव पुरुषोत्तम । त्वमेव तारकं ब्रह्म त्वत्तोऽन्यन्नैव किंचन ॥ ७५ ॥ शांतं सर्वगतं सूक्ष्मं परं ब्रह्म सनातनम् । राजीवलोचनं रामं प्रणमामि जगत्पतिम् ॥ ७६ ॥ व्यास उवाच ॥ ततः प्रसन्नः श्रीरामः प्रोवाच मुनिपुंगवम् । तुष्टोऽस्मि मुनिशार्दूल वृणीष्व वरमुत्तमम् ॥ ७७ ॥ नारद उवाच ॥ यदि तुष्टोऽसि सर्वज्ञ श्रीराम करुणानिधे । त्वन्मूर्तिदर्शनेनैव कृतार्थोऽहं च सर्वदा ॥ ७८ ॥ धन्योऽहं कृतकृत्योऽहं पुण्योऽहं पुरुषोत्तम । अद्य मे

सफलं जन्म जीवितं सफलं च मे ॥ ७९ ॥ अद्य मे सफलं ज्ञानमद्य मे सफलं तपः । अद्य मे सफलं कर्म त्वत्पादांभोजदर्शनात् । अद्य मे सफलं सर्वं त्वन्नामस्मरणं तथा ॥ ८० ॥ त्वत्पादांभोरुहद्वंद्वसद्भक्तिं देहि राघव । ततः परमसंप्रीतः स रामः प्राह नारदम् ॥ ८१ ॥ श्रीराम उवाच ॥ मुनिवर्य महाभाग मुने त्विष्टं ददामि ते । यत्त्वया चेप्सितं सर्वं मनसा तद्भविष्यति ॥ ८२ ॥ नारद उवाच ॥ वरं न याचे रघुनाथ युष्मत्पदाब्जभक्तिः सततं ममास्तु । इदं प्रियं नाथ वरं हि याचे पुनःपुनस्त्वामिदमेव याचे ॥ ८३ ॥ व्यास उवाच ॥ इत्येवमीडितो रामः प्रादात्तस्मै वरांतरम् । वीरो रामो महातेजाः सच्चिदानंदविग्रहः ॥ ८४ ॥ अद्वैतममलं ज्ञानं स्वनामस्मरणं तथा । अंतर्दधौ जगन्नाथः पुरतस्तस्य राघवः ॥ ८५ ॥ इति श्रीरघुनाथस्य स्तवराजमनुत्तमम् । सर्वसौभाग्यसंपत्तिदायकं मुक्तिदं शुभम् ॥ ८६ ॥ कथितं ब्रह्मपुत्रेण वेदानां सारमुत्तमम् । गुह्याद्गुह्यतमं दिव्यं तव स्नेहात्प्रकीर्तितम् ॥ ८७ ॥ यः पठेच्छृणुयाद्वापि त्रिसंध्यं श्रद्धयान्वितः । ब्रह्महत्यादिपापानि तत्समानि बहूनि च ॥ ८८ ॥ स्वर्णस्तेयं सुरापानं गुरुतल्पगतिस्तथा । गोवधाद्युपपापानि अनृतात्संभवानि च ॥ ८९ ॥ सर्वैः प्रमुच्यते पापैः कल्पायुतशतोद्भवैः । मानसं वाचिकं पापं कर्मणा समुपार्जितम् ॥ ९० ॥ श्रीरामस्मरणेनैव तत्क्षणान्नश्यति ध्रुवम् । इदं सत्यमिदं सत्यं सत्यमेतदिहोच्यते ॥ ९१ ॥ रामं सत्यं परं ब्रह्म रामात्किंचिन्न विद्यते । तस्माद्रामस्वरूपं हि सत्यं सत्यमिदं जगत् ॥ ९२ ॥ श्रीरामचंद्र रघुपुंगव राजवर्य राजेंद्र राम रघुनायक राघवेश । राजाधिराज रघुनंदन रामचंद्र दासोऽहमद्यभवतः शरणागतोऽस्मि ॥ ९३ ॥ वैदेहीसहितं सुरद्रुमतले हैमे महामंडपे मध्ये पुष्पकृतासने मणिमये वीरासने संस्थितम् । अग्रे वाचयति प्रभंजन-

सुते तत्त्वं मुनींद्रैः परं व्याख्यातं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ ९४ ॥ रामं रत्नकिरीटकुंडलयुतं केयूरहारान्वितं सीतालंकृतवामभागममलं सिंहासनस्थं विभुम् । सुग्रीवादिहरीश्वरैः सुरगणैः संसेव्यमानं सदा विश्वामित्रपराशरादिमुनिभिः संस्तूयमानं प्रभुम् ॥ ९५ ॥ सकलगुणनिधानं योगिभिः स्तूयमानं भुजविजितसमानं राक्षसेंद्रादिमानम् । महितनृपभयानं सीतया शोभमानं स्मर हृदय विमानं ब्रह्म रामाभिधानम् ॥ ९६ ॥ रघुवर तव मूर्तिर्मामके मानसाब्जे नरकगतिहरं ते नामधेयं मुखे मे । अनिशमतुलभक्त्या मस्तकं त्वत्पदाब्जे भवजलनिधिमग्नं रक्ष मामार्तबंधो ॥ ९७ ॥ रामरत्नमहं वंदे चित्रकूटपतिं हरिम् । कौसल्याभक्तिसंभूतं जानकीकंठभूषणम् ॥ ९८ ॥ इति श्रीसनत्कुमारसंहितायां नारदोक्तं श्रीरामस्तवराजस्तोत्रं संपूर्णम् ॥

## ३८०. रामगीता ।

श्रीगणेशाय नमः ॥ श्रीमहादेव उवाच ॥ ततो जगन्मंगलमंगलात्मना विधाय रामायणकीर्तिमुत्तमाम् । चचार पूर्वाचरितं रघूत्तमो राजर्षिवर्यैरभिसेवितं यथा ॥ १ ॥ सौमित्रिणा पृष्ट उदारबुद्धिना रामः कथाः प्राह पुरातनीः शुभाः । राज्ञः प्रमत्तस्य नृगस्य शापतो द्विजस्य तिर्यक्त्वमथाह राघवः ॥ २ ॥ कदाचिदेकांत उपस्थितं प्रभुं रामं रमालालितपादपंकजम् । सौमित्रिरासादितशुद्धभावनः प्रणम्य भक्त्या विनयान्वितोऽब्रवीत् ॥ ३ ॥ सौमित्रिरुवाच ॥ त्वं शुद्धबोधोऽसि हि सर्वदेहिनामात्मास्यधीशोऽसि निराकृतिः स्वयम् । प्रतीयसे ज्ञानदृशां महामते पादाब्जभृंगाहितसंगसंगिनाम् ॥ ४ ॥ अहं प्रपन्नोऽस्मि पदांबुजं प्रभो भवापवर्गं तव योगिभावितम् । यथांजसाज्ञानमपारवारिधिं सुखं तरिष्यामि तथानुशाधि माम् ॥ ५ ॥ श्रुत्वाथ

सौमित्रिवचोऽखिलं तदा प्राह प्रपन्नार्तिहरः प्रसन्नधीः। विज्ञानमज्ञानतमोपशांतये श्रुतिप्रपन्नं क्षितिपालभूषणः ॥ ६ ॥ श्रीराम उवाच ॥ आदौ स्ववर्णाश्रमवर्णिताः क्रियाः कृत्वा समासादितशुद्धमानसः। समाप्य तत्पूर्वमुपात्तसाधनः समाश्रयेत्सद्गुरुमात्मलब्धये ॥ ७ ॥ क्रिया शरीरोद्भवहेतुरादृता प्रियाप्रियौ तौ भवतः सुरागिणः। धर्मेतरौ तत्र पुनः शरीरकं पुनः क्रिया चक्रवदीर्यते भवः ॥ ८ ॥ अज्ञानमेवास्य हि मूलकारणं तद्धानमेवात्र विधौ विधीयते। विद्यैव तन्नाशविधौ पटीयसी न कर्म तज्जं सविरोधमीरितम् ॥ ९ ॥ नाज्ञानहानिर्न च रागसंक्षयो भवेत्ततः कर्म सदोषमुद्भवेत्। ततः पुनः संसृतिरप्यवारिता तस्माद्बुधो ज्ञानविचारवान्भवेत् ॥ १० ॥ ननु क्रिया वेदमुखेन चोदिता यथैव विद्या पुरुषार्थसाधनम्। कर्तव्यता प्राणभृतः प्रचोदिता विद्यासहायत्वमुपैति सा पुनः ॥ ११ ॥ कर्माकृतौ दोषमपि श्रुतिर्जगौ तस्मात्सदा कार्यमिदं मुमुक्षुणा। ननु स्वतंत्रा ध्रुवकार्यकारिणी विद्या न किंचिन्मनसाप्यपेक्षते ॥ १२ ॥ न सत्यकार्योऽपि हि यद्वदध्वरः प्रकांक्षतेऽन्यानपि कारकादिकान्। तथैव विद्या विधितः प्रकाशितैर्विशिष्यते कर्मभिरेव मुक्तये ॥ १३ ॥ केचिद्वदंतीति वितर्कवादिनस्तदप्यसदृष्टविरोधकारणात्। देहाभिमानादभिवर्धते क्रिया विद्यागताहंकृतितः प्रसिध्यति ॥ १४ ॥ विशुद्धविज्ञानविरोचनांचिता विद्यात्मवृत्तिश्चरमेति भण्यते। उदेति कर्माखिलकारकादिभिर्निहंति विद्याऽखिलकारकादिकम् ॥ १५ ॥ तस्मात्त्यजेत्कार्यमशेषतः सुधीर्विद्याविरोधान्न समुच्चयो भवेत्। आत्मानुसंधानपरायणः सदा निवृत्तसर्वेंद्रियवृत्तिगोचरः ॥ १६ ॥ यावच्छरीरादिषु माययात्मधीस्तावद्विधेयो विधिवादकर्मणाम्। नेतीति वाक्यैरखिलं निषिध्य तज्ज्ञात्वा परात्मानमथ त्यजेत्क्रियाः ॥ १७ ॥ यदा परात्मात्मविभेदभेदकं विज्ञानमा-

त्मन्यवभाति भास्वरम्। तदैव माया प्रविलीयतेऽजसा सकारका कारणमात्मसंसृतेः ॥ १८ ॥ श्रुतिप्रमाणाभिविनाशिता च सा कथं भविष्यत्यपि कार्यकारिणी। विज्ञानमात्रादमलाद्द्वितीयतस्तस्मादविद्या न पुनर्भविष्यति ॥ १९ ॥ यदि स्म नष्टा न पुनः प्रसूयते कर्ताऽहमस्येति मतिः कथं भवेत्। तस्मात्स्वतंत्रा न किमप्यपेक्षते विद्या विमोक्षाय विभाति केवला ॥ २० ॥ सा तैत्तिरीयश्रुतिराह सादरं न्यासं प्रशस्ताखिलकर्मणां स्फुटम्। एतावदित्याह च वाजिनां श्रुतिर्ज्ञानं विमोक्षाय न कर्म साधनम् ॥ २१ ॥ विद्यासमत्वेन तु दर्शितस्त्वया क्रतुर्न दृष्टांत उदाहृतः समः। फलैः पृथक्त्वाद्बहुकारकैः क्रतुः संसाध्यते ज्ञानमतो विपर्ययम् ॥ २२ ॥ सप्रत्यवायो ह्यहमित्यनात्मधीरज्ञप्रसिद्धा न तु तत्त्वदर्शिनः। तस्माद्बुधैस्त्याज्यमपि क्रियात्मभिर्विधानतः कर्म विधिप्रकाशितम् ॥ २३ ॥ श्रद्धान्वितस्तत्त्वमसीति वाक्यतो गुरोः प्रसादादपि शुद्धमानसः। विज्ञाय चैकात्म्यमथात्मजीवयोः सुखी भवेन्मेरुरिवाप्रकंपनः ॥ २४ ॥ आदौ पदार्थावगतिर्हि कारणं वाक्यार्थविज्ञानविधौ विधानतः। तत्त्वंपदार्थौ परमात्मजीवकावसीति चैकात्म्यमथानयोर्भवेत् ॥ २५ ॥ प्रत्यक्परोक्षादिविरोधमात्मनोर्विहाय संगृह्य तयोश्चिदात्मताम्। संशोधितां लक्षणया च लक्षितां ज्ञात्वा स्वमात्मानमथाद्वयो भवेत् ॥ २६ ॥ एकात्मकत्वाज्जहती न संभवेत्तथाऽजहल्लक्षणता विरोधतः। सोऽयंपदार्थाविव भागलक्षणा युज्येत तत्त्वंपदयोरदोषतः ॥ २७ ॥ रसादिपंचीकृतभूतसंभवं भोगालयं दुःखसुखादिकर्मणाम्। शरीरमाद्यंतवदादिकर्मजं मायामयं स्थूलमुपाधिमात्मनः ॥ २८ ॥ सूक्ष्मं मनोबुद्धिदशेंद्रियैर्युतं प्राणैरपंचीकृतभूतसंभवम्। भोक्तुः सुखादेरनुसाधनं भवेच्छरीरमन्यद्विदुरात्मनो बुधाः ॥ २९ ॥ अनाद्यनिर्वाच्यमपीह

कारणं मायाप्रधानं तु परं शरीरकम् । उपाधिभेदात्तु यतः पृथक्-
स्थितं स्वात्मानमात्मन्यवधारयेत्क्रमात् ॥ ३० ॥ कोशेषु पंचस्वपि
तत्तदाकृतिर्विभाति संगात्स्फटिकोपलो यथा । असंगरूपोऽयमजो
यतोऽद्वयो विज्ञायतेऽस्मिन्परितो विचारिते ॥ ३१ ॥ बुद्धेस्त्रिधा
वृत्तिरपीह दृश्यते स्वप्नादिभेदेन गुणत्रयात्मनः । अन्योन्य-
तोऽस्मिन्व्यभिचारतो मृषा नित्ये परे ब्रह्मणि केवले शिवे
॥ ३२ ॥ देहेंद्रियप्राणमनश्चिदात्मनां संघादजस्रं परिवर्तते
धियः । वृत्तिस्तमोमूलतयाऽज्ञलक्षणा यावद्भवेत्तावदसौ
भवोद्भवः ॥ ३३ ॥ नेतिप्रमाणेन निराकृताखिलो हृदा समा-
स्वादितचिद्घनामृतः । त्यजेदशेषं जगदात्तसद्रसं पीत्वा यथा-
ऽम्भः प्रजहाति तत्फलम् ॥ ३४ ॥ कदाचिदात्मा न मृतो न जायते
न क्षीयते नापि विवर्धते नवः । निरस्तसर्वातिशयः सुखात्मकः
स्वयंप्रभः सर्वगतोऽयमद्वयः ॥ ३५ ॥ एवंविधे ज्ञानमये सुखात्मके
कथं भवो दुःखमयः प्रतीयते । अज्ञानतोऽध्यासवशात्प्रकाशते
ज्ञाने विलीयेत विरोधतः क्षणात् ॥ ३६ ॥ यदन्यदन्यत्र विभाव्यते
भ्रमादध्यासमित्याहुरमुं विपश्चितः । असर्पभूतेऽहिविभावनं यथा
रज्ज्वादिके तद्वदपीश्वरे जगत् ॥ ३७ ॥ विकल्पमायारहिते चिदा-
त्मकेऽहंकार एष प्रथमः प्रकल्पितः । अध्यास एवात्मनि सर्वकारणे
निरामये ब्रह्मणि केवले परे ॥ ३८ ॥ इच्छादिरागादिसुखादि-
धर्मिकाः सदा धियः संसृतिहेतवः परे । यस्मात्प्रसुप्तौ तदभावतः
परः सुखस्वरूपेण विभाव्यते हि नः ॥ ३९ ॥ अनाद्यविद्योद्भवबुद्धि-
बिंबितो जीवः प्रकाशोऽयमितीर्यते चितः । आत्मा धियः साक्षितया
पृथक् स्थितो बुद्ध्या परिच्छिन्नपरः स एव हि ॥ ४० ॥ चिद्बिंब-
साक्षात्मधियां प्रसंगतस्त्वेकत्र वासादनलाक्तलोहवत् । अन्योन्यम-

ध्यासवशात्प्रतीयते जडाजडत्वं च चिदात्मचेतसोः ॥ ४१ ॥ गुरोः सकाशादपि वेदवाक्यतः संजातविद्यानुभवो निरीक्ष्य तम् । स्वात्मानमात्मस्थमुपाधिवर्जितं त्यजेदशेषं जडमात्मगोचरम् ॥ ४२ ॥ प्रकाशरूपोऽहमजोऽहमद्वयोऽसकृद्विभातोऽहमतीव निर्मलः । विशुद्धविज्ञानघनो निरामयः संपूर्ण आनंदमयोऽहमक्रियः ॥ ४३ ॥ सदैव मुक्तोऽहमचिंत्यशक्तिमानतींद्रियज्ञानमविक्रियात्मकः । अनंतपारोऽहमहर्निशं बुधैर्विभावितोऽहं हृदि वेदवादिभिः ॥ ४४ ॥ एवं सदात्मानमखंडितात्मना विचार्यमाणस्य विशुद्धभावना । हन्यादविद्यामचिरेण कारकै रसायनं यद्वदुपासितं रुजः ॥ ४५ ॥ विविक्त आसीन उपारतेंद्रियो विनिर्जितात्मा विमलांतराशयः । विभावयेदेकमनन्यसाधनो विज्ञानदृक्केवल आत्मसंस्थितः ॥ ४६ ॥ विश्वं यदेतत्परमात्मदर्शनं विलापयेदात्मनि सर्वकारणे । पूर्णश्चिदानंदमयोऽवतिष्ठते न वेद बाह्यं न च किंचिदांतरम् ॥ ४७ ॥ पूर्वं समाधेरखिलं विचिंतयेदोङ्कारमात्रं सचराचरं जगत् । तदेव वाच्यं प्रणवो हि वाचको विभाव्यते ज्ञानवशान्न बोधतः ॥ ४८ ॥ अकारसंज्ञः पुरुषो हि विश्वको ह्युकारकस्तैजस ईर्यते क्रमात् । प्राज्ञो मकारः परिपठ्यतेऽखिलैः समाधिपूर्वं न तु तत्त्वतो भवेत् ॥ ४९ ॥ विश्वं त्वकारं पुरुषं विलापयेदुकारमध्ये बहुधा व्यवस्थितम् । ततो मकारे प्रविलाप्य तैजसं द्वितीयवर्णं प्रणवस्य चांतिमम् ॥ ५० ॥ मकारमप्यात्मनि चिद्घने परे विलापयेत्प्राज्ञमपीह कारणम् । सोऽहं परं ब्रह्म सदा विमुक्तिमद्विज्ञानदृङ्मुक्त उपाधितोऽमलः ॥ ५१ ॥ एवं सदा जातपरात्मभावनः स्वानंदतुष्टः परिविस्मृताखिलः । आस्ते स नित्यात्मसुखप्रकाशकः साक्षाद्विमुक्तोऽचलवारिसिंधुवत् ॥ ५२ ॥ एवं सदाऽभ्यस्तसमाधियोगिनो निवृत्तसर्वेंद्रियगोचरस्य हि ।

विनिर्जिताशेषरिपोरहं सदा दृश्यो भवेयं जितषड्गुणात्मनः ॥ ५३ ॥ ध्यात्वैवमात्मानमहर्निशं मुनिस्तिष्ठेत्सदा मुक्तसमस्तबंधनः । प्रारब्धमश्नन्नभिमानवर्जितो मय्येव साक्षात्प्रविलीयते ततः ॥ ५४ ॥ आदौ च मध्ये च तथैव चांततो भयं विदित्वा भयशोककारणम् । हित्वा समस्तं विधिवादचोदितं भजेत्स्वमात्मानमथाखिलात्मनाम् ॥ ५५ ॥ आत्मन्यभेदेन विभावयन्निदं भवत्यभेदेन मयात्मना तदा । यथा जलं वारिनिधौ यथा पयः क्षीरे वियद्व्योम्न्यनिले यथानिलः ॥ ५६ ॥ इत्थं यदीक्षेत हि लोकसंस्थितो जगन्मृषैवेति विभावयन्मुनिः । निराकृतत्वाच्छ्रुतियुक्तिमानतो यथेंदुभेदो दिशि दिग्भ्रमादयः ॥ ५७ ॥ यावन्न पश्येदखिलं मदात्मकं तावन्मदाराधनतत्परो भवेत् । श्रद्धालुरत्यूर्जितभक्तिलक्षणो यस्तस्य दृश्योऽहमहर्निशं हृदि ॥ ५८ ॥ रहस्यमेतच्छ्रुतिसारसंग्रहं मया विनिश्चित्य तवोदितं प्रिय । यस्त्वेतदालोचयतीह बुद्धिमान्स मुच्यते पातकराशिभिः क्षणात् ॥ ५९ ॥ भ्रातर्यदीदं परिदृश्यते जगन्मायैव सर्वं परिहृत्य चेतसा । मद्भावनाभावितशुद्धमानसः सुखी भवानंदमयो निरामयः ॥ ६० ॥ यः सेवते मामगुणं गुणात्परं हृदा कदा वा यदि वा गुणात्मकम् । सोऽहं स्वपादांचितरेणुभिः स्पृशन्पुनाति लोकत्रितयं यथा रविः ॥ ६१ ॥ विज्ञानमेतदखिलं श्रुतिसारमेकं वेदांतवेद्यचरणेन मयैव गीतम् । यः श्रद्धया परिपठेद्गुरुभक्तियुक्तो मद्रूपमेति यदि मद्वचनेषु भक्तिः ॥ ६२ ॥ इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकांडे रामगीता समाप्ता ॥

## ३८१. रामरक्षास्तोत्रम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीरामरक्षास्तोत्रमंत्रस्य बुधकौशिक ऋषिः । श्रीसीतारामचंद्रो देवता । अनुष्टुप् छंदः । सीता शक्तिः ।

श्रीमद्धनुमान् कीलकम् । श्रीरामचंद्रप्रीत्यर्थे रामरक्षास्तोत्रजपे विनियोगः ॥ अथ ध्यानम् ॥ ध्यायेदाजानुबाहुं धृतशरधनुषं बद्धपद्मासनस्थं पीतं वासो वसानं नवकमलदलस्पर्धिनेत्रं प्रसन्नम् । वामांकारूढसीतामुखकमलमिलल्लोचनं नीरदाभं नानालंकारदीप्तं दधतमुरुजटामंडलं रामचंद्रम् ॥ इति ध्यानम् ॥ चरितं रघुनाथस्य शतकोटिप्रविस्तरम् । एकैकमक्षरं पुंसां महापातकनाशनम् ॥ १ ॥ ध्यात्वा नीलोत्पलश्यामं रामं राजीवलोचनम् । जानकीलक्ष्मणोपेतं जटामुकुटमंडितम् ॥ २ ॥ सासितूणधनुर्बाणपाणिं नक्तंचरांतकम् । स्वलीलया जगत्त्रातुमाविर्भूतमजं विभुम् ॥ ३ ॥ रामरक्षां पठेत्प्राज्ञः पापघ्नीं सर्वकामदाम् । शिरो मे राघवः पातु भालं दशरथात्मजः ॥ ४ ॥ कौसल्येयो दृशौ पातु विश्वामित्रप्रियः श्रुती । घ्राणं पातु मखत्राता मुखं सौमित्रिवत्सलः ॥ ५ ॥ जिह्वां विद्यानिधिः पातु कंठं भरतवंदितः । स्कंधौ दिव्यायुधः पातु भुजौ भग्नेशकार्मुकः ॥ ६ ॥ करौ सीतापतिः पातु हृदयं जामदग्न्यजित् । मध्यं पातु खरध्वंसी नाभिं जांबवदाश्रयः ॥ ७ ॥ सुग्रीवेशः कटी पातु सक्थिनी हनुमत्प्रभुः । ऊरू रघूत्तमः पातु रक्षःकुलविनाशकृत् ॥ ८ ॥ जानुनी सेतुकृत्पातु जंघे दशमुखांतकः । पादौ विभीषणश्रीदः पातु रामोऽखिलं वपुः ॥ ९ ॥ एतां रामबलोपेतां रक्षां यः सुकृती पठेत् । स चिरायुः सुखी पुत्री विजयी विनयी भवेत् ॥ १० ॥ पातालभूतलव्योमचारिणश्छद्मचारिणः । न द्रष्टुमपि शक्तास्ते रक्षितं रामनामभिः ॥ ११ ॥ रामेति रामभद्रेति रामचंद्रेति वा स्मरन् । नरो न लिप्यते पापैर्भुक्तिं मुक्तिं च विंदति ॥ १२ ॥ जगज्जैत्रैकमंत्रेण रामनाम्नाऽभिरक्षितम् । यः कंठे धारयेत्तस्य करस्थाः सर्वसिद्धयः ॥ १३ ॥ व्रज-

पंजरनामेदं यो रामकवचं स्मरेत् । अव्याहताज्ञः सर्वत्र लभते जयमंगलम् ॥ १४ ॥ आदिष्टवान्यथा स्वप्ने रामरक्षामिमां हरः । तथा लिखितवान्प्रातः प्रबुद्धो बुधकौशिकः ॥ १५ ॥ आरामः कल्पवृक्षाणां विरामः सकलापदाम् । अभिरामस्त्रिलोकानां रामः श्रीमान्स नः प्रभुः ॥ १६ ॥ तरुणौ रूपसंपन्नौ सुकुमारौ महाबलौ । पुंडरीकविशालाक्षौ चीरकृष्णाजिनांबरौ ॥ १७ ॥ फलमूलाशिनौ दांतौ तापसौ ब्रह्मचारिणौ । पुत्रौ दशरथस्यैतौ भ्रातरौ रामलक्ष्मणौ ॥ १८ ॥ शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्वधनुष्मताम् । रक्षःकुलनिहंतारौ त्रायेतां नो रघूत्तमौ ॥ १९ ॥ आत्तसज्जधनुषाविषुस्पृशावक्षयाशुगनिषंगसंगिनौ । रक्षणाय मम रामलक्ष्मणावग्रतः पथि सदैव गच्छताम् ॥ २० ॥ सन्नद्धः कवची खड्गी चापबाणधरो युवा । गच्छन्मनोऽरथोऽस्माकं रामः पातु सलक्ष्मणः ॥ २१ ॥ रामो दाशरथिः शूरो लक्ष्मणानुचरो बली । काकुत्स्थः पुरुषः पूर्णः कौसल्येयो रघूत्तमः ॥२२॥ वेदांतवेद्यो यज्ञेशः पुराणपुरुषोत्तमः । जानकीवल्लभः श्रीमानप्रमेयपराक्रमः ॥ २३ ॥ इत्येतानि जपेन्नित्यं मद्भक्तः श्रद्धयान्वितः । अश्वमेधाधिकं पुण्यं संप्राप्नोति न संशयः ॥ २४ ॥ रामं दूर्वादलश्यामं पद्माक्षं पीतवाससम् । स्तुवंति नामभिर्दिव्यैर्न ते संसारिणो नरः ॥ २५ ॥ रामं लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुंदरं काकुत्स्थं करुणार्णवं गुणनिधिं विप्रप्रियं धार्मिकम् । राजेंद्रं सत्यसंधं दशरथतनयं श्यामलं शांतमूर्तिं वंदे लोकाभिरामं रघुकुलतिकं राघवं रावणारिम् ॥ २६ ॥ रामाय रामभद्राय रामचंद्राय वेधसे । रघुनाथाय नाथाय सीतायाः पतये नमः ॥ २७ ॥ श्रीराम राम रघुनंदन राम राम श्रीराम राम भरताग्रज राम राम । श्रीराम राम रणकर्कश राम राम श्रीराम राम शरणं भव राम राम ॥ २८ ॥ श्रीरामचंद्र-

चरणौ मनसा स्मरामि श्रीरामचंद्रचरणौ वचसा गृणामि । श्रीरामचंद्रचरणौ शिरसा नमामि श्रीरामचंद्रचरणौ शरणं प्रपद्ये ॥ २९ ॥ माता रामो मत्पिता रामचंद्रः स्वामी रामो मत्सखा रामचंद्रः । सर्वस्वं मे रामचंद्रो दयालुर्नान्यं जाने नैव जाने न जाने ॥ ३० ॥ दक्षिणे लक्ष्मणो यस्य वामे च जनकात्मजा । पुरतो मारुतिर्यस्य तं वंदे रघुनंदनम् ॥ ३१ ॥ लोकाभिरामं रणरंगधीरं राजीवनेत्रं रघुवंशनाथम् । कारुण्यरूपं करुणाकरं तं श्रीरामचंद्रं शरणं प्रपद्ये ॥ ३२ ॥ मनोजवं मारुततुल्यवेगं जितेंद्रियं बुद्धिमतां वरिष्ठम् । वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ॥ ३३ ॥ कूजंतं रामरामेति मधुरं मधुराक्षरम् । आरुह्य कविताशाखां वंदे वाल्मीकिकोकिलम् ॥ ३४ ॥ आपदामपहर्तारं दातारं सर्वसंपदाम् । लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥ ३५ ॥ भर्जनं भवबीजानामर्जनं सुखसंपदाम् । तर्जनं यमदूतानां रामरामेति गर्जनम् ॥ ३६ ॥ रामो राजमणिः सदा विजयते रामं रमेशं भजे रामेणाभिहता निशाचरचमू रामाय तस्मै नमः । रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर ॥ ३७ ॥ राम रामेति रामेति रमे रामे मनोरमे । सहस्रनाम तत्तुल्यं रामनाम वरानने ॥ ३८ ॥ इति श्रीबुधकौशिकविरचितं रामरक्षास्तोत्रं संपूर्णम् ॥

## ३८२. ब्रह्मदेवकृता रामस्तुतिः ।

श्रीगणेशाय नमः ॥ ब्रह्मोवाच ॥ वंदे देवं विष्णुमशेषस्थितिहेतुं त्वामध्यात्मज्ञानिभिरंतर्हृदि भाव्यम् । हेयाहेयद्वंद्वविहीनं परमेकं सत्तामात्रं सर्वहृदिस्थं दृशिरूपम् ॥ १ ॥ प्राणापानौ निश्चयबुद्ध्या हृदि रुद्ध्वा छित्त्वा सर्वं संशयबंधं विषयौघान् । पश्यंतीशं यंगत-

मोहा यतयस्तं वंदे रामं रत्नकिरीटं रविभासम् ॥ २ ॥ मायातीतं माधवमाद्यं जगदादिं मानातीतं मोहविनाशं मुनिवंद्यम् । योगिध्येयं योगविधानं परिपूर्णं वंदे रामं रंजितलोकं रमणीयम् ॥ ३ ॥ भावाभावप्रत्ययहीनं भवमुख्यैर्भोगासक्तैरर्चितपादांबुजयुग्मम् । नित्यं शुद्धं बुद्धमनंतं प्रणवाख्यं वंदे रामं वीरमशेषासुरदावम् ॥ ४ ॥ त्वं मे नाथो नाथितकार्याखिलकारी मानातीतो माधवरूपोऽखिलधारी । भक्त्या गम्यो भावितरूपो भवहारी योगाभ्यासैर्भावितचेतःसहचारी ॥ ५ ॥ त्वामाद्यंतं लोकततीनां परमीशं लोकानां नो लौकिकमानैरधिगम्यम् । भक्तिश्रद्धाभावसमेतैर्भजनीयं वंदे रामं सुंदरमिंदीवरनीलम् ॥ ६ ॥ को वा ज्ञातुं त्वामतिमानं गतमानं मानासक्तो माधवशक्तो मुनिमान्यम् । वृंदारण्ये वंदितवृंदारकवृंदं वंदे रामं भवमुखवंद्यं सुखकंदम् ॥ ७ ॥ नानाशास्त्रैर्वेदकदंबैः प्रतिपाद्यं नित्यानंदं निर्विषयज्ञानमनादिम् । मत्सेवार्थं मानुषभावं प्रतिपन्नं वंदे रामं मरकतवर्णं मथुरेशम् ॥ ८ ॥ श्रद्धायुक्तो यः पठतीमं स्तवमाद्यं ब्राह्मं ब्रह्मज्ञानविधानं भुवि मर्त्यः । रामं श्यामं कामितकामप्रदमीशं ध्यात्वा ध्याता पातकजालैर्विगतः स्यात् ॥ ९ ॥ इति श्रीमदध्यात्मरामायणे युद्धकांडे ब्रह्मदेवकृतं रामस्तोत्रं संपूर्णम् ॥

## ३८३. जटायुकृतरामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ जटायुरुवाच ॥ अगणितगुणमप्रमेयमाद्यं सकलजगत्स्थितिसंयमादिहेतुम् । उपरमपरमं परात्मभूतं सततमहं प्रणतोऽस्मि रामचंद्रम् ॥ १ ॥ निरवधिसुखमिंदिराकटाक्षं क्षपितसुरेंद्रचतुर्मुखादिदुःखम् । नरवरमनिशं नतोऽस्मि रामं वरदमहं वरचापबाणहस्तम् ॥ २ ॥ त्रिभुवनकमनीयरूपमीड्यं रविशतभासुरमी-

हितप्रदानम्। शरणदमनिशं सुरागमूले कृतनिलयं रघुनंदनं प्रपद्ये ॥ ३ ॥ भवविपिनदवाग्निनामधेयं भवमुखदैवतदैवतं दयालुम्। दनुजपतिसहस्रकोटिनाशं रवितनयासदृशं हरिं प्रपद्ये ॥ ४ ॥ अविरतभवभावनातिदूरं भवविमुखैर्मुनिभिः सदैव दृश्यम्। भवजलधिसुतारणांघ्रिपोतं शरणमहं रघुनंदनं प्रपद्ये ॥ ५ ॥ गिरिशगिरिसुतामनोनिवासं गिरिवरधारिणमीहिताभिरामम्। सुरवरदनुजेंद्रसेवितांघ्रिं सुरवरदं रघुनायकं प्रपद्ये ॥ ६ ॥ परधनपरदारवर्जितानां परगुणभूतिषु तुष्टमानसानाम्। परहितनिरतात्मनां सुसेव्यं रघुवरमंबुजलोचनं प्रपद्ये ॥ ७ ॥ स्मितरुचिरविकासिताननाब्जमतिसुलभं सुरराजराजनीलम्। सितजलरुहचारुनेत्रशोभं रघुपतिमीशगुरोर्गुरुं प्रपद्ये ॥८॥ हरिकमलजशंभुरूपभेदात्त्वमिह विभासि गुणत्रयानुवृत्तः। रविरिव जलपूरितोदपात्रेष्वमरपतिस्तुतिपात्रमीशमीडे ॥ ९ ॥ रतिपतिशतकोटिसुंदरांगं शतपथगोचरभावनाविदूरम्। यतिपतिहृदये सदा विभातं रघुपतिमार्तिहरं प्रभुं प्रपद्ये ॥ १० ॥ इत्येवंस्तुवतस्तस्य प्रसन्नोऽभूद्रघूत्तमः। उवाच गच्छ भद्रं ते मम विष्णोः परं पदम् ॥ ११ ॥ शृणोति य इदं स्तोत्रं लिखेद्वा नियतः पठेत्। स याति मम सारूप्यं मरणे मत्स्मृतिं लभेत् ॥ १२ ॥ इति राघवभाषितं तदा श्रुतवान् हर्षसमाकुलो द्विजः। रघुनंदनसाम्यमास्थितः प्रययौ ब्रह्मसुपूजितं पदम् ॥ १३ ॥ इति श्रीमदध्यात्मरामायणे अरण्यकांडे जटायुकृतं रामस्तोत्रं संपूर्णम् ॥

## ३८४. रामाष्टकम्।

श्रीगणेशाय नमः ॥ भजे विशेषसुंदरं समस्तपापखंडनम्। स्वभक्तचित्तरंजनं सदैव राममद्वयम् ॥ १ ॥ जटाकलापशोभितं समस्तपापनाशकम्। स्वभक्तभीतिभंजनं भजे ह राममद्वयम् ॥ २ ॥

निजस्वरूपबोधकं कृपाकरं भवापहम्। समं शिवं निरंजनं भजे ह राममद्वयम् ॥ ३ ॥ सहप्रपंचकल्पितं ह्यनामरूपवास्तवम् । निराकृतिं निरामयं भजे ह राममद्वयम् ॥ ४ ॥ निष्प्रपंचनिर्विकल्पनिर्मलं निरामयम् । चिदेकरूपसंततं भजे ह राममद्वयम् ॥ ५ ॥ भवाब्धिपोतरूपकं ह्यशेषदेहकल्पितम् । गुणाकरं कृपाकरं भजे ह राममद्वयम् ॥ ६ ॥ महावाक्यबोधकैर्विराजमानवाक्पदैः । परब्रह्म व्यापकं भजे ह राममद्वयम् ॥ ७ ॥ शिवप्रदं सुखप्रदं भवच्छिदं भ्रमापहम् । विराजमानदैशिकं भजे ह राममद्वयम् ॥ ८ ॥ रामाष्टकं पठति यः सुकरं सुपुण्यं व्यासेन भाषितमिदं शृणुते मनुष्यः । विद्यां श्रियं विपुलसौख्यमनंतकीर्तिं संप्राप्य देहविलये लभते च मोक्षम् ॥ ९ ॥ इति श्रीव्यासविरचितं रामाष्टकं संपूर्णम् ॥

## ३८५. रामाष्टकम् ।

श्रीगणेशाय नमः ॥ कृतार्तदेववंदनं दिनेशवंशनंदनम् । सुशोभिभालचंदनं नमामि राममीश्वरम् ॥ १ ॥ मुनींद्रयज्ञकारकं शिलाविपत्तिहारकम् । महाधनुर्विदारकं नमामि राममीश्वरम् ॥ २ ॥ स्वतातवाक्यकारिणं तपोवने विहारिणम् । करेषु चापधारिणं नमामि राममीश्वरम् ॥ ३ ॥ कुरंगमुक्तसायकं जटायुमोक्षदायकम् । प्रविद्धकीशनायकं नमामि राममीश्वरम् ॥ ४ ॥ प्लवंगसंगसंमतिं निबद्धनिम्नगापतिम् । दशास्यवंशसंक्षतिं नमामि राममीश्वरम् ॥ ५ ॥ विदीनदेवहर्षणं कपीप्सितार्थवर्षणम् । स्वबंधुशोककर्षणं नमामि राममीश्वरम् ॥ ६ ॥ गतारिराज्यरक्षणं प्रजाजनार्तिभक्षणम् । कृतास्तमोहलक्षणं नमामि राममीश्वरम् ॥ ७ ॥ हृताखिलाचलाभरं स्वधामनीतनागरम् । जगत्तमोदिवाकरं नमामि राममीश्वरम् ॥ ८ ॥ इदं समाहितात्मना नरो रघूत्तमाष्टकम् । पठन्निरंतरं भयं भवोद्भवं न

विंदते ॥ ९ ॥ इति श्रीपरमहंसस्वामिब्रह्मानंदविरचितं श्रीरामाष्टकं संपूर्णम् ॥

## ३८६. श्रीमहादेवकृतं रामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीमहादेव उवाच ॥ नमोऽस्तु रामाय सशक्तिकाय नीलोत्पलश्यामलकोमलाय । किरीटहारांगदभूषणाय सिंहासनस्थाय महाप्रभाय ॥ १ ॥ त्वमादिमध्यांतविहीन एकः सृजस्यवस्यत्सि च लोकजातम् । स्वमायया तेन न लिप्यसे त्वं यत्स्वे सुखेऽजस्त्ररतोऽनवद्यः ॥ २ ॥ लीलां विधत्से गुणसंवृतस्त्वं प्रसन्नभक्तानुविधानहेतोः । नानावतारैः सुरमानुषाद्यैः प्रतीयसे ज्ञानिभिरेव नित्यम् ॥ ३ ॥ स्वांशेन लोकं सकलं विधाय तं बिभर्षि च त्वं तदधः फणीश्वरः । उपर्यधो भान्वनिलोडुपौषधीप्रवर्षरूपोऽवसि नैकधा जगत् ॥ ४ ॥ त्वमिह देहभृतां शिखिरूपः पचसि भक्तमशेषमजस्रम् । पवनपंचकरूपसहायो जगदखंडमनेन बिभर्षि ॥ ५ ॥ चंद्रसूर्यशिखिमध्यगतं यत्तेज ईश चिदशेषतनूनाम् । प्राभवत्तनुभृतामिह धैर्यं शौर्यमात्रमखिलं तव सत्त्वम् ॥ ६ ॥ त्वं विरिंचिशिवविष्णुविभेदात् कालकर्मशशिसूर्यविभागात् । वादिनां पृथगिवेश विभासि ब्रह्म निश्चितमनन्यदिहैकम् ॥ ७ ॥ मत्स्यादिरूपेण यथा त्वमेकः श्रुतौ पुराणेषु च लोकसिद्धः । तथैव सर्वं सदसद्विभागस्त्वमेव नान्यद्भवतो विभाति ॥ ८ ॥ यद्यत्समुत्पन्नमनंतसृष्टावुत्पस्यते यच्च भवच्च यच्च । न दृश्यते स्थावरजंगमादौ त्वया विनाऽतः परतः परस्त्वम् ॥ ९ ॥ तत्त्वं न जानंति परात्मनस्ते जनाः समस्तास्तव माययाऽतः । त्वद्भक्तसेवामलमानसानां विभाति तत्त्वं परमेकमैशम् ॥ १० ॥ ब्रह्मादयस्ते न विदुः स्वरूपं चिदात्मतत्त्वं बहिरर्थभावाः । ततो बुधस्त्वामिदमेव रूपं भक्त्या

भजन्मुक्तिमुपैत्यदुःखः ॥ ११ ॥ अहं भवन्नामगुणैः कृतार्थो वसामि काश्यामनिशं भवान्या । मुमूर्षमाणस्य विमुक्तयेऽहं दिशामि मंत्रं तव रामनाम ॥ १२ ॥ इमं स्तवं नित्यमनन्यभक्त्या शृण्वंति गायंति लिखंति ये वै । ते सर्वसौख्यं परमं च लब्ध्वा भवत्पदं यांतु भवत्प्रसादात् ॥ १३ ॥ इति श्रीमहादेवकृतरामस्तोत्रं संपूर्णम् ॥

## ३८७. अहल्याकृतं रामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अहल्योवाच ॥ अहो कृतार्थाऽस्मि जगन्निवास ते पादाब्जसंलग्नरजःकणादहम् । स्पृशामि यत्पद्मजशंकरादिभिर्विमृग्यते रंधितमानसैः सदा ॥ १ ॥ अहो विचित्रं तव राम चेष्टितं मनुष्यभावेन विमोहितं जगत् । चलस्यजस्रं चरणादिवर्जितः संपूर्ण आनंदमयोऽतिमायिकः ॥ २ ॥ यत्पादपंकजपरागपवित्रगात्रा भागीरथी भवविरिंचिमुखान्पुनाति । साक्षात्स एव मम दृग्विषयो यदाऽऽस्ते किं वर्ण्यते मम पुराकृतभागधेयम् ॥ ३ ॥ मर्त्यावतारे मनुजाकृतिं हरिं रामाभिधेयं रमणीयदेहिनम् । धनुर्धरं पद्मविशाललोचनं भजामि नित्यं न परान्भजिष्ये ॥ ४ ॥ यत्पादपंकजरजःश्रुतिभिर्विमृग्यं यन्नाभिपंकजभवः कमलासनश्च । यन्नामसाररसिको भगवान्पुरारिस्तं रामचंद्रमनिशं हृदि भावयामि ॥ ५ ॥ यस्यावतारचरितानि विरिंचिलोके गायंति नारदमुखा भवपद्मजाद्याः । आनंदजाश्रुपरिषिक्तकुचाग्रसीमा वागीश्वरी च तमहं शरणं प्रपद्ये ॥ ६ ॥ सोऽयं परात्मा पुरुषः पुराण एषः स्वयंज्योतिरनंत आद्यः । मायातनुं लोकविमोहनीयां धत्ते परानुग्रह एष रामः ॥ ७ ॥ अयं हि विश्वोद्भवसंयमानामेकः स्वमायागुणबिंबितो यः । विरिंचिविष्णवीश्वरनामभेदान् धत्ते स्वतंत्रः परिपूर्ण आत्मा ॥ ८ ॥ नमोऽस्तु ते राम

तवांघ्रिपंकजं श्रिया धृतं वक्षसि लालितं प्रियात्। आक्रांतमेकेन जगत्रयं पुरा ध्येयं मुनींद्रैरभिमानवर्जितैः ॥ ९ ॥ जगतामादिभूतस्त्वं जगत्त्वं जगदाश्रयः। सर्वभूतेष्वसंयुक्त एको भाति भवान्परः ॥ १० ॥ ॐकारवाच्यस्त्वं राम वाचामविषयः पुमान्। वाच्यवाचकभेदेन भवानेव जगन्मयः ॥ ११ ॥ कार्यकारणकर्तृत्वफलसाधनभेदतः। एको विभासि राम त्वं मायया बहुरूपया ॥ १२ ॥ त्वन्मायामोहितधियस्त्वां न जानंति तत्त्वतः। मानुषं त्वाऽभिमन्यन्ते मायिनं परमेश्वरम् ॥ १३ ॥ आकाशवत्त्वं सर्वत्र बहिरंतर्गतोऽमलः। असंगो ह्यचलो नित्यः शुद्धो बुद्धः सदव्ययः ॥ १४ ॥ योषिन्मूढाहमज्ञा ते तत्त्वं जाने कथं विभो। तस्मात्ते शतशो राम नमस्कुर्यामनन्यधीः ॥ १५ ॥ देव मे यत्रकुत्रापि स्थिताया अपि सर्वदा। त्वत्पादकमले सक्ता भक्तिरेव सदाऽस्तु मे ॥ १६ ॥ नमस्तेपु रुषाध्यक्ष नमस्ते भक्तवत्सल। नमस्तेऽस्तु हृषीकेश नारायण नमोऽस्तु ते ॥ १७ ॥ भवभयहरमेकं भानुकोटिप्रकाशं करधृतशरचापं कालमेघावभासम्। कनकरुचिरवस्त्रं रत्नवत्कुंडलाढ्यं कमलविशदनेत्रं सानुजं राममीडे ॥ १८ ॥ स्तुत्वैवं पुरुषं साक्षाद्राघवं पुरतः स्थितम्। परिक्रम्य प्रणम्याशु सानुज्ञाता ययौ पतिम् ॥ २९ ॥ अहल्यया कृतं स्तोत्रं यः पठेद्भक्तिसंयुतः। स मुच्यतेऽखिलैः पापैः परं ब्रह्माधिगच्छति ॥ २० ॥ पुत्राद्यर्थे पठेद्भक्त्या रामं हृदि निधाय च। संवत्सरेण लभते वंध्या अपि सुपुत्रकम् ॥ २१ ॥ सर्वान्कामानवाप्नोति रामचंद्रप्रसादतः ॥ २२ ॥ ब्रह्मघ्नो गुरुतल्पगोऽपि पुरुषः स्तेयी सुरापोऽपि वा मातृभ्रातृविहिंसकोऽपि सततं भोगैकबद्धादरः। नित्यं स्तोत्रमिदं जपन्रघुपतिं भक्त्या हृदिस्थं स्मरन् ध्यायन् मुक्तिमुपैति किं पुनरसौ स्वाचारयुक्तो नरः ॥ २३ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे बालकांडांतर्गतमहल्या-
विरचितं रामचंद्रस्तोत्रं संपूर्णम् ॥

## ३८८. इन्द्रकृतरामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ इंद्र उवाच ॥ भजेहं सदा राममिंदीवराभं भवारण्यदावानलाभाभिधानम् । भवानीहृदा भावितानंदरूपं भवाभावहेतुं भवादिप्रपन्नम् ॥ १ ॥ सुरानीकदुःखौघनाशैकहेतुं नराकारदेहं निराकारमीड्यम् । परेशं परानंदरूपं वरेण्यं हरिं राममीशं भजे भारनाशम् ॥ २ ॥ प्रपन्नाखिलानंददोहं प्रपन्नं प्रपन्नार्तिनिःशेषनाशाभिधानम् । तपोयोगयोगीशभावाभिभाव्यं कपीशादिमित्रं भजे राममित्रम् ॥ ३ ॥ सदा भोगभाजां सुदूरे विभातं सदा योगभाजामदूरे विभातम् । चिदानंदकंदं सदा राघवेशं विदेहात्मजानंदरूपं प्रपद्ये ॥ ४ ॥ महायोगमायाविशेषानुयुक्तो विभासीश लीलानराकारवृत्तिः । त्वदानंदलीलाकथापूर्णकर्णाः सदानंदरूपा भवंतीह लोके ॥ ५ ॥ अहं मानपानाभिमत्तप्रमत्तो न वेदाखिलेशाभिमानाभिमानः । इदानीं भवत्पादपद्मप्रसादात्त्रिलोकाधिपत्याभिमानो विनष्टः ॥ ६ ॥ स्फुरद्रत्नकेयूरहाराभिरामं धराभारभूतासुरानीकदावम् । शरच्चंद्रवक्त्रं लसत्पद्मनेत्रं दुरावारपारं भजे राघवेशम् ॥ ७ ॥ सुराधीशनीलाभ्रनीलांगकांतिं विराधादिरक्षोवधाल्लोकशांतिम् । किरीटादिशोभं पुरारातिलाभं भजे रामचंद्रं रघूणामधीशम् ॥ ८ ॥ लसच्चंद्रकोटिप्रकाशादिपीठे समासीनमंके समाधाय सीताम् । स्फुरद्धेमवर्णं तडित्पुंजभासं भजे रामचंद्रं निवृत्तार्तितंद्रम् ॥ ९ ॥ इति श्रीमदध्यात्मरामायणे युद्धकांडे इंद्रकृतं रामस्तोत्रं संपूर्णम् ॥

## ३८९. रामचन्द्राष्टकम् ।

श्रीगणेशाय नमः ॥ ॐ चिदाकारो धाता परमसुखदा पावनतनु-र्मुनींद्रैर्योगींद्रैर्यतिपतिसुरेंद्रैर्हनुमता । सदा सेव्यः पूर्णो जनकतनयांगः सुरगुरू रमानाथो रामो रमतु मम चित्ते तु सततम् ॥ १ ॥ मुकुंदो गोविंदो जनकतनयालालितपदः पदं प्राप्ता यस्याधमकुलभवा चापि शबरी । गिरातीतोऽगम्यो विमलधिषणैर्वेदवचसा रमानाथो रामो रमतु मम चित्ते तु सततम् ॥ २ ॥ धराधीशोऽधीशः सुरनरवराणां रघुपतिः किरीटी केयूरी कनककपिशः शोभितवपुः । समासीनः पीठे रविशत-निभे शांतमनसो रमानाथो रामो रमतु मम चित्ते तु सततम् ॥ ३ ॥ वरेण्यः शरण्यः कपिपतिसखा शांतविधुरो ललाटे काश्मीरो रुचिर-गतिभंगः शशिमुखः । नराकरो रामो यतिपतिनुतः संस्मृतिहरो रमानाथो रामो रमतु मम चित्ते तु सततम् ॥ ४ ॥ विरूपाक्षः काश्या-मुपदिशति यन्नाम शिवदं सहस्रं यन्नाम्नां पठति गिरिजा प्रत्युषसि वै । कलौ के गायंतीश्वरविधिमुखा यस्य चरितं रमानाथो रामो रमतु मम चित्ते तु सततम् ॥ ५ ॥ परो धीरोऽनीरोऽसुरकुलभवश्चासुरहरः परात्मा सर्वज्ञो नरसुरगणैर्गीतसुयशाः । अहल्याशापघ्नः शरकर अजः कौशिकसखा रमानाथो रामो रमतु मम चित्ते तु सततम् ॥ ६ ॥ हृषीकेशः शौरिर्धरणिधरशायी मधुरिपुरुपेंद्रो वैकुंठो गजरिपुहरस्तुष्ट-मनसः । बलिध्वंसी वीरो दशरथसुतो नीतिनिपुणो रमानाथो रामो रमतु मम चित्ते तु सततम् ॥ ७ ॥ कविः सौमित्रीड्यः कपटमृगघाती वनचरो रणश्लाघी दांतो धरणिभरहर्ता सुरनुतः । अमानी मानज्ञो निखिलजनपूज्यो हृदिशयो रमानाथो रामो रमतु मम चित्ते तु सततम् ॥ ८ ॥ इदं रामस्तोत्रं वरममरदासेन रचितमुषःकाले भक्त्या यदि

पठति यो भावसहितम् । मनुष्यः स क्षिप्रं जनिमृतिभयं तापजनकं परित्यज्य श्रेष्ठं रघुपतिपदं याति शिवदम् ॥ ९ ॥ इति श्रीमद्राम-दासपूज्यपादशिष्यश्रीमद्धंसदासशिष्येणामरदासाख्यकविना विरचितं श्रीमद्रामचंद्राष्टकं संपूर्णम् ॥

## ३९०. श्रीसीतारामाष्टकम् ।

श्रीगणेशाय नमः ॥ ब्रह्ममहेंद्रसुरेंद्रमरुद्गणरुद्रमुनींद्रगणैरतिरम्यं क्षीरसरित्पतितीरमुपेत्य नुतं हि सतामवितारमुदारम् । भूमिभर-प्रशमार्थमथ प्रथितप्रकटीकृतचिद्घनमूर्तिं त्वां भजतो रघुनंदन देहि दयाघन मे स्वपदांबुजदास्यम् ॥ १ ॥ पद्मदलायतलोचन हे रघुवंशवि-भूषणदेव दयालो निर्मलनीरदनीलततोऽखिललोकहृदंबुजभासकभानो। कोमलगात्र पवित्रपदाब्जरजःकणपावितगौतमकांत त्वां भजतो० ॥ २॥ पूर्ण परात्पर पालय मामतिदीनमनाथमनंतसुखाब्धे प्रावृड-भ्रतडित्सुमनोहरपीतवरांबर राम नमस्ते । कामविभंजन कांततरानन कांचनभूषण रत्नकिरीटं त्वां भजतो० ॥ ३ ॥ दिव्यशरच्छशि-कांतिहरोज्ज्वलमौक्तिकमालविशालसुमौले कोटिरविप्रभ चारुचरित्र पवित्र विचित्रधनुःशरपाणे । चंडमहाभुजदंडविखंडितराक्षसराजमहा-गजदंडं त्वां भजतो० ॥ ४ ॥ दोषविहिंस्रभुजंगसहस्रसुरोपममहानल-कीलकलापे जन्मजरामरणोर्मिमनोमदमन्मथनक्रभवाब्धौ । दुःखनिधौ च चिरं पतितं कृपयाऽद्य समुद्धर राम ततो मां त्वां भजतो० ॥ ५ ॥ संसृतिघोरमदोत्कटकुंजरतृट्क्षुन्नीरदपिंडिततुंड दंडकरोन्मथितं च रजस्तमउन्मदमोहपदोज्झितमार्तम् । दीनमनन्यगतिं कृपणं शरणा-गतमाशु विमोचय मूढं त्वां भजतो० ॥ ६ ॥ जन्मशतार्जितपाप-समन्वितहृत्कमले पतिते पशुकल्पे हे रघुवीर महारणधीर दयां कुरु मय्यतिमंदमनीषे । त्वं जननी भगिनी च पिता मम तावदसि

त्वविताऽपि कृपालो त्वां भजतो० ॥ ७ ॥ त्वां तु दयालुमकिंचनवत्सलमुत्पलहारमपारमुदारं रामं विहाय कमन्यमनामयमीश जनं शरणं ननु यायाम् । त्वत्पदपद्ममतः श्रितमेव मुदा खलु देव सदाऽत्र ससीतं त्वां भजतो० ॥ ८ ॥ यः करुणामृतसिंधुरनाथजनोत्तमबंधुरजोत्तमकारी भक्तभयोर्मिभवाब्धितरी सरयूतटिनीतटचारुविहारी । तस्य रघुप्रवरस्य निरंतरमष्टकमेतदनिष्टहरं वै । यस्तु पठेदमरः स नरो लभतेऽच्युतरामपदांबुजदास्यम् ॥ ९ ॥ इति श्रीमन्मधुसूदनाश्रमशिष्याऽच्युतयतिविरचितं श्रीमत्सीतारामाष्टकं संपूर्णम् ॥

## ३११. श्रीराममहिम्नः स्तोत्रम् ।

श्रीगणेशाय नमः ॥ महामोहावर्ते पतितमिह मां ते शरणगं शरण्यस्त्वत्तोऽन्यः प्रभवति न कोऽप्यत्र जगति । अतस्त्वत्पादाम्भोरुहयुगलमाश्रित्य नितरां स्थितोऽहं संसाराद्वृजिननिचयादुद्धर विभो ॥ १ ॥ निजाव्यक्तेनेदं जगदखिलमिच्छादिकरणैः समुत्पन्नं प्रत्यावसितसततं श्रीरघुपते । युगान्ते सर्वं वै हरसि किल रौद्रेण वपुषा त्वमेकः सर्वात्मन्विहरसि न चान्यो गुणनिधे ॥ २ ॥ रमन्ते योगीन्द्रास्त्रिपुरहरमुख्यास्त्वयि सदा समाधौ विश्वात्मन्नियमितहृषीको रघुपते । तथाप्येते पारं निखिलनिगमागोचरविभो महिम्नस्ते गन्तुं गमयितुमलं नैव कुशलाः ॥ ३ ॥ कदाचिद्भौमान्वै गणयति कणान्कोऽपि मतिमान् तथा पारावारोदकलवचयान्वै रघुपते । क्वचिन्नक्षत्रौघं विषमगणनं पारयति वै गुणानां ते पारं गमयितुमलं नैव कुशलाः ॥ ४ ॥ ऋतं सत्यं भूमन्सगुणमगुणं रूपमुभयं चिदानन्दं तद्वै निखिलनिगमैरप्यविदितम् । समष्टिव्यष्टी ते विलसति विराड्रूपमपरं तदेतद्वै किंचित्स्फुरति हृदये चैव विदुषाम् ॥ ५ ॥ विरिञ्चिश्चेन्द्राद्यैरमरनिवहैः सिद्धमुनिभिः स्तुतस्त्वं भूभारं व्यसनमपहर्तुं सुरपतेः । विभुः

कौसल्यायां दशरथगृहे स्वानुजयुतः समुद्भूतश्चक्रे निजपदकृतार्थां वसुमतीम् ॥ ६ ॥ मुनेर्विश्वामित्राच्छरणद बलां चाप्यतिबलां महाविद्यां प्राप्य प्रणतसुखसौभाग्यद विभो । शरेणैकेन त्वं निशिचरवधूं चातिमहतीं महाघोरां हत्वा विपिनमभयं चैव कृतवान् ॥ ७ ॥ करालास्यं घोरं निशिचरयुगं कौणपवरं श्रुतीनां द्वेष्टारं मुनिमखविघाते च निरतम् । सुबाहुं मारीचं निशितविशिखेनोरसि दृढं निहत्यैकैकेनाध्वरभुवि पुरा प्राकृतधियम् ॥ ८ ॥ शिलाभूतां शापाच्चरणजसा गौतमवधूं यथापूर्वां कृत्वा परमसुभगां चातिविमलाम् । महोत्तुङ्गं चापं सपदि शितिकण्ठस्य सुदृढं द्विधा खण्डं चक्रे जनकनगरीं प्राप्य मुनिना ॥ ९ ॥ शरद्राकेशास्यां विमलकलधौताङ्गरुचिरां स्फुरद्रत्नाकल्पां जनकतनयां विश्वजननीम् । सुभार्यां यद्रामो विधिवदुपयेमे सुललितां महेन्द्रेशब्रह्मामरमुकुटनीराजितपदाम् ॥ १० ॥ महाघोरं त्रुट्यत्त्रिपुरहरचापस्य निनदं समाकर्ण्य क्रोधाद्भृगुकुलपतेः क्षत्रियरिपोः । पथि प्राप्तस्यास्य स्मयमपि जहर्थ त्वमतुलं महाविद्य प्रद्योतनकुलमणे पाहि नितराम् ॥ ११ ॥ सुराणां रक्षायै सपदि पितुराज्ञां सकरुणं समादाय प्रागात्वनमनुजयुक्तोवनितया । जनस्थानं प्राप्यमालवटतरूणां फलवतामधश्चक्रे वासो दनुजकुलनाशाय च विभो ॥ १२ ॥ प्रभो लङ्केशस्य प्रबलतमवीर्यस्य भगिनीं विरूपां कृत्वा वै दनुजखरमुख्यान्निशिचरान् । सुरारातीन्हत्वा द्विजकुलविघातेषु निरतान्निरातङ्कं चक्रे विपिनमपि स्वैरं जनपदम् ॥ १३ ॥ दशग्रीवाज्ञप्तः कनकमृगरूपेण विचरन् विचित्रो मारीचः प्रसभमभियातः स्वनिकटे । असौ मायावीति प्रणतजनसौभाग्यद विभो त्वया ज्ञात्वा नीतः सपदि विशिखेनान्तकपुरीम् ॥ १४ ॥ मुमूर्षुः पौलस्त्यः कपटयतिवेषेण कुमतिः परोक्षं सीताया हरणमकरोच्छ्रीरघुपते । सुराणां रक्षायै रजनिचरनाथस्य

हननं विमृश्यैतत्सर्वं खरहर तवैवेङ्गितमभूत् ॥ १५ ॥ वियोगे जानक्यास्त्विह मनुजभावेन विचरन्जटायुं दृष्ट्वा वै विपिनगतमासन्नमरणम् । त्वया तस्योद्धारः स्वकरकमलेनैव विहितस्तवैतद्वात्सल्यं विलसति हि भक्तेषु नितराम् ॥ १६ ॥ कबन्धं क्रव्यादं निशितकरवालेन महता द्रुतं हत्वा पम्पातटमनुजयुक्तश्च गतवान् । युवां दृष्ट्वा ज्ञातुं प्लवगपतिना वायुतनयः समाज्ञप्तश्चागाद्वरद तव पादाब्जयुगलम् ॥ १७ ॥ समाकर्ण्य त्वत्तः सकलमसुरारातिममलं विदित्वा निःशङ्कं दशरथसुतं त्वां रघुपते । महोत्साहोन्नीतः सपदि गिरिपृष्ठे हनुमता प्रभुः सुग्रीवेण प्लवगपतिना सख्यमकरोत् ॥ १८ ॥ कपीशं हत्वा वालिमतुलबलवीर्यं यभरं स्वदुराधर्षं देवैरसुरनिवहैरप्यसुलभम् । त्वया सुग्रीवाय प्लवगकुलराजेन्द्रपदवी प्रदत्ता देवेश प्रणतजनवात्सल्यजलधे ॥ १९ ॥ प्रतापात्ते नूनं सलिलनिधिमुल्लङ्घ्य तरसा गतो लङ्कां दृष्ट्वा जनकतनयां चातिविमलाम् । निहत्याक्षं दग्ध्वा पुरमथ समुत्पाट्य विपिनं हनूमान्त्वत्पादं पुनरपि समागाद्रघुपते ॥ २० ॥ विदित्वा सीतायाः पवनजमुखाद्दुःखमतुलं निहन्तुं क्रव्यादेश्वरमपि तथा राक्षसकुलम् । प्रतस्थे सुग्रीवाङ्गदहनुमदाद्यैः कपिभटैः सुगुप्तामादाय प्लवगकुलसेनां च महतीम् ॥ २१ ॥ प्लवङ्गैर्भल्लूकैरमितभुजवीर्यैः परिवृतो निषङ्गी कोदण्डी शरमपि दधानः करतले । क्रमान्मार्गं नीत्वा सलिलनिधितीरे सुविपुले गतस्त्वं सुग्रीवाङ्गदहनुमदाद्यैः कपिवरैः ॥ २२ ॥ तदाग्रे तत्रागाच्छरणद दशास्यानुजवरः प्रपन्नस्त्वत्पादाम्बुजयुगलमाराध्यममरैः । कृपापारावारामितगुणनिधे सिन्धुपुलिने त्वया दत्ता तस्मै वृजिनहर लङ्केशपदवी ॥ २३ ॥ उषित्वा तत्तीरे त्रिदिनमरविन्दाक्ष कपिभिस्ततः किंचित्क्रोधान्नियमनभयात्ते जलनिधिः । पुरः प्रह्वीभूतो रुचिरवचनैः श्रीरघुपते स्तुतिं चक्रे नत्वा पुलकिततनुर्गद्गदगिरा ॥२४॥

अकूपारस्यान्ताद्दशदिशगतैर्वानरभटैस्त्वयाऽऽज्ञप्तैर्नीता निजभुजबलैः प्रस्तरचयाः । पुनस्तैः पाषाणैर्विपुल इह नीलेन रचितो महासेतुर्वाधौ तव विदितनाम्नोऽस्ति महिमा ॥ २५ ॥ यदेते पाषाणाः सततमुदके मज्जनपरास्तरन्त्यब्धौ नूनं जगति परमं चाद्भुतमिदम् । किमाश्चर्यं तत्र क्षणचलितनेत्रान्तविभवः कटाक्षस्ते नूनं जगति कति ब्रह्माण्डरचनाः ॥ २६ ॥ समुत्तार्याशेषान्प्लवगनिवहाँल्लक्ष्मणयुतस्ततो लङ्कां गत्वा स्वयमपि समुत्तीर्णजलधिः । निहत्याजौ सर्वं रजनिचरवृन्दं च सकुलं दशग्रीवं हत्वा विमलतरमैश्वर्यमकरोः ॥ २७ ॥ विरिञ्चीशेन्द्राद्यैरमरनिवहैः सिद्धमुनिभिः स्तुतः स्तोत्रैः कृत्वा कुसुमचयवृष्टिं सुविपुलाम् । कटाक्षेणैवैतांस्त्रिदशमुनिमुख्यान्करुणया विलोक्य प्रध्वस्तं भयमखिलमेषां रघुपते ॥ २८ ॥ प्रभो त्वं सुग्रीवप्रमुखविविधैर्वानरभटैर्युतो वैदेहीं वै दहनसुविशुद्धां सुविपुलाम् । समादाय स्थित्वा धनपतिविमाने सुविमले वितन्वन्स्वानां वै मुदमतुलमागान्निजपुरीम् ॥ २९ ॥ सहस्रं वर्षाणामयुतमपि कुर्वन्वसुमतीं सनाथां वैदेहीरमण कृतवान् राज्यमतुलम् । अयोध्यायां देवासुरनृपकिरीटेषु निचितैर्महारत्नैर्नीराजितचरणपङ्केरुह विभो ॥ ३० ॥ कृशानुः शेषाद्यः शशधरयुतो विजयमति (?) ते भजन्ति ध्यायंतस्तव चरणपङ्केरुहयुगम् । गृहे तेषां पद्मा विहरति मुखे गीः सुललिता सुभोगान्भुक्त्वान्ते तव वरपदं यान्ति परमम् ॥ ३१ ॥ खबीजं शेषाग्नौ दहनमपरश्चैव पवनो नमोऽन्तः षड्वर्णापरमपदहेतुश्च भजताम् । इमं मन्त्रं यो वै जपति गुरुवक्त्रादधिगतं जगत्पूज्यो भोगान्भुवि परमदिव्यान्स लभते ॥ ३२ ॥ घनश्यामं विद्युत्प्रभवसनमाकल्परुचिरं सरोजाक्षं चैवामितमदनलावण्यसुभगम् । तडिद्वर्णां वामे जनकतनयां राघवमुखं प्रपश्यन्तीं ध्यायन् भजति परमां सिद्धिमतुलाम् ॥ ३३ ॥ अनन्तान्याहुर्वै तव

विविधरूपाणि भगवन्न तानि ज्ञातुं वै कथमपि समर्थाश्च विबुधाः। विभूतीनामन्तं ते विमलबल को वेत्ति नितरामतद्व्यावृत्त्या वै त्वयि सकलवेदाश्च चकिताः ॥ ३४ ॥ तवेदं यद्रूपं सजलजलदाभं सुललितं तदेतत्तत्त्वज्ञा मुनिवरगणा हृत्सरसिजे। मुहुर्ध्यायन्ते वै विगतविषयाः सङ्गरहिता ययुर्नित्यानन्दं पदममरवन्द्यं रघुपते ॥ ३५ ॥ त्वमिन्दुस्त्वं सोमस्त्वमसि तरणिस्त्वं हुतवहस्त्वमापस्त्वं भूमिस्त्वमसि पवनस्त्वं च गगनम्। विरिञ्चिस्त्वं रुद्रस्त्वमसि सकलं दृश्यमिह यत्त्वदन्यद्वस्त्वेकं न हि जगति भूमन्रघुपते ॥ ३६ ॥ त्वमेवादौ भूमन्निगमनिचयानां जलनिधौ निमग्नानां चैवोद्धरणमकरोर्मीनवपुषा। सुधाकामैर्नीतं सलिलनिधिनिर्मन्थनविधौ गिरिं पृष्ठे त्वं वै दृढकमठरूपेण धृतवान् ॥ ३७ ॥ निहत्याजौ दैत्यं प्रलयजलधौ घोरमतुलं समुद्धारं भूमेर्गिरिकुलयुतायाः सरभसम्। ..............महादंष्ट्राग्रेणामितगुणनिधे त्वं च कृतवान् ॥३८॥ स्वभक्तं प्रह्लादं परमविदुषामार्यममलं विदित्वा तं पित्रा कृतविविधदण्डं कुमतिना। विधायोग्रं रूपं नरहरिविचित्रं त्रिनयनं जघान त्वं दैत्येश्वरममितवीर्यं रघुपते ॥ ३९ ॥ सुनासीरैश्वर्यं हृतमतुलवीर्येण बलिना विदित्वेदं राम प्रणतजनवात्सल्यजलधे। स्तुतस्त्वं शक्राद्यैरमरनिवहैर्वामनवपुर्विधायोग्रं वैरोचनमपि बबन्धामररिपुम् ॥ ४० ॥ कुलं क्षात्रं सप्तत्रिगुणमपि कृत्वा रघुपते जघान त्वं राज्ञां प्रबलमिह शस्त्रास्त्रविशदम्। निहत्योग्रान्कंसप्रमुखदितिजान्यादवकुले त्वमाविर्भूयोग्रं समरभुवि भारं च हृतवान् ॥ ४१ ॥ अनन्तान्येवं वै तव विविधरूपाणि च विभो प्रवक्तुं तानीह प्रभवति न कोऽप्यत्र जगति। परात्मन्श्रीराम त्रिगुणरहिताकारपरमप्रभो पारावारामितगुणनिधे चिद्धन विभो ॥ ४२ ॥ नमस्ते श्रीराम ह्यमितगुणग्रामाय सततं नमो भूयो भूयो पुनरपि नमस्ते

रघुपते । नमो वेदैर्वन्द्याखिलमुनिगणाराध्य भगवन्नमो भूयो भूयस्तव चरणपङ्केरुहयुगे ॥ ४३ ॥ मया ते पादाम्भोरुहयुगलमाश्रित्य नितरामयोध्यायां भक्त्या विविधपदरम्यैः सुरचितम् । इदं रामस्तोत्रं प्रपठति नरो यः प्रतिदिनं स भुक्त्वा भोगान्वै भजति परमं शाश्वतपदम् ॥ ४४ ॥ सहस्रैः शेषो वै प्रभवति न वक्त्रैर्गुणगणान् प्रवक्तुं चाकल्पं कथमपि च ते राम सततम् । अतस्त्वां कः स्तोतुं प्रभवति ह्यलं श्रीरघुपते व्रजन्त्याकाशस्य क्वचिदपि च पारं हि मशकाः ॥ ४५ ॥ तुभ्यं नमो भगवते रघुनन्दनाय श्रीजानकीप्रियतमाय खरान्तकाय । योगीन्द्रपूजितपदाम्बुरुहद्वयाय संसारदुःखशमनाय नमो नमस्ते ॥ ४६ ॥ कामाद्या दुर्जयाश्चेन्मम भवतु पुनर्मुक्तियोषित्सु कामः क्रोधश्चेत्तावके वै तव चरणयुगाम्भोरुहे स्याच्च लोभः । मोहश्चेद्ध्यानयोगे भवतु मम पुनर्मत्सरोमत्सरो वै त्वत्पादाम्भोजसौख्यस्थितिमिह नितरां नैव पश्यामि भूमौ ॥ ४७ ॥ इति श्रीमद्रामाचार्यविरचितं श्रीराममहिम्नः स्तोत्रं समाप्तम् ॥

## ३९२. रामभुजङ्गप्रयातस्तोत्रम् ।

श्रीगणेशाय नमः ॥ विशुद्धं परं सच्चिदानन्दरूपं गुणाधारमाधारहीनं वरेण्यम् । महान्तं विभान्तं गुहान्तं गुणान्तं सुखान्तं स्वयंधाम रामं प्रपद्ये ॥ १ ॥ शिवं नित्यमेकं विभुं तारकाख्यं सुखाकारमाकारशून्यं सुमान्यम् । महेशं कलेशं सुरेशं परेशं नरेशं निरीशं महीशं प्रपद्ये ॥ २ ॥ यदाऽवर्णयत्कर्णमूलेऽन्तकाले शिवो राम रामेति रामेति काश्याम् । तदेकं परं तारकब्रह्मरूपं भजेऽहं भजेऽहं भजेऽहं भजेऽहम् ॥ ३ ॥ महारत्नपीठे शुभे कल्पमूले सुखासीनमादित्यकोटिप्रकाशम् । सदा जानकीलक्ष्मणोपेतमेकं सदा रामचन्द्रं भजेऽहं भजेऽहम् ॥ ४ ॥

क्वणद्रत्नमञ्जीरपादारविन्दं लसन्मेखलाचारुपीताम्बराढ्यम् । महारत्न-हारोल्लसत्कौस्तुभाङ्गं नदच्चञ्चरीमञ्जरीलोलमालम् ॥ ५ ॥ लसच्चन्द्रिकास्मेरशोणाधराभं समुद्यत्पतङ्गेन्दुकोटिप्रकाशम् । नमद्ब्रह्मरुद्रादिकोटीररत्नस्फुरत्कान्तिनीराजनाराधितांघ्रिम् ॥ ६ ॥ पुरः प्राञ्जलीनाञ्जनेयादिभक्तान्स्वचिन्मुद्रया भद्रया बोधयन्तम् । भजेऽहं भजेऽहं सदा रामचन्द्रं त्वदन्यं न मन्ये न मन्ये न मन्ये ॥ ७ ॥ यदा मत्समीपं कृतान्तः समेत्य प्रचण्डप्रकोपैर्भटैर्भीषयेन्माम् । तदाऽविष्करोषि त्वदीयं स्वरूपं सदापत्प्रणाशं सकोदण्डबाणम् ॥ ८ ॥ निजे मानसे मन्दिरे संनिधेहि प्रसीद प्रसीद प्रभो रामचन्द्र । ससौमित्रिणा कैकयीनन्दनेन स्वशक्त्यानुभक्त्या च संसेव्यमान ॥ ९ ॥ स्वभक्ताग्रगण्यैः कपीशैर्महीशैरनीकैरनेकैश्च राम प्रसीद । नमस्ते नमोऽस्त्वीश राम प्रसीद प्रशाधि प्रशाधि प्रकाशं प्रभो माम् ॥ १० ॥ त्वमेवासि दैवं परं मे यदेकं सुचैतन्यमेतत्त्वदन्यं न मन्ये । यतोऽभूदमेयं वियद्वायुतेजोजलोर्व्यादिकार्यं चरं चाचरं च ॥ ११ ॥ नमः सच्चिदानन्दरूपाय तस्मै नमो देवदेवाय रामाय तुभ्यम् । नमो जानकीजीवितेशाय तुभ्यं नमः पुण्डरीकायताक्षाय तुभ्यम् ॥ १२ ॥ नमो भक्तियुक्तानुरक्ताय तुभ्यं नमः पुण्यपुञ्जैकलभ्याय तुभ्यम् । नमो वेदवेद्याय चाद्याय पुंसे नमः सुन्दरायेन्दिरावल्लभाय ॥ १३ ॥ नमो विश्वकर्त्रे नमो विश्वहर्त्रे नमो विश्वभोक्त्रे नमो विश्वमात्रे । नमो विश्वनेत्रे नमो विश्वजेत्रे नमो विश्वपित्रे नमो विश्वमात्रे ॥ १४ ॥ नमस्ते नमस्ते समस्तप्रपञ्चप्रभोगप्रयोगप्रमाणप्रवीण । मदीयं मनस्त्वत्पदद्वन्द्वसेवां विधातुं प्रवृत्तं सुचैतन्यसिद्ध्यै ॥ १५ ॥ शिलापि त्वदङ्घ्रिक्षमासंगिरेणुप्रसादाद्धि चैतन्यमाधत्त राम । नरस्त्वत्पदद्वन्द्वसेवाविधानात्सुचैतन्यमेतीति किं चित्रमत्र ॥ १६ ॥ पवित्रं चरित्रं विचित्रं त्वदीयं नरा ये स्मरन्त्यन्वहं

रामचन्द्र । भवन्तं भवान्तं भरन्तं भजन्तो लभन्ते कृतान्तं न पश्यन्त्यतोऽन्ते ॥ १७ ॥ स पुण्यः स गण्यः शरण्यो ममायं नरो वेद यो देवचूडामणिं त्वाम् । सदाकारमेकं चिदानन्दरूपं मनोवागगम्यं परं धाम राम ॥ १८ ॥ प्रचण्डप्रतापप्रभावाभिभूत प्रभूतारिवीर प्रभो रामचन्द्र । बलं ते कथं वर्ण्यतेऽतीव बाल्ये यतोऽखण्डि चण्डीशकोदण्डदण्डम् ॥ १९ ॥ दशग्रीवमुग्रं सपुत्रं समित्रं सरिद्दुर्गमध्यस्थरक्षोगणेशम् । भवन्तं विना राम वीरो नरो वाऽसुरो वाऽमरो वा जयेत्कस्त्रिलोक्याम् ॥ २० ॥ सदा राम रामेति रामामृतं ते सदाराममानन्दनिष्यन्दकन्दम् । पिबन्तं नमन्तं सुदन्तं हसन्तं हनूमन्तमन्तर्भजे तं नितान्तम् ॥२१॥ सदा राम रामेति रामामृतं ते सदाराममानन्दनिष्यन्दकन्दम् । पिबन्नन्वहं नन्वहं नैव मृत्योर्बिभेमि प्रसादादसादात्तवैव ॥ २२ ॥ असीतासमेतैरकोदण्डभूषैरसौमित्रिवन्द्यैरचण्डप्रतापैः । अलङ्केशकालैरसुग्रीवमित्रैररामाभिधेयैरलं दैवतैर्नः ॥ २३ ॥ अवीरासनस्थैरचिन्मुद्रिकाढ्यैरभक्ताञ्जनेयादितत्त्वप्रकाशैः । अमन्दारमूलैरमन्दारमालैररामाभिधेयैरलं दैवतैर्नः ॥ २४ ॥ असिन्धुप्रकोपैरवन्द्यप्रतापैरबन्धुप्रयाणैरमन्दस्मिताढ्यैः । अदण्डप्रवासैरखण्डप्रबोधैररामाभिधेयैरलं दैवतैर्नः ॥ २५ ॥ हरे राम सीतापते रावणारे खरारे मुरारेऽसुरारे परेति । लपन्तं नयन्तं सदा कालमेवं समालोकयालोकयाशेषबन्धो ॥ २६ ॥ नमस्ते सुमित्रासुपुत्राभिवन्द्य नमस्ते सदा कैकयीनन्दनेड्य । नमस्ते सदा वानराधीशवन्द्य नमस्ते नमस्ते सदा रामचन्द्र ॥ २७ ॥ प्रसीद प्रसीद प्रचण्डप्रताप प्रसीद प्रसीद प्रचण्डारिकाल । प्रसीद प्रसीद प्रपन्नानुकम्पिन् प्रसीद प्रसीद प्रभो रामचन्द्र ॥२८॥ भुजङ्गप्रयातं परं वेदसारं मुदा रामचन्द्रस्य भक्त्या च नित्यम् ॥ पठन्सन्ततं चिन्तयन्स्वान्तरङ्गे स एव स्वयं रामचन्द्रः स धन्यः ॥२९॥

इति श्रीमच्छंकरभगवतः कृतौ श्रीरामभुजङ्गप्रयातस्तोत्रं संपूर्णम् ॥






ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥

## ❀ गायत्रीस्तोत्राणि । ❀

### ३९३. गायत्रीशापोद्धारस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीब्रह्मशापविमोचनमंत्रस्य निग्रहानुग्रहकर्ता प्रजापतिर्ऋषिः, कामदुघा गायत्री छंदः, ॐ ब्रह्मशापविमोचनी गायत्री शक्तिर्देवता, ब्रह्मशापविमोचनार्थे जपे विनियोगः ॥ सवितुर्ब्रह्म मेत्युपासनात्तद्ब्रह्मविदो विदुस्तां प्रयतंति धीराः । सुमनसा वाचा ममाग्रतः । ब्रह्मशापाद्विमुक्ता भव ॥ ॐ विश्वामित्रशापविमोचनमंत्रस्य नूतनसृष्टिकर्ता विश्वामित्र ऋषिः, वाग्देहा गायत्रीछंदः, भुक्तिमुक्तिप्रदा विश्वामित्रानुगृहीता गायत्री शक्तिः, सविता देवता, विश्वामित्रशापविमोचनार्थे जपे विनियोगः ॥ तत्त्वानि चांगेष्वग्निचितो धियांसस्त्रिगर्भां यदुद्भवां देवाश्चोचिरे विश्वसृष्टिम् । तां कल्याणीमिष्टकरीं प्रपद्ये यन्मुखान्निःसृतो वेदगर्भः ॥ ॐ गायत्रि त्वं विश्वामित्रशापाद्विमुक्ता भव ॥ ॐ वसिष्ठशापविमोचनमंत्रस्य वसिष्ठ ऋषिः, विश्वोद्भवा गायत्रीछंदः, वसिष्ठानुगृहीता गायत्री शक्तिर्देवता, वसिष्ठशापविमोचनार्थे जपे विनियोगः ॥ तत्त्वानि चांगेष्वग्निचितो धियांसः ध्यायति विष्णोरायुधानि बिभ्रत् । जनानता सा परमा च शश्वत् । गायत्रीमासाच्छुरनुत्तम च धाम ॥ ॐ गायत्रीवसिष्ठशापाद्विमुक्ता भव । सोऽहमकमहं ज्योतिरर्को ज्योतिरहं शिवः । आत्मज्योतिरहं शुक्रं ज्योतीरसोऽहमोम् ॥ अहो विष्णुमहेशेशे दिव्ये सिद्धि सरस्वति । अजरे अमरे चैव दिव्ययोनि नमोऽस्तु ते ॥ अथ गायत्रीध्यानम् ॥ यद्देवैः सुरपूजितं परतरं सामर्थ्यतारात्मकं पुन्नागांबुजपुष्पनागबकुलैः केशैः शुकैरर्चितम् । नित्यं ध्यानसमस्तदीप्तिकरणं कालाग्निरुद्दीपनं

तत्संहारकरं नमामि सततं पातालसंस्थं सुखम् ॥ इति गायत्री-
शापोद्धारस्तोत्रं संपूर्णम् ॥

## ३९४. गायत्रीकवचम् ।

श्रीगणेशाय नमः ॥ श्रीपार्वत्युवाच ॥ देवदेव महादेव संसारार्णव-
तारकम् । गायत्रीकवचं देव कृपया कथय प्रभो ॥ १ ॥ श्रीमहादेव
उवाच ॥ मूलाधारे स्थिता नित्यं कुंडली तत्त्वरूपिणी । सूक्ष्माति-
सूक्ष्मपरमा बिसतंतुस्वरूपिणी ॥ २ ॥ विद्युत्पुञ्जप्रतीकाशा कुंडली
श्रुतिसर्पिणी । परस्य ब्रह्मग्रहणी पञ्चाशद्वर्णरूपिणी ॥ ३ ॥ शिवस्य
नर्तकी नित्या परब्रह्मप्रपूजिता । ब्राह्मणस्यैव गायत्री चिदानंद-
स्वरूपिणी ॥ ४ ॥ ब्रह्मण्यवर्त्मवातेयं प्राणात्सा नित्यनूतनात् । नित्यं
तिष्ठति सानंदा कुंडली तव विग्रहे ॥ ५ ॥ अतिगोप्यं महत्पुण्यं
त्रिकोटीतीर्थसंयुतम् । सर्वज्ञानमयी देवी सर्वदानमयी सदा ॥ ६ ॥
सर्वसिद्धिमयी देवी पार्वती प्राणवल्लभा । ॐ ॐ ॐ ॐ भूः ॐ
ॐ भुवः ॐ ॐ स्वः ॐ ॐ त ॐ ॐ त्स ॐ ॐ वि ॐ ॐ तु
ॐ ॐ र्व ॐ ॐ रे ॐ ॐ ण्यं ॐ ॐ भ ॐ ॐ र्गो ॐ ॐ
दे ॐ ॐ व ॐ ॐ स्य ॐ ॐ धी ॐ ॐ म ॐ ॐ हि ॐ
ॐ धि ॐ ॐ यो ॐ ॐ यो ॐ ॐ नः ॐ ॐ प्र ॐ ॐ चो
ॐ ॐ द ॐ ॐ यात् ॐ ॐ ॥ ॐ भूः ॐ पातु मे मूलं चतु-
र्दलसमन्वितम् । ॐ भुवः ॐ पातु मे लिङ्गं सजलं षड्दलात्मकम्
॥ ७ ॥ ॐ स्वः ॐ पातु मे कंठं संकाशं दलषोडशम् । ॐ त
ॐ पातु मे रूपं ब्रह्माणं कारणं परम् ॥ ८ ॥ ॐ त्स ॐ पातु मे
ब्रह्मरसं पातु सदा मम । ॐ वि ॐ पातु मे गंधं सदा शिशिर-
संयुतम् ॥ ९ ॥ ॐ तु ॐ पातु मे स्पर्शं शरीरस्य च कारणम् ।

ॐ र्वं ॐ पातु मे शब्दं शब्दविग्रहकारणम् ॥ १० ॥ ॐ रे ॐ पातु मे नित्यं सदा तत्त्वशरीरकम् । ॐ ण्यं ॐ पातु मे ह्यक्षं सर्वतत्त्वैककारणम् ॥ ११ ॥ ॐ भ ॐ पातु मे श्रोत्रं श्रवणस्य च कारणम् । ॐ र्गो ॐ पातु मे घ्राणं गंधोपादानकारणम् ॥ १२ ॥ ॐ दे ॐ पातु मे वास्यं सभायां शब्दरूपिणी । ॐ व ॐ पातु मे बाहुयुगलं ब्रह्मकारणम् ॥ १३ ॥ ॐ स्य ॐ पातु मे लिङ्गं षड्दलं षड्दलैर्युतम् । ॐ धी ॐ पातु मे नित्यं प्रकृतिं शब्दकारणम् ॥ १४ ॥ ॐ म ॐ पातु मे नित्यं मनोब्रह्मस्वरूपिणम् । ॐ हि ॐ पातु मे बुद्धिं परब्रह्ममयं सदा ॥ १५ ॥ ॐ धियः ॐ पातु मे नित्यमहंकारं यथा तथा । ॐ यो ॐ पातु मे नित्यं जलं सर्वत्र सर्वदा । ॐ नः ॐ पातु मे नित्यं तेजःपुञ्जो यथा तथा ॥ १६ ॥ ॐ प्र ॐ पातु मे नित्यमनिलं कार्यकारणम् । ॐ चो ॐ पातु मे नित्यमाकाशं शिवसन्निभम् ॥ १७ ॥ ॐ द ॐ पातु मे जिह्वां जपयज्ञस्य कारणम् । ॐ यात् ॐ मे नित्यं शिवज्ञानमयं सदा ॥ १८ ॥ तत्त्वानि पांतु मे नित्यं गायत्री परदैवतम् । कृष्णा मे सततं पातु ब्रह्माणी भूर्भुवःस्वरोम् ॥ १९ ॥ ॐ अस्य श्रीगायत्रीकवचस्य परब्रह्म ऋषिः, ऋग्यजुःसामाथर्वणश्छन्दांसि, ब्रह्मा देवता, धर्मार्थकाममोक्षार्थं जपे विनियोगः ॥ ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । कामक्रोधादिकं सर्वं स्मरणाद्याति दूरतः । इदं कवचमज्ञात्वा ब्रह्मविद्यां जपेद्यदि ॥ २० ॥ शतकोटिजपेनापि न सिद्धिर्जायते प्रिये । गायत्रीकवचात्सर्वं स्मरणात्सिध्यति ध्रुवम् ॥ २१ ॥ पठित्वा कवचं विप्रो गायत्रीं सकृदुच्चरेत् । सर्वपापविनिर्मुक्तो जीवन्मुक्तो भवेद्द्विजः ॥ २२ ॥ इदं कवचमज्ञात्वा ह्यन्यद्यः कवचं पठेत् । सर्वं तस्य

वृथा देवि त्रैलोक्यमंगलादिकम् ॥ २३ ॥ गायत्रीकवचं यस्य जिह्वायां विद्यते सदा। तदाऽमृतमयी जिह्वा पवित्रा जपपूजने ॥ २४ ॥ इदं कवचमज्ञात्वा ब्रह्मविद्यां जपेद्यदि। व्यर्थं भवति चार्वङ्गि तज्जपो वनरोदनम् ॥ २५ ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महांति पातकान्यस्य स्मरणाद्यान्ति दूरतः ॥ २६ ॥ नश्वरं मांसमेदोऽस्थिमज्जाशुक्रविनिर्मितम् ॥ २७ ॥ वातपित्तकफैर्युक्तं स्थूलदेहं तदुच्यते। सूक्ष्मं ज्योतिर्मयं देहं पञ्चभूतात्मकं विदुः ॥ २८ ॥ महापद्मवनांतस्थं सर्वावयवसंयुतम्। आधारदेहसंबंधाद्गायत्री ब्रह्मणः स्वयम् ॥ २९ ॥ एतदेव परं ब्रह्म कथिते उभयात्मके। ब्राह्मणस्यैव जीवात्मा गायत्रीसहितो वपुः ॥ ३० ॥ आत्मनां हृदयांभोजे प्रदीपकलिकोपमम्। निर्धूमं च यथा ज्योतिस्तैलाग्निवार्तियोगतः ॥ ३१ ॥ तज्ज्योतिः परमं ब्रह्म शुभदं नात्र संशयः। गायत्रीकवचं न्यासं मातृकास्थानसंधिषु ॥ ३२ ॥ स कृत्वा ब्राह्मणश्रेष्ठ चान्यन्यासं समाचरेत्। अन्यन्यासे तथा सिद्धिरन्यथाऽरण्यरोदनम् ॥ ३३ ॥ गायत्रीन्यासमात्रेण परब्रह्ममयो द्विजः। इदं कवचमज्ञात्वा ब्रह्मचर्यं करोति यः ॥ ३४ ॥ ब्रह्मचर्यं भवेद्व्यर्थं गायत्रीकवचं विना। कवचस्य प्रसादेन ब्राह्मणो ज्वलदग्निवत् ॥ ३५ ॥ कवचं परमेशानि सृष्टिस्थितिलयात्मकम्। कवचं ब्राह्मण इदं प्रातरुत्थाय यः पठेत् ॥ ३६ ॥ गायत्रीं स सकृत्स्मृत्वा जपलक्षफलं भवेत्। गायत्रीं दशधा जप्त्वा दशलक्षफलं भवेत् ॥ ३७ ॥ एवं क्रमेण गायत्रीं शतधा प्रजपेद्यदि। शतलक्षफलं प्राप्य विहरेद्देववद्भुवि ॥ ३८ ॥ सूर्येन्द्वोर्ग्रहणे चेदं पठित्वा कवचं द्विजः। सकृद्यदि जपेद्विद्यां गायत्रीं परमाक्षराम् ॥ ३९ ॥ तत्क्षणात्तु भवेत्सिद्धो ब्रह्मसायुज्यमाप्नुयात्।

इदं कवचमज्ञात्वा गायत्रीं प्रजपेत्तु यः ॥ ४० ॥ जप एव वृथा तस्य निस्तेजो न च सिद्धिदः । यः पठेत्कवचं देवि सततं शिव-सन्निधौ ॥ ४१ ॥ विष्णुदेवस्य कवचं प्रजपेच्छक्तिसन्निधौ । तेजः-पुञ्जमयो विप्रस्तत्क्षणाज्जायते ध्रुवम् ॥ ४२ ॥ इति श्रीरुद्रयामले पार्वतीश्वरसंवादे गायत्रीकवचं संपूर्णम् ॥

## ३९७. गायत्रीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ यस्मिन्दृष्टे नैव दृश्येत विश्वं यस्मिँल्लब्धे नैव लब्धव्यशेषः । यस्मिन् ज्ञाते नैव वेद्यांतराशा गायत्र्यर्थं पंचवक्त्रं प्रपद्ये ॥ १ ॥ या गायत्री नामधेयं महार्थं सार्थं कर्तुं संप्रविष्टोपनाये । मार्गे मंत्रान् सर्वतो दर्शयित्वा तारे लीना सर्ववेदार्थदीपे ॥ २ ॥ श्रोतव्यं मे वाक्यमेतत्समस्तैर्वर्णैर्भाव्यं स्वाश्रमप्राप्तचिह्नैः । तेभ्यस्तु-ष्येच्छंकरः श्रीहरिर्वा प्रष्टव्यो वः श्रीगुरुः स्वैर्विनीतैः ॥ ३ ॥ गायत्री चेत्सम्यगाप्ता क्रमेण सा संजप्ता कर्मशुद्ध्या द्विजेन । सा विज्ञाता गोपिता संप्रदायात्किं नो दद्याद्वेदमाता मता चेत् ॥ ४ ॥ बुद्धावीशारोहणं कर्म तस्याः सा चेत्त्यक्ता त्यक्त ईशो द्विजेन । यस्यां सर्वा देवताः संप्रविष्टाः सर्वात्मानं मंत्रराजं प्रपद्ये ॥ ५ ॥ विष्णुः शंभुर्भास्करो विघ्नराजो या वा का वा देवताऽस्या विभूतिः । सैको-पास्या वेदमार्गैकनिष्ठैः क्षीराब्धौ किं दुग्धभिक्षाप्रयासः ॥ ६ ॥ नेयं लभ्या मानुषाणां झषाणां गंगाशब्दो मानुषत्वैकहेतुः । यस्या लब्ध्यै वैदिकाग्रेसराणां वंशे वेदैः संस्कृते जन्महेतुः ॥ ७ ॥ मंत्रैः किं तैर्यैः प्रतीक्ष्येत देवी गायत्र्यम्बा संप्रवेष्टुं द्विजेषु । देवैः किं तैरग्निना पुष्टि-मद्भिस्तस्माद्भस्मोद्धूषितैः सा निषेव्या ॥ ८ ॥ दत्तं भस्म श्रीत्रिपादां-बयैतद्ब्यंघ्रेरग्नेः शेषरूपं स्वरूपम् । तस्माद्भस्म प्रोच्यते भासनाच्च

भूतिर्गायत्र्यम्बयैक्या त्रिपुंड्रम् ॥ ९ ॥ शैवोऽन्यो वा यां विना किं द्विजः स्याच्छैवोऽन्यो वा दीक्षया वेदमातुः । तस्माच्छैवो वैष्णवोऽन्येषु गण्यो गायत्र्यास्ता ब्रह्मता वेदमान्या ॥ १० ॥ भेदापोहव्यापृतिं सा बिभर्ति ध्यानैर्भिन्नैर्ध्याननिष्ठैकवेद्याम् । तस्मान्नामान्यत्र संयान्ति सर्वाण्यस्या निष्ठा शांभवी वैष्णवी च ॥ ११ ॥ लोकस्थास्ते विष्णुरुद्रादिदेवाः कैश्चित्कामैः कैश्चिदेवाधिकारैः । गायत्र्यास्ता भूतयः सेवनीया गायत्र्यां ते सेविताः संभ्रमेण ॥ १२ ॥ ब्रह्मत्वं चेदासुकामोऽस्युपास्स्व गायत्रीं चेल्लोककामोऽन्यदेवम् । कामो ज्ञातः स्वीयपादप्रवृत्त्या वादः को वा तृप्तिहीने प्रवृत्तिः ॥ १३ ॥ बुद्धेः साक्षी बुद्धिगम्यो जपादौ गायत्र्यर्थः सोऽनवो वेदसारः । तद्ब्रह्मैव ब्रह्मतोपासकस्याप्येवं मंत्रः कोऽस्ति तंत्रे पुराणे ॥ १४ ॥ जात्यश्वः किं जातिमाप्तं सकामो गत्यभ्यासात् स्पष्टतामेति जातिः । ब्रह्मत्वासौ कः प्रयासो द्विजानां यद्गायत्र्या व्यज्यते चाष्टमेऽब्दे ॥ १५ ॥ ब्रह्मत्वस्य ख्यापनार्थं प्रविष्टा गायत्रीयं तावताऽस्य द्विजत्वम् । कर्णद्वारा ब्रह्मजन्मप्रदानादुक्तो वेदे ब्राह्मणो ब्रह्मनिष्ठः ॥ १६ ॥ एषा निष्ठा दुर्लभा मर्त्यबुद्धौ तस्माल्लोके वैष्णवाः शांभवाश्च । भिन्नं भिन्नं मार्गमास्थाय वेदं क्षामं कुर्वत्यास्तिकच्छद्मने मे ॥ १७ ॥ पक्षिद्वन्द्वं विद्यते स्वस्वदेहे भोक्तारं सा ध्यानमाचष्ट एतत् । यावत्क्षीणा भोक्तृता स्यात्ततस्तु ज्ञात्वा ब्रूयाद्ब्रह्मतां स्वस्य विद्वान् ॥ १८ ॥ गायत्र्यर्थं नो विजानाति कश्चित्तस्मादन्यं देवमाह द्विजोऽपि । विज्ञातश्चेत्सर्ववादस्य शांतिर्मुक्तिर्हस्ते गायमानस्य मंत्रम् ॥ १९ ॥ भस्मांतं चेद्विश्वमेतत्समस्तं भस्मोद्भूतं भस्म संभासते च । तस्माद्ब्रह्म प्राहुराद्यैर्वचोभिर्वेदास्तस्माद्भस्म लिंगं द्विजानाम् ॥ २० ॥ इति श्रीशंकराचार्याभिप्रायः कृष्णभिक्षुणा ।

वर्णितस्तेन गायत्री विभूत्या सह नन्दतु ॥ २१ ॥ इति श्रीमत्परमहंसपरिव्राजककृष्णानंदसरस्वतीप्रणीतं गायत्रीस्तोत्रं संपूर्णम् ॥

## ३९६. गायत्रीकवचम् ।

श्रीगणेशाय नमः ॥ याज्ञवल्क्य उवाच ॥ स्वामिन्सर्वजगन्नाथ संशयोऽस्ति महान्मम । चतुःषष्टिकलानां च पातकानां च तद्वद ॥ १ ॥ मुच्यते केन पुण्येन ब्रह्मरूपः कथं भवेत् । देहं च देवतारूपं मंत्ररूपं विशेषतः ॥ २ ॥ क्रमतः श्रोतुमिच्छामि कवचं विधिपूर्वकम् । ब्रह्मोवाच ॥ गायत्र्याः कवचस्यास्य ब्रह्मा विष्णुः शिवो ऋषिः ॥ ३ ॥ ऋग्यजुःसामाथर्वाणि छंदांसि परिकीर्तिताः । परब्रह्मस्वरूपा सा गायत्री देवता स्मृता ॥ ४ ॥ रक्षाहीनं तु यत्स्थानं कवचेन विना कृतम् । सर्वं सर्वत्र संरक्षेत्सर्वांगं भुवनेश्वरी ॥ ५ ॥ बीजं भर्गश्च युक्तिश्च धियः कीलकमेव च । पुरुषार्थविनियोगो यो नश्च परिकीर्तितः ॥ ६ ॥ ऋषिं मूर्ध्नि न्यसेत्पूर्वं मुखे छंद उदीरितम् । देवतां हृदि विन्यस्य गुह्ये बीजं नियोजयेत् ॥ ७ ॥ शक्तिं विन्यस्य पदयोर्नाभौ तु कीलकं न्यसेत् । द्वात्रिंशत्तु महाविद्याः सांख्यायनसगोत्रजाः ॥ ८ ॥ द्वादशलक्षसंयुक्ता विनियोगाः पृथक्पृथक् । एवं न्यासविधिं कृत्वा करांगं विधिपूर्वकम् ॥ ९ ॥ व्याहृतित्रयमुच्चार्य ह्यनुलोमविलोमतः । चतुरक्षरसंयुक्तं करांगन्यासमाचरेत् ॥ १० ॥ आवाहनादिभेदं च दश मुद्राः प्रदर्शयेत् । सा पातु वरदा देवी अंगप्रत्यंगसंगमे ॥ ११ ॥ ध्यानं मुद्रां नमस्कारं गुरुमन्त्रं तथैव च । संयोगमात्मसिद्धिं च षड्विधं किं विचारयेत् ॥ १२ ॥ अस्य श्रीगायत्रीकवचस्य, ब्रह्मविष्णुरुद्रा ऋषयः, ऋग्यजुःसामाथर्वाणि छंदांसि, परब्रह्मस्वरूपिणी गायत्री देवता, भूर्बीजं, भुवः शक्तिः, स्वाहा कीलकं, श्रीगायत्रीप्रीत्यर्थं जपे विनियोगः । वर्णास्त्रां कुंडिकाहस्तां

शुद्धनिर्मलज्योतिषीम् । सर्वतत्त्वमयीं वन्दे गायत्रीं वेदमातरम् ॥ १३ ॥ अथ ध्यानम् ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणै- र्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम् । गायत्रीं वरदाभयां- कुशकशां शूलं कपालं गुणं शंखं चक्रमथारविंदयुगलं हस्तैर्वहन्तीं भजे ॥ १४ ॥ ॐ गायत्री पूर्वतः पातु सावित्री पातु दक्षिणे । ब्रह्मविद्या च मे पश्चादुत्तरे मां सरस्वती ॥ १५ ॥ पावकीं मे दिशं रक्षेत् पाव- कोज्ज्वलशालिनी । यातुधानीं दिशं रक्षेद्यातुधानगणार्दिनी ॥ १६ ॥ पावमानीं दिशं रक्षेत्पवमानविलासिनी । दिशं रौद्रीमवतु मे रुद्राणी रुद्ररूपिणी ॥ १७ ॥ ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद्वैष्णवी तथा । एवं दश दिशो रक्षेत् सर्वतो भुवनेश्वरी ॥ १८ ॥ ब्रह्मास्त्रस्मरणादेव वाचां सिद्धिः प्रजायते । ब्रह्म दण्डश्च मे पातु सर्वशस्त्रास्त्रभक्षकः ॥ १९ ॥ ब्रह्म शीर्षस्तथा पातु शत्रूणां वधकारकः । सप्त व्याहृतयः पांतु सर्वदा बिंदुसंयुताः ॥ २० ॥ वेदमाता च मां पातु सरहस्या सदैवता । देवीसूक्तं सदा पातु सहस्राक्षरदेवता ॥ २१ ॥ चतुःषष्टिकला विद्या दिव्याद्या पातु देवता । बीजशक्तिश्च मे पातु पातु विक्रम- देवता ॥ २२ ॥ तत्-पदं पातु मे पादौ जंघे मे सवितुः-पदम् । वरेण्यं कटिदेशं तु नाभिं भर्गस्तथैव च ॥ २३ ॥ देवस्य मे तु हृदयं धीमहीति गलं तथा । धियो मे पातु जिह्वायां यः-पदं पातु लोचने ॥ २४ ॥ ललाटे नः पदं पातु मूर्धानं मे प्रचोदयात् । तद्वर्णः पातु मूर्धानं सकारः पातु भालकम् ॥ २५ ॥ चक्षुषी मे विकारस्तु श्रोत्रं रक्षेत्तु कारकः । नासापुटे वकारो मे रेकारस्तु कपोलयोः ॥ २६ ॥ णिकारस्त्वधरोष्ठे च यकारस्तूर्ध्व ओष्ठके । आस्यमध्ये भकारस्तु गोकारस्तु कपोलयोः ॥ २७ ॥ देकारः कंठदेशे च वकारः स्कंधदेशयोः । स्यकारो दक्षिणं हस्तं धीकारो

वामहस्तकम् ॥ २८ ॥ मकारो हृदयं रक्षेद्धिकारो जठरं तथा । धिकारो नाभिदेशं तु योकारस्तु कटिद्वयम् ॥ २९ ॥ गुह्यं रक्षतु योकार ऊरू मे नः-पदाक्षरम् । प्रकारो जानुनी रक्षेच्चोकारो जंघदेशयोः ॥ ३० ॥ दकारो गुल्फदेशं तु यात्कारः पादयुग्मकम् । जातवेदेति गायत्री त्र्यंबकेति दशाक्षरा ॥ ३१ ॥ सर्वतः सर्वदा पातु आपो-ज्योतीति षोडशी । इदं तु कवचं दिव्यं बाधाशतविनाशकम् ॥ ३२ ॥ चतुःषष्टिकलाविद्यासकलैश्वर्यसिद्धिदम् । जपारंभे च हृदयं जपांते कवचं पठेत् ॥ ३३ ॥ स्त्रीगोब्राह्मणमित्रादिद्रोहाद्य-खिलपातकैः । मुच्यते सर्वपापेभ्यः परं ब्रह्माधिगच्छति ॥ ३४ ॥ पुष्पांजलिं च गायत्र्या मूलेनैव पठेत्सकृत् । शतसाहस्रवर्षाणां पूजायाः फलमाप्नुयात् ॥ ३५ ॥ भूर्जपत्रे लिखित्वैतत् स्वकंठे धारयेद्यदि । शिखायां दक्षिणे बाहौ कंठे वा धारयेद्बुधः ॥ ३६ ॥ त्रैलोक्यं क्षोभयेत्सर्वं त्रैलोक्यं दहति क्षणात् । पुत्रवान् धनवान् श्रीमान्नानाविद्यानिधिर्भवेत् ॥ ३७ ॥ ब्रह्मास्त्रादीनि सर्वाणि तदंगस्पर्शनात्ततः । भवंति तस्य तुच्छानि किमन्यत्कथयामि ते ॥ ३८ ॥ अभिमंत्रितगायत्रीकवचं मानसं पठेत् । तज्जलं पिबतो नित्यं पुरश्चर्याफलं भवेत् ॥ ३९ ॥ लघुसामान्यकं मंत्रं महामंत्रं तथैव च । यो वेत्ति धारणां युंजन् जीवन्मुक्तः स उच्यते ॥ ४० ॥ सप्तव्याहृतिविप्रेन्द्र सप्तावस्थाः प्रकीर्तिताः । सप्तजीवशता नित्यं व्याहृती अग्निरूपिणी ॥ ४१ ॥ प्रणवे नित्ययुक्तस्य व्याहृतीषु च सप्तसु । सर्वेषामेव पापानां संकरे समुपस्थिते ॥ ४२ ॥ शतं सहस्रमभ्यर्च्य गायत्री पावनं महत् । दशशतमष्टोत्तरशतं गायत्री पावनं महत् ॥ ४३ ॥ भक्तियुक्तो भवेद्विप्रः संध्याकर्म समा-चरेत् । काले काले प्रकर्तव्यं सिद्धिर्भवति नान्यथा ॥ ४४ ॥

प्रणवं पूर्वमुद्धृत्य भूर्भुवःस्वस्तथैव च । तुर्यं सहैव गायत्रीजप एवमुदाहृतम् ॥ ४५ ॥ तुरीयपादमुत्सृज्य गायत्रीं च जपेद्द्विजः । स मूढो नरकं याति कालसूत्रमधोगतिः ॥ ४६ ॥ मंत्रादौ जननं प्रोक्तं मंत्रान्ते मृतसूत्रकम् । उभयोर्दोषनिर्मुक्तं गायत्री सफला भवेत् ॥ ४७ ॥ मंत्रादौ पाशबीजं च मंत्रांते कुशबीजकम् । मंत्रमध्ये तु या माया गायत्री सफला भवेत् ॥ ४८ ॥ वाचिकस्त्वहमेव स्यादुपांशु शतमुच्यते । सहस्रं मानसं प्रोक्तं त्रिविधं जपलक्षणम् ॥ ४९ ॥ अक्षमालां च मुद्रां च गुरोरपि न दर्शयेत् । जपं चाक्षस्वरूपेणानामिकामध्यपर्वणि ॥ ५० ॥ अनामा मध्यया हीना कनिष्ठादिक्रमेण तु । तर्जनीमूलपर्यंतं गायत्रीजपलक्षणम् ॥ ५१ ॥ पर्वभिस्तु जपेदेवमन्यत्र नियमः स्मृतः । गायत्री वेदमूलत्वाद्वेदः पर्वसु गीयते ॥ ५२ ॥ दशभिर्जन्मजनितं शतेनैव पुरा कृतम् । त्रियुगं तु सहस्राणि गायत्री हंति किल्बिषम् ॥ ५३ ॥ प्रातःकालेषु कर्तव्यं सिद्धिं विप्रो य इच्छति । नादालये समाधिश्च संध्यायां समुपासते ॥ ५४ ॥ अंगुल्यग्रेण यज्जप्तं यज्जप्तं मेरुलंघने । असंख्यया च यज्जप्तं तज्जप्तं निष्फलं भवेत् ॥ ५५ ॥ विना वस्त्रं प्रकुर्वीत गायत्री निष्फला भवेत् । वस्त्रपुच्छं न जानाति वृथा तस्य परिश्रमः ॥ ५६ ॥ गायत्रीं तु परित्यज्य अन्यमंत्रमुपासते । सिद्धान्नं च परित्यज्य भिक्षामटति दुर्मतिः ॥ ५७ ॥ ऋषिश्छंदो देवताख्या बीजं शक्तिश्च कीलकम् । नियोगं न च जानाति गायत्री निष्फला भवेत् ॥ ५८ ॥ वर्णमुद्राध्यानपदमावाहनविसर्जनम् । दीपं चक्रं न जानाति गायत्री निष्फला भवेत् ॥ ५९ ॥ शक्तिर्न्यासस्तथा स्थानं मंत्रसंबोधनं परम् । त्रिविधं यो न जानाति गायत्री तस्य निष्फला ॥ ६० ॥

पंचोपचारकांश्चैव होमद्रव्यं तथैव च । पंचांगं च विना नित्यं गायत्री निष्फला भवेत् ॥ ६१ ॥ मंत्रसिद्धिर्भवेज्ज्ञातु विश्वामित्रेण भाषितम् । व्यासो वाचस्पतिर्जीवस्तुता देवी तपःस्मृतौ ॥ ६२ ॥ सहस्रजप्ता सा देवी ह्युपपातकनाशिनी । लक्षजाप्ये तथा तच्च महापातकनाशिनी । कोटिजाप्येन राजेन्द्र यदिच्छति तदाप्नुयात् ॥ ६३ ॥ न देयं परशिष्येभ्यो ह्यभक्तेभ्यो विशेषतः । शिष्येभ्यो भक्तियुक्तेभ्यो ह्यन्यथा मृत्युमाप्नुयात् ॥ ६४ ॥ इति श्रीमद्वसिष्ठसंहितोक्तं गायत्रीकवचं संपूर्णम् ॥

## ३९७. सावित्रीपंजरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ भगवंतं देवदेवं ब्रह्माणं परमेष्ठिनम् । विधातारं विश्वसृजं पद्मयोनिं प्रजापतिम् ॥ १ ॥ शुद्धस्फटिकसंकाशं महेन्द्रशिखरोपमम् । बद्धपिंगजटाजूटं तडित्कनककुंडलम् ॥ २ ॥ शरच्चंद्राभवदनं स्फुरदिन्दीवरेक्षणम् । हिरण्मयं विश्वरूपमुपवीताजिनावृतम् ॥ ३ ॥ मौक्तिकाभाक्षवलयस्तंत्रीलयसमन्वितः । कर्पूरोद्धूलिततनुः स्रष्टुर्नयनवर्धनम् ॥ ४ ॥ विनयेनोपसंगम्य शिरसा प्रणिपत्य च । नारदः परिपप्रच्छ देवर्षिगणमध्यगः ॥ ५ ॥ नारद उवाच ॥ भगवन् देवदेवेश सर्वज्ञ करुणानिधे । श्रोतुमिच्छामि प्रश्नेन भोगमोक्षैकसाधनम् ॥ ६ ॥ ऐश्वर्यस्य समग्रस्य फलदं द्वंद्ववर्जितम् । ब्रह्महत्यादिपापघ्नं पापाद्यरिभयापहम् ॥ ७ ॥ यदेकं निष्कलं सूक्ष्मं निरंजनमनामयम् । यत्ते प्रियतमं लोके तन्मे ब्रूहि पितर्मम ॥ ८ ॥ ब्रह्मोवाच ॥ शृणु नारद वक्ष्यामि ब्रह्ममूलं सनातनम् । सृष्ट्यादौ मन्मुखे क्षिप्तं देवदेवेन विष्णुना ॥ ९ ॥ प्रपंचबीजमित्याहुरुत्पत्तिस्थितिहेतुकम् । पुरा मया तु कथितं कश्यपाय

सुधीमते ॥ १० ॥ सावित्रीपंजरं नाम रहस्यं निगमत्रये। ऋष्यादिकं च दिग्वर्णं सांगावरणकं क्रमात् ॥ ११ ॥ वाहनायुधमंत्राख्यं मूर्तिध्यानसमन्वितम्। स्तोत्रं शृणु प्रवक्ष्यामि तव स्नेहाच्च नारद। ॥ १२ ॥ ब्रह्मनिष्ठाय देयं स्याददेयं यस्य कस्यचित्। आचम्य नियतः पश्चादात्मध्यानपुरःसरम् ॥ १३ ॥ ओमित्यादौ विचिंत्याथ व्योम हैमाब्जसंस्थितम्। धर्मकंदगतज्ञानमैश्वर्याष्टदलान्वितम् ॥ १४ ॥ वैराग्यकर्णिकासीनां प्रणवग्रहमध्यगाम्। ब्रह्मवेदिसमायुक्तां चैतन्यपुरमध्यगाम् ॥ १५ ॥ तत्त्वहंससमाकीर्णां शब्दपीठे सुसंस्थिताम्। नादबिंदुकलातीतां गोपुरैरुपशोभिताम् ॥ १६ ॥ विद्याऽविद्याऽमृतत्वादिप्रकारैरभिसंवृताम्। निगमार्गलसंछन्नां निर्गुणद्वारवाटिकाम् ॥ १७ ॥ चतुर्वर्गफलोपेतां महाकल्पवनैर्वृताम्। सांद्रानंदसुधासिंधुनिगमद्वारवाटिकाम् ॥ १८ ॥ ध्यानधारणयोगादितृणगुल्मलतावृताम्। सदसच्चित्स्वरूपाख्यां मृगपक्षिसमाकुलाम्। विद्याविद्याविचारत्वाल्लोकालोकाचलावृताम् ॥ १९ ॥ अविकारसमाश्लिष्टनिजध्यानगुणावृताम्। पंचीकरणपंचोत्थभूततत्त्वनिवेदिताम् ॥ २० ॥ वेदोपनिषदर्थाख्यदेवर्षिगणसेविताम्। इतिहासग्रहगणैः सदारैरभिवंदिताम् ॥ २१ ॥ गाथाप्सरोभिर्यक्षैश्च गणकिंनरसेविताम्। नारसिंहपुराणाख्यैः पुरुषैः कल्पचारणैः ॥ २२ ॥ कृतगानविनोदादिकथालापनतत्पराम्। तदित्यवाङ्मनोगम्यतेजोरूपधरां पराम् ॥ २३ ॥ जगतः प्रसवित्रीं तां सवितुः सृष्टिकारिणीम्। वरेण्यमित्यन्नमयीं पुरुषार्थफलप्रदाम् ॥ २४ ॥ अविद्यावर्णवर्ज्यां च तेजोवद्गर्भसंज्ञिकाम्। देवस्य सच्चिदानन्दपरब्रह्मरसात्मिकाम् ॥ २५ ॥ धीमह्यहं स वै तद्वद्ब्रह्माद्वैतस्वरूपिणीम्। धियो यो नस्तु सविता प्रचोदयादुपासिताम् ॥ २६ ॥ परोऽसौ सविता साक्षा-

देनोनिर्हरणाय च । परो रजस इत्यादि परं ब्रह्म सनातनम् ॥ २७ ॥ आपो ज्योतिरिति द्वाभ्यां पांचभौतिकसंज्ञकम् । रसोऽमृतं ब्रह्मपदैस्तां नित्यां तपिनीं पराम् ॥ २८ ॥ भूर्भुवःसुवरित्येतैर्निगमत्वप्रकाशिकाम् । महर्जनस्तपःसत्यलोकोपरिसुसंस्थिताम् ॥ २९ ॥ तादृगस्या विराड्रूपकिरीटवरराजिताम् । व्योमकेशालकाकाशरहस्यं प्रवदाम्यहम् ॥ ३० ॥ मेघभ्रुकुटिकाक्रांतविधिविष्णुशिवार्चिताम् । गुरुभार्गवकर्णांतां सोमसूर्याग्निलोचनाम् ॥ ३१ ॥ इडापिंगलसूक्ष्माभ्यां वायुनासापुटान्विताम् । संध्याद्विरोष्ठपुटितां लसद्वाग्भूपजिह्विकाम् ॥ ३२ ॥ संध्यासौ द्युमणेः कंठलसद्बाहुसमन्विताम् । पर्जन्यहृदयासक्तवसुसुस्तनमंडलाम् ॥ ३३ ॥ आकाशोदरवित्रस्तनाभ्यवान्तरदेशकाम् । प्रजापत्याख्यजघनां कटींद्राणीति संज्ञिकाम् ॥ ३४ ॥ ऊरू मलयमेरुभ्यां शोभमानासुरद्विषम् । जानुनी जह्नुकुशिकवैश्वदेवसदाभुजाम् ॥ ३५ ॥ अयनद्वयजंघाद्यखुराद्यपितृसंज्ञिकाम् । पदांघ्रिनखरोमाद्यभूतलद्रुमलांछिताम् ॥ ३६ ॥ ग्रहराश्यृक्षदेवर्षिमूर्तिं च परसंज्ञिकाम् । तिथिमासर्तुवर्षाख्यसुकेतुनिमिषात्मिकाम् ॥ ३७ ॥ अहोरात्रार्धमासाख्यां सूर्याचंद्रमसात्मिकाम् । मायाकल्पितवैचित्र्यसंध्याच्छादनसंवृताम् ॥ ३८ ॥ ज्वलत्कालानलप्रख्यां तडित्कोटिसमप्रभाम् । कोटिसूर्यप्रतीकाशां चंद्रकोटिसुशीतलाम् ॥ ३९ ॥ सुधामंडलमध्यस्थां सान्द्रानंदामृतात्मिकाम् । प्रागतीतां मनोरम्यां वरदां वेदमातरम् ॥ ४० ॥ चराचरमयीं नित्यां ब्रह्माक्षरसमन्विताम् । ध्यात्वा स्वात्मनि भेदेन ब्रह्मपंजरमारभेत् ॥ ४१ ॥ पंजरस्य ऋषिश्चाहं छन्दो विकृतिरुच्यते । देवता च परो हंसः परब्रह्माधिदेवता ॥ ४२ ॥ प्रणवो बीजशक्तिः स्यादों कीलकमुदाहृतम् । तत्त्वं धीमहि क्षेत्रं धियोऽस्त्रं यः परं पदम् ॥ ४३ ॥ मंत्रमापो ज्योतिरिति

योनिर्हंसः सबंधकम् । विनियोगस्तु सिद्ध्यर्थं पुरुषार्थचतुष्टये ॥ ४४ ॥ ततस्तैरंगषट्कं स्यात्तैरेव व्यापकत्रयम् । पूर्वोक्तदेवतां ध्यायेत् साकारगुणसंयुताम् ॥ ४५ ॥ पंचवक्त्रां दशभुजां त्रिपंचनयनैर्युताम् । मुक्ताविद्रुमसौवर्णां सितशुभ्रसमाननाम् ॥ ४६ ॥ वाणीं परां रमां मायां चामरैर्दर्पणैर्युताम् । षडंगदेवतामंत्रे रूपाद्यवयवात्मिकाम् ॥ ४७ ॥ मृगेंद्रवृषपक्षींद्रमृगहंसासने स्थिताम् । अर्धेन्दुबद्धमुकुटकिरीटमणिकुंडलाम् ॥ ४८ ॥ रत्नताटंकमांगल्यपरग्रैवेयनूपुराम् । अंगुलीयककेयूरकंकणाद्यैरलंकृताम् ॥ ४९ ॥ दिव्यस्रग्वस्त्रसंछन्नरविमण्डलमध्यगाम् । वराभयाब्जयुगलां शंखचक्रगदांकुशान् ॥ ५० ॥ शुभ्रं कपालं दधतीं वहंतीमक्षमालिकाम् । गायत्रीं वरदां देवीं सावित्रीं वेदमातरम् ॥ ५१ ॥ आदित्यपथगामिन्यां स्मरेद्ब्रह्मस्वरूपिणीम् । विचित्रमंत्रजननीं स्मरेद्विद्यां सरस्वतीम् ॥ ५२ ॥ त्रिपदा ऋङ्मयी पूर्वामुखी ब्रह्मास्त्रसंज्ञिका । चतुर्विंशतितत्त्वाख्या पातु प्राचीं दिशं मम ॥ ५३ ॥ चतुष्पादयजुर्ब्रह्मदंडाख्या पातु दक्षिणाम् । षट्त्रिंशत्तत्त्वयुक्ता सा पातु मे दक्षिणां दिशम् ॥ ५४ ॥ प्रत्यङ्मुखी पंचपदी पंचाशत्तत्त्वरूपिणी । पातु प्रतीचीमनिशं सामब्रह्मशिरोंकिता । ॥ ५५ ॥ सौम्या ब्रह्मस्वरूपाख्या साथर्वांगिरसात्मिका । उदीचीं षट्पदा पातु चतुःषष्टिकलात्मिका ॥ ५६ ॥ पंचाशत्तत्त्वरचिता भवपादा शताक्षरी । व्योमाख्या पातु मे चोर्ध्वां दिशं वेदांगसंस्थिता ॥ ५७ ॥ विद्युन्निभा ब्रह्मसंज्ञा मृगारूढा चतुर्भुजा । चापेषुचर्मासिधरा पातु मे पावकीं दिशम् ॥ ५८ ॥ ब्राह्मी कुमारी गायत्री रक्तांगी हंसवाहिनी । बिभ्रत्कमण्डल्वक्षस्रक्स्रुवान्मे पातु नैर्ऋतीम् ॥ ५९ ॥ चतुर्भुजा वेदमाता शुक्लांगी वृषवाहिनी । वराभयकपालाक्षस्रग्विणी पातु वारुणीम् ॥ ६० ॥

श्यामा सरस्वती वृद्धा वैष्णवी गरुडासना । शंखाराब्जाभयकरा पातु शैवीं दिशं मम ॥ ६१ ॥ चतुर्भुजा वेदमाता गौराङ्गी सिंहवाहना । वराभयाब्जयुगलैर्भुजैः पात्वधरां दिशम् ॥ ६२ ॥ तत्तत्पार्श्वस्थिताः स्वस्ववाहनायुधभूषणाः । स्वस्वदिक्षु स्थिताः पांतु ग्रहशक्त्यंगदेवताः ॥ ६३ ॥ मंत्राधिदेवतारूपा मुद्राधिष्ठानदेवता । व्यापकत्वेन पात्वस्मानापह्त्तलमस्तकी ॥ ६४ ॥ तत्पदं मे शिरः पातु भालं मे सवितुः-पदम् । वरेण्यं मे दृशौ पातु श्रुतीर्भर्गः सदा मम ॥ ६५ ॥ घ्राणं देवस्य मे पातु पातु धीमहि मे मुखम् । जिह्वां मम धियः पातु कंठं मे पातु यः-पदम् ॥ ६६ ॥ नः-पदं पातु मे स्कंधौ भुजौ पातु प्रचोदयात् । करौ मे च परः पातु पादौ मे रजसेऽवतु ॥ ६७ ॥ अंसौ मे हृदयं पातु मम मध्यं सदावतु । ॐ मे नाभिं सदा पातु कटिं मे पातु मे सदा । ओमापः सक्थिनी पातु गुह्यं ज्योतिः सदा मम ॥ ६८ ॥ ऊरू मम रसः पातु जानुनी अमृतं मम । जंघे ब्रह्मपदं पातु गुल्फौ भूः पातु मे सदा ॥ ६९ ॥ पादौ मम भुवः पातु सुवः पात्वखिलं वपुः । रोमाणि मे महः पातु रोमकं पातु मे जनः ॥ ७० ॥ प्राणांश्च धातुतत्त्वानि तदीशः पातु मे तपः । सत्यं पातु ममायूंषि हंसो बुद्धिं च पातु मे ॥ ७१ ॥ शुचिषत् पातु मे शुक्रं वसुः पातु श्रियं मम । मतिं पात्वंतरिक्षं सद्धोता दानं च पातु मे ॥ ७२ ॥ वेदिषत् पातु मे विद्यामतिथिः पातु मे गृहम् । धर्मं दुरोणसत् पातु नृषत् पातु सुतान्मम ॥ ७३ ॥ वरसत् पातु मे भार्यां मृतसत् पातु मे सुतान् । व्योमसत् पातु मे बंधून् भ्रातॄनब्जाश्च पातु मे ॥ ७४ ॥ पशून्मे पातु गोजाश्च ऋतजाः पातु मे भवम् । सर्वं मे अद्रिजाः पातु

यानं मे पात्वृतं सदा ॥ ७५ ॥ अनुक्तमथ यत्स्थानं शरीरेऽन्तर्बहिश्च यत्। तत्सर्वं पातु मे नित्यं हंसः सोऽहमहर्निशम् ॥ ७६ ॥ इदं तु कथितं सम्यङ् मया ते ब्रह्मपंजरम्। संध्ययोः प्रत्यहं भक्त्या जपकाले विशेषतः ॥ ७७ ॥ धारयेद्द्विजवर्यो यः श्रावयेद्वा समाहितः। स विष्णुः स शिवः सोऽहं सोऽक्षरः स विराट् स्वराट् ॥ ७८ ॥ इति श्रीवसिष्ठसंहितायां ब्रह्मनारदसंवादे सावित्रीपंजरस्तोत्रं संपूर्णम् ॥

## ३९८. गायत्रीस्तोत्रम्।

श्रीगणेशाय नमः॥ श्रीनारद उवाच॥ भक्तानुकम्पिन् सर्वज्ञ हृदयं पापनाशनम्। गायत्र्याः कथितं तस्माद्गायत्र्याः स्तोत्रमीरय ॥ १ ॥ श्रीनारायण उवाच॥ आदिशक्ते जगन्मातर्भक्तानुग्रहकारिणि। सर्वत्रव्यापिकेऽनन्ते श्रीसन्ध्ये ते नमोऽस्तु ते ॥ २ ॥ त्वमेव सन्ध्या गायत्री सावित्री च सरस्वती। ब्राह्मणी वैष्णवी रौद्री रक्तश्वेता सितेतरा ॥ ३ ॥ प्रातर्बाला च मध्याह्ने यौवनस्था भवेत्पुनः। वृद्धा सायं भगवती चिन्त्यते मुनिभिः सह ॥ ४ ॥ हंसस्था गरुडारूढा तथा वृषभवाहिनी। ऋग्वेदाध्यायिनी भूमौ दृश्यते या तपस्विभिः ॥ ५ ॥ यजुर्वेदं पठन्ती च अन्तरिक्षे विराजते। या सामगापि सर्वेषु भ्राम्यमाणा तथा भुवि ॥ ६ ॥ रुद्रलोकं गता त्वं हि विष्णुलोकनिवासिनी। त्वमेव ब्राह्मणो लोकेऽमर्त्यानुग्रहकारिणी ॥ ७ ॥ सप्तर्षिप्रीतिजननी माया बहुवरप्रदा। शिवयोः करनेत्रोत्था ह्यश्रुस्वेदसमुद्भवा ॥ ८ ॥ आनन्दजननी दुर्गा दशधा परिपठ्यते। वरेण्या वरदा चैव वरिष्ठा वरवर्णिनी ॥ ९ ॥ गरिष्ठा च वराही च वरारोहा च सप्तमी। नीलगङ्गा तथा

सन्ध्या सर्वदा भोगमोक्षदा ॥ १० ॥ भागीरथी मर्त्यलोके पाताले भोगवत्यपि । त्रैलोक्यवाहिनी देवी स्थानत्रयनिवासिनी ॥ ११ ॥ भूर्लोकस्था त्वमेवासि धरित्री लोकधारिणी । भुवर्लोके वायुशक्तिः स्वर्लोके तेजसां निधिः ॥ १२ ॥ महर्लोके महासिद्धिर्जनलोकेऽजनेत्यपि । तपस्विनी तपोलोके सत्यलोके तु सत्यवाक् ॥ १३ ॥ कमला विष्णुलोके च गायत्री ब्रह्मलोकगा । रुद्रलोके स्थिता गौरी हरार्धाङ्गनिवासिनी ॥ १४ ॥ अहमो महतश्चैव प्रकृतिस्त्वं हि गीयते । साम्यावस्थात्मिका त्वं हि शबलब्रह्मरूपिणी ॥ १५ ॥ ततः परा पराशक्तिः परमा त्वं हि गीयसे । इच्छाशक्तिः क्रियाशक्तिर्ज्ञानशक्तिस्त्रिशक्तिदा ॥ १६ ॥ गङ्गा च यमुना चैव विपाशा च सरस्वती । शरयू रेविका सिन्धुर्नर्मदैरावती तथा ॥ १७ ॥ गोदावरी शतद्रुश्च कावेरी देवलोकगा । कौशिकी चन्द्रमा चैव वितस्ता च सरस्वती ॥ १८ ॥ गण्डकी तापिनी तोया गोमती वेत्रवत्यपि । इडा च पिङ्गला चैव सुषुम्णा च तृतीयका ॥ १९ ॥ गान्धारी हस्तजिह्वा च पूषाऽपूषा तथैव च । अलम्बुषा कुहूश्चैव शङ्खिनी प्राणवाहिनी ॥ २० ॥ नाडी च त्वं शरीरस्था गीयते प्राक्तनैर्बुधैः । हृत्पद्मस्था प्राणशक्तिः कण्ठस्था स्वप्ननायिका ॥ २१ ॥ तालुस्था त्वं सदाधारा बिन्दुस्था बिन्दुमालिनी । मूले तु कुण्डलीशक्तिर्व्यापिनी केशमूलगा ॥ २२ ॥ शिखामध्यासना त्वं हि शिखाग्रे तु मनोन्मनी । किमन्यद्बहुनोक्तेन यत्किञ्चिज्जगतीत्रये ॥ २३ ॥ तत्सर्वं त्वं महादेवि श्रिये सन्ध्ये नमोऽस्तु ते । इतीदं कीर्तितं स्तोत्रं सन्ध्यायां बहुपुण्यदम् ॥ २४ ॥ महापापप्रशमनं महासिद्धिविधायकम् । य इदं कीर्तयेत्स्तोत्रं सन्ध्याकाले समाहितः ॥ २५ ॥ अपुत्रः प्राप्नुयात्पुत्रं धनार्थी धनमाप्नुयात् ।

सर्वतीर्थतपोदानयज्ञयोगफलं लभेत् ॥ २६ ॥ भोगान् भुक्त्वा चिरं कालमन्ते मोक्षमवाप्नुयात् । तपस्विभिः कृतं स्तोत्रं स्नानकाले तु यः पठेत् ॥ २७ ॥ यत्र कुत्र जले मग्नः सन्ध्यामज्जनजं फलम् । लभते नात्र सन्देहः सत्यं सत्यं तु नारद ॥ २८ ॥ शृणुयाद्योऽपि तद्भक्त्या स तु पापात्प्रमुच्यते । पीयूषसदृशं वाक्यं सन्ध्योक्तं नारदेरितम् ॥ २९ ॥ इति भगवतोक्तं श्रीगायत्रीस्तोत्रं संपूर्णम् ॥

## ३९९. गायत्रीनामाष्टाविंशतिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ब्रह्मोवाच ॥ शताक्षरात्मकं देव्या नामाष्टाविंशतिः शतम् । शृणु वक्ष्यामि तत्सर्वमतिगुह्यं सनातनम् ॥ १ ॥ भूतिदा भुवना वाणी वसुधा सुमना मही । हरिणी जननी नंदा सविसर्गा तपस्विनी ॥ २ ॥ पयस्विनी सती त्यागा चैंदवी सत्यवीरसा । विश्वा तुर्या परा रेच्या निर्घृणी यमिनी भवा ॥ ३ ॥ गोवेद्या च जरिष्ठा च स्कंदिनी धीर्मतिर्हिमा । भीषणा योगिनी पक्षी नदी प्रज्ञा च चोदिनी ॥ ४ ॥ धनिनी यामिनी पद्मा रोहिणी रमणी ऋषिः । सेनामुखी सामयी च बकुला दोषवर्जिता ॥ ५ ॥ सर्वकामदुघा सोमोद्भवाऽहंकारवर्जिता । द्विपदा च चतुष्पादा त्रिपदा चैव षट्पदा ॥ ६ ॥ अष्टापदी नवपदी सा सहस्राक्षरात्मिका । इदं यः परमं गुह्यं सावित्रीमंत्रगर्भितम् ॥ ७ ॥ नामाष्टाविंशतिशतं शृणुयाच्छ्रावयेत्पठेत् । मर्त्यानाममृतत्वाय भीतानामभयाय च ॥ ८ ॥ मोक्षाय च मुमुक्षूणां श्रीकामान् श्रिये श्रियः । विजयाय युयुत्सूनां व्याधितानामरोगकृत् ॥ ९ ॥ वश्याय वश्यकामानां विद्यायै वेदकामिनाम् । द्रविणाय दरिद्राणां पापिनां पापशांतये ॥ १० ॥ वादिनां

वादविजये कवीनां कविताप्रदम् । अन्नाय क्षुधितानां च स्वर्गार्थं नाकमिच्छताम् ॥ ११ ॥ पशुभ्यः पशुकामानां पुत्रेभ्यः पुत्रकांक्षिणाम् । क्लेशिनां शोकशांत्यर्थं नृणां शत्रुभयाय च ॥ १२ ॥ राजवश्याय द्रष्टव्यं परमं नृपसेविनाम् । भक्त्यर्थं विष्णुभक्तानां विष्णौ सर्वांतरात्मनि ॥ १३ ॥ नायकं विधिसृष्टानां शांतये भवति ध्रुवम् । निःस्पृहाणां नृणां मुक्तिः शाश्वती भवति ध्रुवम् ॥ १४ ॥ जप्यं त्रिवर्गसंयुक्तं गृहस्थेन विशेषतः । मुनीनां ज्ञानसिद्ध्यर्थं यतीनां मोक्षसिद्धये ॥ १५ ॥ उद्यतं चंद्रकिरणमुपस्थाय कृतांजलिः । कानने वा स्वभवने तिष्ठन् शुद्धो जपेदिदम् ॥ १६ ॥ सर्वान्कामानवाप्नोति तथैव शिवसंनिधौ । मम प्रीतिकरं दिव्यं विष्णुभक्तिविवर्धनम् ॥ १७ ॥ ज्वरार्तानां कुशाग्रेण मार्जयेत्कुष्ठरोगिणाम् । अंगमंगं यथालिंगं कवचेन तु साधकः ॥ १८ ॥ मंडलेन विशुध्येत सर्वरोगैर्न संशयः । मृतप्रजा च या नारी जन्मवंध्या तथैव च ॥ १९ ॥ कन्यादिवंध्या या नारी तासामंगं प्रमार्जयेत् । पुत्रा नरोगिणस्तास्तु लभंते दीर्घजीविनः ॥ २० ॥ तास्ताः संवत्सरादर्वाक् गर्भं तु दधिरे पुनः । पतिविद्वेषिणी या स्त्री अंगं तस्याः प्रमार्जयेत् ॥ २१ ॥ तमेव भजते सा स्त्री पतिं कामवशं नयेत् । अश्वत्थे राजवश्यार्थं बिल्वमूले स्वरूपभाक् ॥ २२ ॥ पालाशमूले विद्यार्थी तेजसोऽभिमुखो रवौ । कन्यार्थी चंडिकागेहे जपेच्छत्रुभयाय च ॥ २३ ॥ श्रीकामो विष्णुगेहे च उद्याने श्रीर्वशीभवेत् । आरोग्यार्थे स्वगेहे च मोक्षार्थी शैलमस्तके ॥ २४ ॥ सर्वकामो विष्णुगेहे मोक्षार्थी यत्र कुत्रचित् । जपारंभे तु हृदयं जपांते कवचं पठेत् ॥ २५ ॥ किमत्र बहुनोक्तेन शृणु नारद तत्त्वतः । यं यं चिंतयते कामं तं तं प्राप्नोति

निश्चितम् ॥ २८ ॥ इति श्रीमद्वसिष्ठसंहितायां ब्रह्मनारद-संवादे गायत्रीनामाष्टाविंशतिस्तोत्रं समाप्तम् ॥

## ४००. गायत्र्यथर्वशीर्षम् ।

श्रीगणेशाय नमः ॥ नमस्कृत्य भगवान् याज्ञवल्क्यः स्वयं परि-पृच्छति त्वं ब्रूहि भगवन् गायत्र्या उत्पत्तिं श्रोतुमिच्छामि ॥ १ ॥ ब्रह्मोवाच ॥ प्रणवेन व्याहृतयः प्रवर्तंते, तमसस्तु परं ज्योतिष्कः पुरुषः स्वयम् । भूर्विष्णुरिति ह ताः स्वांगुल्या मथेत् ॥ २ ॥ मथ्यमानात्फेनो भवति, फेनाद्बुद्बुदो भवति, बुद्बुदादंडं भवति, अंडवानात्मा भवति, आत्मन आकाशो भवति, आकाशाद्वायुर्भवति, वायोरग्निर्भवति, अग्नेरोंकारो भवति, ॐकाराद्व्याहृतिर्भवति, व्याहृत्या गायत्री भवति, गायत्र्याः सावित्री भवति, सावित्र्याः सरस्वती भवति, सरस्वत्या वेदा भवंति, वेदेभ्यो ब्रह्मा भवति, ब्रह्मणो लोका भवंति, तस्माल्लोकाः प्रवर्तंते, चत्वारो वेदाः सांगाः सोपनिषदः सेतिहासास्ते सर्वे गायत्र्याः प्रवर्तन्ते, यथाऽग्निर्देवानां ब्राह्मणो मनुष्याणां मेरुः शिखरिणां गंगा नदीनां वसंत ऋतूनां ब्रह्मा प्रजापतीनामेवासौ मुख्यो गायत्र्या गायत्री छंदो भवति ॥ ३ ॥ किं भूः किं भुवः किं स्वः किं महः किं जनः किं तपः किं सत्य किं तत् किं सवितुः किं वरेण्यं किं भर्गः किं देवस्य किं धीमहि किं धियः किं यः किं नः किं प्रचोदयात् ॥ ४ ॥ भूरिति भूर्लोकः भुव इत्यंत-रिक्षलोकः । स्वरिति स्वर्लोको मह इति महर्लोको जन इति जनो लोकस्तप इति तपोलोकः सत्यमिति सत्यलोकः । भूर्भुवः-स्वरोमिति त्रैलोक्यम् ॥ ५ ॥ तदसौ तेजो यत्तेजसोऽग्निर्देवता सवितु-रित्यादित्यस्य वरेण्यमित्यन्नम् । अन्नमेव प्रजापतिर्भर्ग इत्यापः ।

आपो वै भर्ग एतावत्सर्वा देवता देवस्येंद्रो वै देवयद्दिवं तदिंद्रस्तस्मात्सर्वकृत् पुरुषो नाम विष्णुः ॥ ६ ॥ धीमहि किमध्यात्मं तत्परमं पदमित्यध्यात्मं यो न इति पृथिवी वै यो नः प्रचोदयात् काम इमाँल्लोकान् प्रच्यावयन् यो नृशंस्योऽस्तोष्यस्तत्परमो धर्म इत्येषा गायत्री किंगोत्रा कत्यक्षरा कतिपदा कतिकुक्षिः कतिशीर्षा च ॥ ७ ॥ सांख्यायनसगोत्रा गायत्री चतुर्विंशत्यक्षरा त्रिपदा षट्कुक्षिः सावित्री कशास्त्रयः पादा भवंति ॥ ८ ॥ काऽस्याः कुक्षिः कानि पंच शीर्षाणि । ऋग्वेदोऽस्याः प्रथमः पादो भवति, यजुर्वेदो द्वितीयः सामवेदस्तृतीयः, पूर्वा दिक् प्रथमा कुक्षिर्भवति, दक्षिणा द्वितीया, पश्चिमा तृतीया, उदीची चतुर्थी, ऊर्ध्वा पंचमी, अधरा षष्ठी कुक्षिः । व्याकरणमस्याः प्रथमं शीर्षं भवति, शिक्षा द्वितीयं कल्पस्तृतीयं निरुक्तं, ज्योतिषामयनं पंचमम् ॥ ९ ॥ किं लक्षणं किमु चेष्टितं किमुदाहृतं किमक्षरं दैवत्यम् ॥ १० ॥ लक्षणं मीमांसा अथर्ववेदो विचेष्टितम् । छंदोविधिरित्युदाहृतम् ॥ ११ ॥ को वर्णः कः स्वरः । श्वेतो वर्णः षट् स्वराणि इमान्यक्षराणि दैवतानि भवंति, पूर्वा भवतिगायत्री मध्यमा, सावित्री पश्चिमा, संध्या सरस्वती ॥ १२ ॥ प्रातः, संध्या रक्ता रक्तपद्मासनस्था रक्तांबरधरा रक्तवर्णा रक्तगंधानुलेपना चतुर्मुखा अष्टभुजा द्विनेत्रा दंडाक्षमालाकमंडलुस्रुक्स्रुवधारिणी सर्वाभरणभूषिता कौमारी ब्राह्मी हंसवाहिनी ऋग्वेदसंहिता ब्रह्मदैवत्या त्रिपदा गायत्री षट्कुक्षिः पंचशीर्षा अग्निमुखा रुद्रशिवविष्णुहृदया ब्रह्मकवचा सांख्यायनसगोत्रा भूर्लोकव्यापिनी अग्निस्तत्त्वम्, उदात्तानुदात्तस्वरितस्वरमकार, आत्मज्ञाने विनियोगः । इत्येषा गायत्री ॥ १३ ॥ मध्याह्नसंध्या श्वेता श्वेतपद्मासनस्था श्वेतांबरधरा श्वेतगंधानुलेपना पंचमुखी दशभुजा त्रिनेत्रा शूलाक्षमाला

कमंडलुकपालधारिणी सर्वाभरणभूषिता सावित्री युवती माहेश्वरी वृषभवाहिनी यजुर्वेदसंहिता रुद्रदैवत्या त्रिपदा सावित्री षट्कुक्षिः पंचशीर्षा अग्निमुखा रुद्रशिखा ब्रह्मकवचा भारद्वाजसगोत्रा भुवर्लोकव्यापिनी वायुस्तत्त्वम्, उदात्तानुदात्तस्वरितस्वरमकारः श्वेतवर्ण आत्मज्ञाने विनियोगः। इत्येषा सावित्री ॥ १४ ॥ सायंसंध्या कृष्णा कृष्णपद्मासनस्था कृष्णांबरधरा कृष्णवर्णा कृष्णगंधानुलेपना कृष्णमाल्यांबरधरा एकमुखी चतुर्भुजा द्विनेत्रा शंखचक्रगदापद्मधारिणी सर्वाभरणभूषिता सरस्वती वृद्धा वैष्णवी गरुडवाहिनी सामवेदसंहिता विष्णुदैवत्या त्रिपदा षट्कुक्षिः पंचशीर्षा अग्निमुखा विष्णुहृदया रुद्रशिखा ब्रह्मकवचा काश्यपसगोत्रा स्वर्लोकव्यापिनी सूर्यस्तत्त्वमुदात्तानुदात्तस्वरितमकारः कृष्णवर्णो मोक्षज्ञाने विनियोगः। इत्येषा स्वरस्वती ॥ १५ ॥ रक्ता गायत्री श्वेता सावित्री कृष्णवर्णा सरस्वती। प्रणवो नित्ययुक्तश्च व्याहृतीषु च सप्तसु ॥ १६ ॥ सर्वेषामेव पापानां संकरे समुपस्थिते। दश शतं समभ्यर्च्य गायत्री पावनी महत् ॥ १७ ॥ प्रह्लादोऽत्रिर्वसिष्ठश्च शुकः कण्वः पराशरः। विश्वामित्रो महातेजाः कपिलः शौनको महान् ॥ १८ ॥ याज्ञवल्क्यो भरद्वाजो जमदग्निस्तपो निधिः। गौतमो मुद्गलः श्रेष्ठो वेदव्यासश्च लोमशः ॥ १९ ॥ अगस्त्यः कौशिको वत्सः पुलस्त्यो मांडुकस्तथा। दुर्वासास्तपसा श्रेष्ठो नारदः कश्यपस्तथा ॥ २० ॥ उक्तात्युक्ता तथा मध्या प्रतिष्ठान्यासु पूर्विका। गायत्र्युष्णिगनुष्टुप् च बृहती पंक्तिरेव च ॥ २१ ॥ त्रिष्टुप् च जगती चैव तथातिजगती मता। शक्करी सातिपूर्वा यादष्ट्यत्यष्टी तथैव च। धृतिश्चातिधृतिश्चैव प्रकृतिः कृतिराकृतिः ॥ २२ ॥ विकृतिः संकृतिश्चैव तथातिकृतिरुत्कृतिः। इत्येताश्छंदसां संज्ञाः क्रमशो वच्मि सांप्रतम् ॥ २३ ॥

भूरिति छंदो भुव इति छंदः स्वरिति छंदो भूर्भुवःस्वरोमिति देवी गायत्री इत्येतानि छंदांसि प्रथममाग्नेयं द्वितीयं प्राजापत्यं तृतीयं सौम्यं चतुर्थमैशानं पंचममादित्यं षष्ठं बार्हस्पत्यं सप्तमं पितृदैवत्यमष्टमं भगदैवत्यं नवममार्यमं दशमं सावित्रमेकादशं त्वाष्ट्रं द्वादशं पौष्णं त्रयोदशमैन्द्राग्नं चतुर्दशं वायव्यं पंचदशं वामदैवत्यं षोडशं मैत्रावरुणं सप्तदशमांगिरसमष्टादशं वैश्वदेव्यमेकोनविंशं वैष्णवं विंशं वासवमेकविंशं रौद्रं द्वाविंशमाश्विनं त्रयोविंशं ब्राह्मं चतुर्विंशं सावित्रम् ॥२४॥ दीर्घान्स्वरेण संयुक्तान् बिंदुनादसमन्वितान् । व्यापकान्विन्यसेत्पश्चाद्दशपंक्त्यक्षराणि च । द्रवुपुंस इति प्रत्यक्षबीजानि । प्रह्लादिनी प्रभा सत्या विश्वा भद्रा विलासिनी । प्रभावती जया कांता शांता पद्मा सरस्वती ॥ २५ ॥ विद्रुमस्फटिकाकारं पद्मरागसमप्रभम् । इंद्रनीलमणिप्रख्यं मौक्तिकं कुंकुमप्रभम् ॥ २६ ॥ अञ्जनाभं च गांगेयं वैडूर्यं चंद्रसन्निभम् । हारिद्रं कृष्णदुग्धाभं रविकांतिसमं भवम् ॥ २७ ॥ शुकपिच्छसमाकारं क्रमेण परिकल्पयेत् । पृथिव्यापस्तथा तेजो वायुराकाश एव च ॥ २८ ॥ गंधो रसश्च रूपं च शब्दः स्पर्शस्तथैव च ॥ २९ ॥ घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं च तथापरम् । उपस्थपायुपादादि पाणिर्वागपि च क्रमात् ॥ ३० ॥ मनो बुद्धिरहंकारमव्यक्तं च यथाक्रमम् । सुमुखं संपुटं चैव विततं विस्तृतं तथा । एकमुखं च द्विमुखं त्रिमुखं च चतुर्मुखम् ॥ ३१ ॥ पंचमुखं षण्मुखं चाधोमुखं चैव व्यापकम् । अंजलीकं ततः प्रोक्तं मुद्रितं तु त्रयोदशम् ॥ ३२ ॥ शकटं यमपाशं च ग्रथितं संमुखोन्मुखम् । प्रलंबं मुष्टिकं चैव मत्स्यः कूर्मो वराहकम् ॥ ३३ ॥ सिंहाक्रांतं महाक्रांतं मुद्गरं पल्लवं तथा । एता मुद्राश्चतुर्विंशद्गायत्र्याः सुप्रतिष्ठिताः ॥ ३४ ॥ ॐ मूर्ध्नि संघाते ब्रह्मा विष्णुर्ललाटे रुद्रो भ्रूमध्ये चक्षुश्चंद्रादित्यौ कर्णयोः शुक्र-

बृहस्पती नासिके वायुर्दैवत्यं प्रभातं दोषा उभे संध्ये मुखमग्निर्जिह्वा सरस्वती ग्रीवा स्वाध्यायाः स्तनयोर्वसवो बाह्वोर्मरुतः हृदयं पर्जन्यमाकाशमपरं नाभिरंतरिक्षं कटिरिन्द्रियाणि जघनं प्राजापत्यं कैलासमलयौ ऊरू विश्वेदेवा जानुभ्यां जान्वोः कुशिकौ जंघयोरयनद्वयं सुराः पितरः पादौ पृथिवी वनस्पतिर्गुल्फौ रोमाणि मुहूर्तास्ते विग्रहाः केतुमासा ऋतवः संध्याकालत्रयमाच्छादनं संवत्सरो निमिषः अहोरात्रावादित्यचंद्रमसौ सहस्रपरमां देवीं शतमध्यां दशापराम्। सहस्रनेत्रीं देवीं गायत्रीं शरणमहं प्रपद्ये ॥ ३५ ॥ तत्सवितुर्वरदाय नमः तत्प्रातरादित्याय नमः। सायमधीयानो रात्रिकृतं पापं नाशयति ॥ ३६ ॥ प्रातरधीयानो रात्रिकृतं पापं नाशयति। तत्सायंप्रातः प्रयुंजानोऽपापो भवति ॥ य इदं गायत्र्यथर्वशीर्षं ब्राह्मणः प्रयतः पठेत्। चत्वारो वेदा अधीता भवंति। सर्वेषु तीर्थेषु स्नातो भवति सर्वैर्देवैर्ज्ञातो भवति। सर्वप्रत्यूहात्पूतो भवति ॥ ३७ ॥ अपेयपानात्पूतो भवति ॥ ३८ ॥ अभक्ष्यभक्षणात्पूतो भवति ॥ अलेह्यलेहनात्पूतो भवति ॥ अचोष्यचोषणात्पूतो भवति ॥ सुरापानात्पूतो भवति ॥३९॥ सुवर्णस्तेयात्पूतो भवति ॥ पंक्तिभेदनात्पूतो भवति ॥ पतितसंभाषणात्पूतो भवति ॥ अनृतवचनात्पूतो भवति ॥ गुरुतल्पगमनात्पूतो भवति ॥ अगम्यागमनात्पूतो भवति ॥ वृषलीगमनात्पूतो भवति ॥ ४० ॥ ब्रह्महत्यायाः पूतो भवति ॥ भ्रूणहत्यायाः पूतो भवति ॥ वीरहत्यायाः पूतो भवति ॥ अब्रह्मचारी सुब्रह्मचारी भवति ॥ ४१ ॥ अनेनाथर्वशीर्षेणाधीतेन क्रतुशतेनेष्टं भवति। षष्टिसहस्रं गायत्री जप्ता भवति ॥ अष्टौ ब्राह्मणान् ग्राहयेदर्थसिद्धिर्भवति। य इदं गायत्र्यथर्वशीर्षं ब्राह्मणः प्रयतः पठेत् ॥ स सर्वपापैः प्रमुच्यते ब्रह्मलोके महीयते ब्रह्मलोके महीयते ॥ ४२ ॥ इति गायत्र्यथर्वशीर्षं संपूर्णम् ॥

## ४०१. गायत्रीस्तवराजः ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीगायत्रीस्तवराजस्तोत्रमंत्रस्य विश्वामित्र ऋषिः, सकलजननी चतुष्पदा गायत्री, परमात्मा देवता, सर्वोत्कृष्टपरं धाम प्रथमपादो बीजं, द्वितीयः शक्तिः । तृतीयः कीलकं, दशप्रणवसंयुक्ता सव्याहृतिका तुर्यपादसहिता व्यापकं, मम धर्मार्थकाममोक्षार्थे जपे विनियोगः ॥ अथ न्यासान्कुर्यात् ॥ अथ ध्यानम् ॥ गायत्रीं वेदधात्रीं शतमखफलदां वेदशास्त्रैकवेद्यां चिच्छक्तिं ब्रह्मविद्यां परमशिवपदां श्रीपदं वै करोति । सर्वोत्कृष्टं पदं तत्सवितुरनुपदांते वरेण्यं शरण्यं भर्गो देवस्य धीमह्यभिदधति धियो यो नः प्रचोदयदित्यौर्वतेजः ॥ १ ॥ साम्राज्यबीजं प्रणवत्रिपादं सव्यापसव्यं प्रजपेत्सहस्रकम् । संपूर्णकामं प्रणवं विभूतिं तथा भवेद्वाक्यविचित्रवाणी ॥ २ ॥ शुभं शिवं शोभनमस्तु मह्यं सौभाग्यभोगोत्सवमस्तु नित्यम् । प्रकाशविद्यात्रयशास्त्रसर्वं भजेन्महामन्त्रफलं प्रिये वै ॥ ३ ॥ ब्रह्मास्त्रं ब्रह्मदंडं शिरसि शिखिमहद्ब्रह्मशीर्षं नमोन्तं सूक्तं पारायणोक्तं प्रणवमथ महावाक्यसिद्धांतमूलम् । तुर्यं त्रीणि द्वितीयं प्रथममनुमहावेदवेदांतसूक्तं नित्यं स्मृत्यानुसारं नियमितचरितं मूलमंत्रं नमोन्तम् ॥ ४ ॥ अस्त्रं शस्त्रहतं त्वघोरसहितं दंडेन वाजीहतं चादित्यादिहतं शिरोन्तसहितं पापक्षयार्थं परम् । तुर्यांत्यादिविलोममंत्रपठनं बीजं शिखांतोर्ध्वकं नित्यं कालनियम्यविप्रविदुषां किं दुष्कृतं भूसुरान् ॥ ५ ॥ नित्यं मुक्तिप्रदं नियम्य पवनं निर्घोषशक्तित्रयं सम्यग्ज्ञानगुरूपदेशविधिवद्देवीं शिखांतामपि । षष्ट्यैकोत्तरसंख्ययानुमतसौषुम्नादिमार्गत्रयीं ध्यायेन्नित्यसमस्तवेदजननीं देवीं

त्रिसंध्यामयीम् ॥ ६ ॥ गायत्रीं सकलागमार्थविदुषां सौरस्य बीजेश्वरीं सर्वाम्नायसमस्तमंत्रजननीं सर्वज्ञधामेश्वरीम्। ब्रह्मादित्रयसंपुटार्थकरणीं संसारपारायणीं संध्यां सर्वसमानतंत्रपरया ब्रह्मानुसंधायिनीम् ॥ ७ ॥ एकद्वित्रिचतुःसमानगणनावर्णाष्टकं पादयोः पादादौ प्रणवादिमंत्रपठने मन्त्रत्रयीसंपुटाम् । संध्याया द्विपदं पठेत्परतरं सायं तुरीयं युतं नित्यानित्यमनंतकोटिफलदं प्राप्तं नमस्कुर्महे ॥ ८ ॥ ओजोऽसीति सहोऽस्यहो बलमसि भ्राजोऽसि तेजस्विनी वर्चस्वी सवितान्निसोममसृतं रूपं परं धीमहि। देवानां द्विजवर्यतां मुनिगणे मुक्त्यर्थिनां शांतिनामोमित्येकमृचं पठंति यमनो यं यं स्मरेत्प्राप्नुयात् ॥ ९ ॥ ओमित्येकमजस्वरूपममलं तत्सप्तधा भाजितं तारं तंत्रसमन्वितं परतरे पादत्रयं गर्भितम्। आपोज्योतिरसोऽमृतं जनमहः सत्यं तपः स्वर्भुवर्भूयोभूय नमामि भूर्भुवःस्वरोमेतैर्महामंत्रकम् ॥ १० ॥ आदौ बिंदुमनुस्मरन् परतरे बाला त्रिवर्णोच्चरन् व्याहृत्यादिसबिंदुयुक्तत्रिपदातारत्रयं तुर्यकम् । आरोहादवरोहतः क्रमगता श्रीकुंडलीत्थं स्थिता देवी मानसपंकजे त्रिनयना पंचानना पातु माम् ॥ ११ ॥ सर्वे सर्ववशे समस्तसमये सत्यात्मिके सात्त्विके सावित्री सवितात्मके शशियुते सांख्यायनीगोत्रजे । संध्यात्रीण्युपकल्प्य संग्रहविधिः संध्याभिधानात्मके गायत्रीप्रणवादिमंत्रगुरुणा संप्राप्य तस्यै नमः ॥ १२ ॥ क्षेमं दिव्यमनोरथः परतरे चेतः समाधीयतां ज्ञानं नित्यवरेण्यमेतदमलं देवस्य भर्गो धियम् । मोक्षश्रीर्विजयार्थिनोऽथ सवितुः श्रेष्ठं विधिस्तत्पदं प्रज्ञा मेधप्रचोदयात्प्रतिदिनं यो नः पदं पातु माम् ॥ १३ ॥ सत्यं तत्सवितुर्वरेण्यविरलं विश्वादिमायात्मकं सर्वाद्यं प्रतिपादपादरमया तारं तथा मन्मथम्। तुर्यान्यान्नितयं द्वितीय-

मपरं संयोगसव्याहृतिं सर्वाम्नायमनोमयीं मनसिजां ध्यायामि देवीं पराम् ॥ १४ ॥ आदौ गायत्रिमंत्रे गुरुकृतनियमं धर्मकर्मानुकूलं सर्वाद्यं सारभूतं सकलमनुमयं देवतानामगम्यम् । देवानां पूर्वदेवं द्विजकुलमुनिभिः सिद्धविद्याधराद्यैः को वा वक्तुं समर्थस्तवमनुमहिमाबीजराजादिसूलम् ॥ १५ ॥ गायत्रीं त्रिपदां त्रिबीजसहितां द्विव्याहृतिं त्रैपदां त्रिब्रह्मात्रिगुणां त्रिकालनियमां वेदत्रयीं तां पराम् । सांख्यादित्रयरूपिणीं त्रिनयनां मातृत्रयीं तत्परां त्रैलोक्यत्रिदशत्रिकोटिसहितां संध्यां त्रयीं तां नुमः ॥ १६ ॥ ओमित्येतत्रिमात्रात्रिभुवनकरणं त्रिस्वरं वह्निरूपं त्रीणि त्रीणि त्रिपादं त्रिगुणगुणमयं त्रैपुरांतं त्रिसूक्तम् । तत्त्वानां पूर्वशक्तिं त्रितयगुरुपदं पीठयंत्रात्मकं तं तस्मादेतत् त्रिपादं त्रिपदमनुसरं त्राहि मां भो नमस्ते ॥ १७ ॥ स्वस्ति श्रद्धातिमेधा मधुमतिमधुरः संशयः प्रज्ञकांतिर्विद्या बुद्धिर्बलं श्रीरतनुधनपतिः सौम्यवाक्यानुवृत्तिः । मेधा प्रज्ञा प्रतिष्ठा मृदुमतिमधुरापूर्णविद्याप्रपूर्णं प्राप्तं प्रत्यूषचिंत्यं प्रणवपरवशात्प्राणिनां नित्यकर्म ॥ १८ ॥ पंचाशद्वर्णमध्ये प्रणवपरयुतं मंत्रमाद्यं नमोन्तं सर्वं सव्यापसव्यं शतगुणमभितो वर्म ह्यष्टोत्तरं ते । एवं नित्यं प्रजप्तं त्रिभुवनसहितं तुर्यमंतं त्रिपादं ज्ञानं विज्ञानगम्यं गगनसुसदृशं ध्यायते यः स मुक्तः ॥ १९ ॥ आदिक्षांतसबिंदुयुक्तसहितं मेरुं क्षकारात्मकं व्यस्ताव्यस्तसमस्तवर्गसहितं पूर्णं शताष्टोत्तरम् । गायत्रीं जपतां त्रिकालसहितां नित्यं सनैमित्तिकमेवं जाप्यफलं शिवेन कथितं सद्भोग्यमोक्षप्रदम् ॥ २० ॥ सप्तव्याहृतिसप्ततारविकृतिः सत्यं वरेण्यं धृतिः सर्वं तत्सवितुश्च धीमहि महाभर्गस्य देवं भजे । धाम्नो धाम धमाविधारणमहान्धीमत्पदं ध्यायते ॐ तत्सर्वमनुप्रपूर्णदशकं

पादत्रयं केवलम् ॥ २१ ॥ विज्ञाने विलसद्विवेकवचसः प्रज्ञानुसंधारिणीं श्रद्धामेध्ययशःशिरःसुमनसः स्वस्ति श्रियं त्वां सदा । आयुष्यं धनधान्यलक्ष्मिमतुलां देवीं कटाक्षं परं तत्काले सकलार्थसाधनमदान्मुक्तिर्महत्त्वं पदम् ॥ २२ ॥ पृथ्वीगंधोऽर्चनायां नभसि कुसुमता वायुधूपप्रकर्षो वह्निर्दीपप्रकाशो जलममृतमयं नित्यसंकल्पपूजा । एतत्सर्वं निवेद्यं सुखवति हृदये सर्वदा दंपतीनां त्वं सर्वज्ञा शिवं मे कुरु तव ममता भक्तवृन्दे प्रसिद्धा ॥ २३ ॥ सौम्यं सौभाग्यहेतुं सकलसुखकरं सर्वसौख्यं समस्तं सत्यं सद्भोगनित्यं सुखजनसुहृदं सुंदरं श्रीसमस्तम् । सौमंगल्यं समग्रं सकलशुभकरं स्वस्तिवाचं समस्तं सर्वाद्यं सद्विवेकं त्रिपदपदयुगं प्राप्तुमध्यासमस्तम् ॥ २४ ॥ गायत्रीपदपंचपंचप्रणवद्वंद्वं विधौ संपुटं सृष्ट्यादिक्रममंत्रजाप्यदशकं देवीपदं क्षुत्रयम् । मंत्रातिस्थितिकेषु संपुटमिदं श्रीमातृकावेष्टनं वर्णांत्यादिविलोममंत्रजपनं संहारसंमोहनम् ॥ २५ ॥ भूराद्यं भूर्भुवःस्वस्त्रिपदपदयुतं त्र्यक्षमाद्यंतयोज्यं सृष्टिस्थित्यंतकार्यं क्रमशिखिसकलं सर्वमंत्रं प्रशस्तम् । सर्वाङ्गं मातृकाणां मनुमयत्रपुषं मंत्रयोगप्रयुक्तं संहारं क्षादिवर्णं वसुशतगणनं मन्त्रराजं नमामि ॥ २६ ॥ विश्वामित्रमुदाहृतं हितकरं सर्वार्थसिद्धिप्रदं स्तोत्राणां परमं प्रभातसमये पारायणं नित्यशः । वेदानां विधिवादमंत्रसफलं सिद्धिप्रदं संपदां स प्राप्नोत्यपरत्र सर्वसुखदमायुष्यमारोग्यताम् ॥ २७ ॥ इति श्रीविश्वामित्रप्रणीतो गायत्रीस्तवराजः संपूर्णः ॥

## ४०२. गायत्रीतत्त्वस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ श्रीगायत्रीतत्त्वमालामंत्रस्य विश्वामित्र ऋषिः, अनुष्टुप् छंदः, परमात्मा देवता, हलो बीजानि, स्वराः

शक्तयः, अव्यक्तं कीलकम्, मम समस्तपापक्षयार्थे गायत्रीतत्त्वपाठे विनियोगः ॥ चतुर्विंशतितत्त्वानां यदेकं तत्त्वमुत्तमम् ॥ अनुशाधि परं ब्रह्म तत्परंज्योतिरोमिति ॥ १ ॥ यो वेदादौ स्वरः प्रोक्तो वेदांते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य तत्परं ज्योतिरोमिति ॥ २ ॥ तत्सदादिपदैर्वाच्यं परमं पदमव्ययम्। अभेदत्वंपदार्थस्य तत्परं ज्योतिरोमिति ॥ ३ ॥ यस्य मायांशभागेन जगदुत्पद्यतेऽखिलम्। तस्य सर्वोत्तमं रूपमरूपस्याभिधीमहि ॥ ४ ॥ न पश्यन्ति परमं पश्यंतो वै दिवौकसः। तं भूतानिलदेवं तु सुपर्णमुपधावताम् ॥ ५ ॥ यदंशः प्रेरितो जंतुः कर्मपाशनियंत्रितः। आजन्मकृतपापानामपहंतुं दिवौकसः ॥ ६ ॥ इदं महामुनिप्रोक्तं गायत्रीतत्त्वमुत्तमम्। यः पठेत्परया भक्त्या स याति परमां गतिम् ॥ ७ ॥ सर्ववेदपुराणेषु सांगोपांगेषु यत्फलम्। सकृदस्य जपादेव तत्फलं प्राप्नुयान्नरः ॥ ८ ॥ अभक्ष्यभक्षणात्पूतो भवति। अगम्यगमनात्पूतो भवति। सर्वपापेभ्यः पूतो भवति। प्रातरधीयानो रात्रिकृतं पापं नाशयति। सायमधीयानो दिवसकृतं पापं नाशयति। मध्यंदिनमुपयुंजानोऽसत्प्रतिग्रहादिना मुक्तो भवति ॥ ९ ॥ अनुक्तं पुरुषाः पुरुषमभिवदंति यं यं काममभिध्यायति तं तमेवाप्नोति पुत्रपौत्रान् कीर्तिसौभाग्यानि चोपलभते। सर्वभूतात्ममित्रं देहांते तद्विशिष्टो गायत्रीपरमं पदमाप्नोति ॥ १० ॥ इति श्रीवेदसारे गायत्रीतत्त्वस्तोत्रं संपूर्णम् ॥



शक्तिहस्तं विरूपाक्षं शिखिवाहं षडाननम् ।
दारुणं रिपुरोगघ्नं भावये कुक्कुटध्वजम् ॥

## ४०३. सुब्रह्मण्यस्तोत्रम् ।

श्रीगणेशाय नमः ॥ शरणागतमातुरमाधिजितं करुणाकर कामद कामहतम् । शरकाननसंभवचारुरुचे परिपालय तारक मारक माम् ॥ १ ॥ हरसारसमुद्भव हैमवतीकरपल्लवलालित कम्र-तनो । मुरवैरिविरिंचिमुदम्बुनिधे परिपालय० ॥ २ ॥ गिरिजासुत सायकभिन्नगिरे सुरसिन्धुतनूज सुवर्णरुचे । शिशिजाशिखानल वाहन हे ॥ परिपालय० ॥ ३ ॥ जय विप्रजनप्रिय वीर नमो जय भक्तजनप्रिय भद्र नमः । यज देव विशाखकुमार नमः परिपालय० ॥ ४ ॥ पुरतो भव मे परितो भव मे पथि मे भगवान् भव रक्ष गतम् । वितराजिषु मे विजयं भगवन् ॥ परिपालय० ॥ ५ ॥ शरदिंदुसमानषडाननया सरसीरुहचारुविलोचनया । निरुपाधिकया निजबालजया परिपालय० ॥ ६ ॥ इति कुक्कुटकेतुमनुस्मरतः पठतामपि षण्मुखषट्कमिदम् । नमतामपि नन्दनमिन्दुभृतो न भयं क्वचिदस्ति शरीरभृताम् ॥ ७ ॥ इति सुब्रह्मण्यस्तोत्रं संपूर्णम् ॥

## ४०४. सुब्रह्मण्यभुजङ्गप्रयातम् ।

श्रीगणेशाय नमः ॥ भजेऽहं कुमारं भवानीकुमारं गलोल्लासिहारं नमस्कृद्विहारम् । रिपुस्तोमसारं नृसिंहावतारं सदा निर्विकारं गुहं निर्विचारम् ॥ १ ॥ नमामीशपुत्रं जपाशोणगात्रं सुरारातिशत्रुं रवींद्वग्निनेत्रम् । महाबर्हिपत्रं शिवास्याब्जमित्रं प्रभासत्कलत्रं पुराणं

पवित्रम् ॥ २ ॥ अनेकार्ककोटिप्रभावज्ज्वलंतं मनोहारिमाणिक्यभूषोज्ज्वलंतम् । श्रितानामभीष्टं सुशांतं नितांतं भजे षण्मुखं तं शरच्चंद्रकांतम् ॥ ३ ॥ कृपावारिकल्लोलभास्वत्कटाक्षं विराजन्मनोहारिशोणाम्बुजाक्षम् । प्रयोगप्रदानप्रवाहैकदक्षं भजे कांतिकांताम्बरस्तोमरक्षम् ॥ ४ ॥ सुकस्तूरिकाबिंदुभास्वल्ललाटं दयापूर्णचित्तं महादेवपुत्रम् । रवींदूल्लसद्रत्नराजत्किरीटं भजे क्रीडिताकाशगङ्गासुकूटम् ॥ ५ ॥ मुकुंदप्रसूनावलीशोभितांतं शरत्पूर्णचंद्रस्य षट्कांतिकांतम् । शिरीषप्रसूनाभिरामं भवंतं भजे देवसेनापतिं वल्लभं तम् ॥ ६ ॥ सुलावण्यसत्सूर्यकोटिप्रकाशं प्रभुं तारकारिं द्विषड्बाहुमीशम् । निजार्कप्रभादीप्यमानाखिलाशं भजे पार्वतीप्राणपुत्रं सुकेशम् ॥ ७ ॥ अजं सर्वलोकप्रियं लोकनाथं गुहं शूरपद्मादिदम्भोलिधारम् । सुबाहुं सुनासापुटं सच्चरित्रं भजे कार्तिकेयं सदा बाहुलेयम् ॥ ८ ॥

शरारण्यसम्भूतमिंद्रादिवंद्यं द्विषड्बाहुसङ्ख्यायुधश्रेणिरम्यम् । मरुत्सारथिं कुक्कुटेशं सुकेतुं भजे योगिहृत्पद्मव्याप्ताधिवासम् ॥ ९ ॥ विरिंचींद्र वल्लीशचीदेवेशमुख्य प्रशस्तामरस्तोमसंस्तूयमान । दिश त्वं दयालो श्रियं निश्चलां मे विना त्वां गतिः का प्रभो मे प्रसीद ॥ १० ॥ पदांभोजसेवासमायातवृंदारकश्रेणिकोटीरभास्वल्ललाटम् । कलत्रोल्लसत्पार्श्वयुग्मं वरेण्यं भजे देवमाद्यं त्वहीनप्रभावम् ॥ ११ ॥ भवांभोधिमध्ये तरङ्गे पतंतं प्रभो मां सदा पूर्णदृष्ट्या समीक्ष्य । भवद्भक्तिनावोद्धर त्वं दयालो सुगत्यंतरं नास्ति देव प्रसीद ॥ १२ ॥ गले रत्नभूषं तनौ मञ्जुवेषं करे ज्ञानशक्तिं दरस्मेरमास्ये । कटिन्यस्तपाणिं शिखिस्थं कुमारं भजेऽहं गुहादन्यदेवं न मन्ये ॥ १३ ॥ दयाहीनचित्तं परद्रोहपात्रं सदा पापशीलं गुरोर्भक्तिहीनम् । अनन्यावलम्बं भवन्नेत्रपात्रं कृपाशील मां भो पवित्रं कुरु

त्वम् ॥ १४ ॥ महासेन गाङ्गेय वल्लीसहाय प्रभो तारकारे षडास्यामरेश । सदा पायसान्नप्रदातर्गुहेति स्मरिष्यामि भक्त्या सदाऽहं विभो त्वाम् ॥ १५ ॥ प्रतापस्य बाहो नमद्वीरबाहो प्रभो कार्तिकेयेष्टकामप्रदेति । यदा ये पठंते भवंतं तदैव प्रसन्नस्तु तेषां बहुश्रीं ददासि ॥ १६ ॥ अपारेऽतिदारिद्र्यपाथोधिमध्ये भ्रमंतं जनिग्राहपूर्णे नितांतम् । महासेन मामुद्धर त्वं कटाक्षावलोकेन किञ्चित्प्रसीद प्रसीद ॥ १७ ॥ स्थिरां देहि भक्तिं भवत्पादपद्मे श्रियं निश्चलां देहि मह्यं कुमार । गुहं चंद्रतारं स्ववंशाभिवृद्धिं कुरु त्वं प्रभो मे मनःकल्पसाल ॥ १८ ॥ नमस्ते नमस्ते महाशक्तिपाणे नमस्ते नमस्ते लसद्वज्रपाणे । नमस्ते नमस्ते कटिन्यस्तपाणे नमस्ते नमस्ते सदाभीष्टपाणे ॥ १९ ॥ नमस्ते नमस्ते महाशक्तिधारिन् नमस्ते सुराणां महासौख्यदायिन् । नमस्ते सदा कुक्कुटेशाख्यक त्वं समस्तापराधं विभो मे क्षमस्व ॥ २० ॥ य एको मुनीनां हृदब्जाधिवासः शिवाङ्कं समारुह्य सत्पीठकल्पम् । विरिञ्चाय मंत्रोपदेशं चकार प्रमोदेन सोऽयं तनोतु श्रियं मे ॥ २१ ॥ यमाहुः परं वेद शूरेषु मुख्यं सदा यस्य शक्त्या जगद्भीतभीतम् । यमालोक्य देवाः स्थिरं स्वर्गपालाः सदोङ्काररूपं चिदानंदमीडे ॥ २२ ॥ गुहस्तोत्रमेतत्कृतांतारिसूनोर्भुजङ्गप्रयातेन पद्येन कांतम् । जना ये पठंते सदा ते महांतो मनोवाञ्छितं सर्वकामान् लभंते ॥ २३ ॥ इति श्रीसुब्रह्मण्यभुजङ्गप्रयातं संपूर्णम् ॥

## ४०५. कार्तिकेयस्तोत्रम् ।

श्रीगणेशाय नमः ॥ स्कंद उवाच ॥ योगीश्वरो महासेनः कार्तिकेयोऽग्निनंदनः । स्कंदः कुमारः सेनानीः स्वामी शंकरसंभवः ॥ १ ॥ गांगेयस्ताम्रचूडश्च ब्रह्मचारी शिखिध्वजः । तारकारिरुमा-

पुत्रः क्रौंचारिश्च षडाननः ॥ २ ॥ शब्दब्रह्मसमुद्रश्च सिद्धः सारस्वतो गुहः । सनत्कुमारो भगवान् भोगमोक्षफलप्रदः ॥ ३ ॥ शरजन्मा गणाधीशपूर्वजो मुक्तिमार्गकृत् । सर्वागमप्रणेता च वांछितार्थप्रदर्शनः ॥ ४ ॥ अष्टाविंशतिनामानि मदीयानीति यः पठेत् । प्रत्यूषं श्रद्धया युक्तो मूको वाचस्पतिर्भवेत् ॥ ५ ॥ महामंत्रमयानीति मम नामानुकीर्तनम् । महाप्रज्ञामवाप्नोति नात्र कार्या विचारणा ॥ ६ ॥ इति श्रीरुद्रयामले प्रज्ञाविवर्धनाख्यं श्रीमत्कार्तिकेयस्तोत्रं संपूर्णम् ॥

## ४०६. सुब्रह्मण्याष्टकम् ।

श्रीगणेशाय नमः ॥ हे स्वामिनाथ करुणाकर दीनबंधो श्रीपार्वतीशमुखपंकजपद्मबंधो । श्रीशादिदेवगणपूजितपादपद्म वल्लीसनाथ मम देहि करावलंबम् ॥ १ ॥ देवाधिदेवसुत देवगणाधिनाथ देवेंद्रवंद्य मृदुपङ्कजमंजुपाद । देवर्षिनारदमुनींद्रसुगीतकीर्ते वल्लीसनाथ मम देहि करावलंबम् ॥ २ ॥ नित्यान्नदाननिरताखिलरोगहारिन् भाग्यप्रदानपरिपूरितभक्तकाम । श्रुत्यागमप्रणववाच्यनिजस्वरूप वल्लीसनाथ मम देहि करावलंबम् ॥ ३ ॥ क्रौञ्चासुरेन्द्रपरिखंडन शक्तिशूलचापादिशस्त्रपरिमंडितदिव्यपाणे । श्रीकुंडलीशधरतुण्डशिखींद्रवाह वल्लीसनाथ मम देहि करावलंबम् ॥ ४ ॥ देवाधिदेवरथमंडलमध्यवेद्य देवेंद्रपीडनकरं दृढचापहस्तम् । शूरं निहत्य सुरकोटिभिरीड्यमान वल्लीसनाथ मम देहि करावलंबम् ॥ ५ ॥ हारादिरत्नमणियुक्तकिरीटहारकेयूरकुंडललसत्कवचाभिरामम् । हे वीर तारकजयामरवृंदवंद्य वल्लीसनाथ मम देहि करावलंबम् ॥ ६ ॥ पञ्चाक्षरादिमनुमंत्रितगाङ्गतोयैः पञ्चामृतैः

प्रमुदितेन्द्रमुखैर्मुनीन्द्रैः । पट्टाभिषिक्तहरियुक्त परासनाथ वल्लीसनाथ मम देहि करावलंबम् ॥ ७ ॥ श्रीकार्तिकेय करुणामृतपूर्णदृष्ट्या कामादिरोगकलुषीकृतदुष्टचित्तम् । सिक्त्वा तु मामव कलाधरकांति-कांत्या वल्लीसनाथ मम देहि करावलंबम् ॥ ८ ॥ सुब्रह्मण्याष्टकं पुण्यं ये पठंति द्विजोत्तमाः । ते सर्वे मुक्तिमायांति सुब्रह्मण्यप्रसादतः ॥ ९ ॥ सुब्रह्मण्याष्टकमिदं प्रातरुत्थाय यः पठेत् । कोटिजन्मकृतं पापं तत्क्षणादेव नश्यति ॥ १० ॥ इति श्रीसुब्रह्मण्याष्टकं संपूर्णम् ॥

## ४०७. सुब्रह्मण्याष्टोत्तरशतनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ स्कंदो गुहः षण्मुखश्च भालनेत्रसुतः प्रभुः । पिङ्गलः कृत्तिकासूनुः शिखिवाहो द्विषड्भुजः ॥ १ ॥ द्विषड्नेत्रः शक्तिधरः पिशिताशप्रभञ्जनः । तारकासुरसंहारी रक्षोबलविमर्दनः ॥ २ ॥ मत्तः प्रमत्त उन्मत्तः सुरसैन्यसुरक्षकः । देवसेनापतिः प्राज्ञः कृपालुर्भक्तवत्सलः ॥ ३ ॥ उमासुतः शक्तिधरः कुमारः क्रौञ्च-दारणः । सेनानीरग्निजन्मा च विशाखः शङ्करात्मजः ॥ ४ ॥ शिवस्वामी गणस्वामी सर्वस्वामी सनातनः । अनंतशक्तिरक्षोभ्यः पार्वतीप्रियनंदनः ॥ ५ ॥ गङ्गासुतः शरोद्भूत आहूतः पावकात्मजः । जृम्भः प्रजृम्भ उज्जृम्भः कमलासनसंस्तुतः ॥ ६ ॥ एकवर्णो द्विवर्णश्च त्रिवर्णः सुमनोहरः । चतुर्वर्णः पञ्चवर्णः प्रजापतिरहर्पतिः ॥ ७ ॥ अग्निगर्भः शमीगर्भो विश्वरेताः सुरारिहा । हरिद्वर्णः शुभकरो बटुश्च पटुवेष-भृत् ॥ ८ ॥ पूषा गभस्तिर्गहनश्चंद्रवर्णः कलाधरः । मायाधरो महामायी कैवल्यः शङ्करात्मजः ॥ ९ ॥ विश्वयोनिरमेयात्मा तेजो-निधिरनामयः । परमेष्ठी परब्रह्मा वेदगर्भो विराट्सुतः ॥ १० ॥ पुलिंदकन्याभर्ता च महासारस्वतावृतः । आश्रिताखिलदाता च

रोगघ्नो रोगनाशनः ॥ ११ ॥ अनंतमूर्तिरानंदः शिखंडिकृत-
केतनः । डम्भः परमडम्भश्च महाडम्भो वृषाकपिः ॥ १२ ॥ कारणो-
त्पत्तिदेहश्च कारणातीतविग्रहः । अनीश्वरोऽमृतः प्राणः प्राणायाम-
परायणः ॥ १३ ॥ विरुद्धहंता वीरघ्नो रक्तश्यामगलोऽपि च । सुब्रह्मण्यो
गुहः प्रीतो ब्राह्मण्यो ब्राह्मणप्रियः ॥ वंशवृद्धिकरो वेदवेद्योऽक्षय-
फलप्रदः ॥ १४ ॥ इति श्रीसुब्रह्मण्याष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥



पायूनि। आदित्यो वै शब्दस्पर्शरूपरसगंधाः। आदित्यो वै वचनादानगमनानंदविसर्गाः। आनंदमयो ज्ञानमयो विज्ञानमय आदित्यः। नमो मित्राय भानवे मृत्योर्मा पाहि भ्राजिष्णवे विश्वहेतवे नमः। सूर्यो नो दिवस्पातु वातो अंतरिक्षात्। अग्निर्नः पार्थिवेभ्यः। सूर्याद्भवंति भूतानि। सूर्येण पालितानि तु। सूर्ये लयं प्राप्नुवंति। यः सूर्यः सोऽहमेव च। चक्षुर्नो देवः सविता। चक्षुर्न उत पर्वतः। चक्षुर्धाता दधातु नः। आदित्याय विद्महे सहस्रकराय धीमहि। तन्नः सूर्यः प्रचोदयात्। सविता पश्चात्तात्। सविता पुरस्तात्। सवितोत्तरात्तात्। सविताधरात्तात्। सविता नः सुवतु सर्वतातिम्। सविता नो रासतां दीर्घमायुः। ओमित्येकाक्षरं ब्रह्म। घृणिरिति द्वे अक्षरे। सूर्य इत्यक्षरद्वयम्। आदित्य इति त्रीण्यक्षराणि। एतद्वै सूर्यस्याष्टाक्षरं मनुं यः सदाऽहरहर्जपति सो ब्रह्मण्यो ब्राह्मणो भवति। सूर्याभिमुखं जप्त्वा महाव्याधिभयात्प्रमुच्यते। अलक्ष्मीर्नश्यति। अभक्ष्यभक्षणात्पूतो भवति। अपेयपानात्पूतो भवति। अगम्यागमनात्पूतो भवति। व्रात्यसंभाषणात्पूतो भवति। मध्याह्ने सूर्याभिमुखः पठेत्। सद्यः पंचमहापापात्प्रमुच्यते। सैषा सावित्री विद्या न कस्यचित्प्रशंसेत्। य एतन्महाभागः प्रातः पठति स भाग्यवान् जायते। पशून्विंदति वेदार्थं लभते। त्रिकालं जप्त्वा क्रतुशतफलं प्राप्नोति। हस्तादित्ये जपति स महामृत्युं तरति। य एवं वेद। इत्युपनिषत्॥ इति सूर्याथर्वशीर्षं संपूर्णम्॥

## ४०९. त्रैलोक्यमंगलं सूर्यकवचम्।

श्रीगणेशाय नमः॥ श्रीसूर्य उवाच॥ सांब सांब महाबाहो शृणु

मे कवचं शुभम् । त्रैलोक्यमंगलं नाम कवचं परमाद्भुतम् ॥ १ ॥
यज्ज्ञात्वा मंत्रवित्सम्यक् फलं प्राप्नोति निश्चितम् । यद्धृत्वा च महा-
देवो गणानामधिपोऽभवत् ॥ २ ॥ पठनाद्धारणाद्विष्णुः सर्वेषां
पालकः सदा । एवमिंद्रादयः सर्वे सर्वैश्वर्यमवाप्नुयुः ॥ ३ ॥ कवचस्य
ऋषिर्ब्रह्मा छंदोऽनुष्टुबुदाहृतः । श्रीसूर्यो देवता चात्र सर्वदेवनम-
स्कृतः ॥ ४ ॥ यशआरोग्यमोक्षेषु विनियोगः प्रकीर्तितः । प्रणवो
मे शिरः पातु घृणिर्मे पातु भालकम् ॥ ५ ॥ सूर्योऽव्यान्नयनद्वंद्वमा-
दित्यः कर्णयुग्मकम् । अष्टाक्षरो महामंत्रः सर्वाभीष्टफलप्रदः ॥ ६ ॥
ह्रीं बीजं मे मुखं पातु हृदयं भुवनेश्वरी । चंद्रबिंबं विंशदाद्यं पातु मे
गुह्यदेशकम् ॥ ७ ॥ अक्षरोऽसौ महामंत्रः सर्वतंत्रेषु गोपितः ।
शिवो वह्निसमायुक्तो वामाक्षीबिंदुभूषितः । एकाक्षरो महामंत्रः
श्रीसूर्यस्य प्रकीर्तितः ॥ ८ ॥ गुह्याद्गुह्यतरो मंत्रो वाञ्छाचिंतामणिः
स्मृतः । शीर्षादिपादपर्यंतं सदा पातु मनूत्तमः ॥ ९ ॥ इति ते
कथितं दिव्यं त्रिषु लोकेषु दुर्लभम् । श्रीप्रदं कांतिदं नित्यं धनारोग्य-
विवर्धनम् ॥ १० ॥ कुष्ठादिरोगशमनं महाव्याधिविनाशनम् । त्रिसंध्यं
यः पठेन्नित्यमरोगी बलवान्भवेत् ॥ ११ ॥ बहुना किमिहोक्तेन
यद्यन्मनसि वर्तते । तत्तत्सर्वं भवेत्तस्य कवचस्य च धारणात् ॥ १२ ॥
भूतप्रेतपिशाचाश्च यक्षगंधर्वराक्षसाः । ब्रह्मराक्षसवेताला न द्रष्टुमपि
तं क्षमाः ॥ १३ ॥ दूरादेव पलायंते तस्य संकीर्तनादपि ॥ १४ ॥
भूर्जपत्रे समालिख्य रोचनागरुकुंकुमैः । रविवारे च संक्रांत्यां सप्तम्यां
च विशेषतः । धारयेत्साधकश्रेष्ठः स परो मे प्रियो भवेत् ॥ १५ ॥
त्रिलोहमध्यगं कृत्वा धारयेद्दक्षिणे करे । शिखायामथवा कंठे सोऽपि
सूर्यो न संशयः ॥ १६ ॥ इति ते कथितं सांब त्रैलोक्यमंगलाभिधम् ।
कवचं दुर्लभं लोके तव स्नेहात्प्रकाशितम् ॥ १७ ॥ अज्ञात्वा कवचं

दिव्यं यो जपेत्सूर्यमुत्तमम् । सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि ॥ १८ ॥ इति श्रीब्रह्मयामले त्रैलोक्यमंगलं नाम सूर्यकवचं संपूर्णम् ॥

## ४१०. आदित्यहृदयम् ।

श्रीगणेशाय नमः ॥ शतानीक उवाच ॥ कथमादित्यमुद्यंतमुपतिष्ठे-द्विजोत्तम । एतन्मे ब्रूहि विप्रेंद्र प्रपद्ये शरणं तव ॥ १ ॥ सुमंतु-रुवाच ॥ इदमेव पुरा पृष्टं शंखचक्रगदाधरम् । प्रणम्य शिरसा देवमर्जुनेन महात्मना ॥ २ ॥ कुरुक्षेत्रे महाराज प्रवृत्ते भारते रणे । कृष्णनाथं समासाद्य प्रार्थयित्वाऽब्रवीदिदम् ॥ ३ ॥ अर्जुन उवाच ॥ ज्ञानं च धर्मशास्त्राणां गुह्याद्गुह्यतरं तथा । मया कृष्ण परिज्ञातं वाङ्मयं सचराचरम् ॥ ४ ॥ सूर्यस्तुतिमयं न्यासं वक्तुमर्हसि माधव । भक्त्या पृच्छामि देवेश कथयस्व प्रसादतः ॥ ५ ॥ सूर्यभक्तिं करिष्यामि कथं सूर्यं प्रपूजयेत् । तदहं श्रोतुमिच्छामि त्वत्प्रसादेन यादव ॥ ६ ॥ श्रीभगवानुवाच ॥ रुद्रादिदैवतैः सर्वैः पृष्टेन कथितं मया । वक्ष्येऽहं सूर्यविन्यासं शृणु पांडव यत्नतः ॥ ७ ॥ अस्माकं यत्त्वया पृष्टमेक-चित्तो भवार्जुन । तदहं संप्रवक्ष्यामि आदिमध्यावसानकम् ॥ ८ ॥ अर्जुन उवाच ॥ नारायण सुरश्रेष्ठ पृच्छामि त्वां महायशाः । कथमा-दित्यमुद्यंतमुपतिष्ठेत् सनातनम् ॥ ९ ॥ श्रीभगवानुवाच ॥ साधु पार्थ महाबाहो बुद्धिमानसि पांडव । यन्मां पृच्छस्युपस्थानं तत्पवित्रं विभावसोः ॥ १० ॥ सर्वमंगलमांगल्यं सर्वपापप्रणाशनम् । सर्वरोग-प्रशमनमायुर्वर्धनमुत्तमम् ॥ ११ ॥ अमित्रदमनं पार्थ संग्रामे जयवर्ध-नम् । वर्धनं धनपुत्राणामादित्यहृदयं शृणु ॥ १२ ॥ यच्छ्रुत्वा सर्व-पापेभ्यो मुच्यते नात्र संशयः । त्रिषु लोकेषु विख्यातं निःश्रेयसकरं परम् ॥ १३ ॥ देवदेवं नमस्कृत्य प्रातरुत्थाय चार्जुन । विघ्नान्यनेक-

रूपाणि नश्यंति स्मरणादपि ॥ १४ ॥ तस्मात्सर्वप्रयत्नेन सूर्यमावाहयेत्सदा । आदित्यहृदयं नित्यं जाप्यं तच्छृणु पांडव ॥ १५ ॥ यज्जपान्मुच्यते जंतुर्दारिद्र्यादाशु दुस्तरात् । लभते च महासिद्धिं कुष्ठव्याधिविनाशिनीम् ॥ १६ ॥ अस्मिन्मंत्रे ऋषिश्छंदो देवता शक्तिरेव च । सर्वमेव महाबाहो कथयामि तवाग्रतः ॥ १७ ॥ मया ते गोपितं न्यासं सर्वशास्त्रप्रबोधितम् । अथ ते कथयिष्यामि उत्तमं मंत्रमेव च ॥ १८ ॥ ॐ अस्य श्रीआदित्यहृदयस्तोत्रमंत्रस्य श्रीकृष्ण ऋषिः, श्रीसूर्यात्मा त्रिभुवनेश्वरो देवता, अनुष्टुप् छंदः, हरितहयरथं दिवाकरं घृणिरिति बीजम्, ॐ नमो भगवते जितवैश्वानरजातवेदस इति शक्तिः, ॐ नमो भगवते आदित्याय नम इति कीलकम्, ॐ अग्निगर्भदेवता इति मंत्रः, ॐ नमो भगवते तुभ्यमादित्याय नमो नमः । श्रीसूर्यनारायणप्रीत्यर्थं जपे विनियोगः । अथ न्यासः ॥ ॐ ह्रां अंगुष्ठाभ्यां नमः । ॐ ह्रीं तर्जनीभ्यां नमः । ॐ ह्रूं मध्यमाभ्यां नमः । ॐ ह्रैं अनामिकाभ्यां नमः । ॐ ह्रौं कनिष्ठिकाभ्यां नमः । ॐ ह्रः करतलकरपृष्ठाभ्यां नमः । ॐ ह्रां हृदयाय नमः । ॐ ह्रीं शिरसे स्वाहा । ॐ ह्रूं शिखायै वषट् । ॐ ह्रैं कवचाय हुम् । ॐ ह्रौं नेत्रत्रयाय वौषट् । ॐ ह्रः अस्त्राय फट् । ॐ ह्रांह्रींह्रूंह्रैंह्रौंह्रः इति दिग्बंधः ॥ अथ ध्यानम् ॥ भास्वद्रत्नाढ्यमौलिः स्फुरदधररुचा रंजितश्चारुकेशो भास्वान् यो दिव्यतेजाः करकमलयुतः स्वर्णवर्णः प्रभाभिः । विश्वाकाशावकाशग्रहपतिशिखरे भाति यश्चोदयाद्रौ सर्वानंदप्रदाता हरिहरनमितः पातु मां विश्वचक्षुः ॥ १ ॥ पूर्वमष्टदलं पद्मं प्रणवादिप्रतिष्ठितम् । मायाबीजं दलाष्टाग्रे यंत्रमुद्धारयेदिति ॥ २ ॥ आदित्यं भास्करं भानुं रविं सूर्यं दिवाकरम् । मार्तंडं तपनं चेति दलेष्वष्टसु योजयेत् ॥ ३ ॥ दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा । अमोघा

विद्युता चेति मध्ये श्रीः सर्वतोमुखी ॥ ४ ॥ सर्वज्ञः सर्वगश्चैव सर्व-
कारणदेवता । सर्वेशं सर्वहृदयं नमामि सर्वसाक्षिणम् ॥ ५ ॥ सर्वात्मा
सर्वकर्ता च सृष्टिजीवनपालकः । हितः स्वर्गापवर्गस्य भास्करेश
नमोऽस्तु ते ॥ ६ ॥ इति प्रार्थना ॥ नमो नमस्तेऽस्तु सदा विभावसो
सर्वात्मने सप्तहयाय भानवे । अनंतशक्तिर्मणिभूषणेन ददस्व भुक्तिं
मम मुक्तिमव्ययाम् ॥ ७ ॥ अर्कं तु मूर्ध्नि विन्यस्य ललाटे च रविं
न्यसेत् । विन्यसेन्नेत्रयोः सूर्यं कर्णयोश्च दिवाकरम् ॥ ८ ॥ नासि-
कायां न्यसेद्भानुं मुखे वै भास्करं न्यसेत् । पर्जन्यमोष्ठयोश्चैव तीक्ष्णं
जिह्वांतरे न्यसेत् ॥ ९ ॥ सुवर्णरेतसं कंठे स्कंधयोस्तिग्मतेजसम् ।
बाह्वोस्तु पूषणं चैव मित्रं वै पृष्ठतो न्यसेत् ॥ १० ॥ वरुणं दक्षिणे
हस्ते त्वष्टारं वामतः करे । हस्तावुष्णकरः पातु हृदयं पातु भानु-
मान् ॥ ११ ॥ उदरे तु यमं विद्यादादित्यं नाभिमंडले । कट्यां तु
विन्यसेद्धंसं रुद्रमूर्वोस्तु विन्यसेत् ॥ १२ ॥ जान्वोस्तु गोपतिं
न्यस्य सवितारं तु जंघयोः । पादयोश्च विवस्वंतं गुल्फयोश्च दिवा-
करम् ॥ १३ ॥ बाह्यतस्तु तमोध्वंसं भगमभ्यंतरे न्यसेत् । सर्वां-
गेषु सहस्रांशुं दिग्विदिक्षु भगं न्यसेत् ॥ १४ ॥ इति दिग्बंधः ॥
एष आदित्यविन्यासो देवानामपि दुर्लभः । इमं भक्त्या न्यसेत्पार्थ
स याति परमां गतिम् ॥ १५ ॥ कामक्रोधकृतात्पापान्मुच्यते नात्र
संशयः । सर्पादपि भयं नैव संग्रामेषु पथेष्वपि ॥ १६ ॥ रिपुसंघट्ट-
कालेषु तथा चोरसमागमे । त्रिसंध्यं जपतो न्यासं महापातक-
नाशनम् ॥ १७ ॥ विस्फोटकसमुत्पन्नं तीव्रज्वरसमुद्भवम् । शिरोरोगं
नेत्ररोगं सर्वव्याधिविनाशनम् ॥ १८ ॥ कुष्ठव्याधिस्तथा दद्रूरोगाश्च
विविधाश्च ये । जपमानस्य नश्यंति शृणु भक्त्या तदर्जुन ॥ १९ ॥
आदित्यो मंत्रसंयुक्त आदित्यो भुवनेश्वरः । आदित्यान्नापरो देवो

ह्यादित्यः परमेश्वरः ॥ २० ॥ आदित्यमर्चयेद्ब्रह्मा शिव आदित्यमर्चयेत् । यदादित्यमयं तेजो मम तेजस्तदर्जुन ॥ २१ ॥ आदित्यं मंत्रसंयुक्तमादित्यं भुवनेश्वरम् । आदित्यं ये प्रपश्यंति मां पश्यन्ति न संशयः ॥ २२ ॥ त्रिसंध्यमर्चयेत्सूर्यं स्मरेद्भक्त्या तु यो नरः । न स पश्यति दारिद्र्यं जन्मजन्मनि चार्जुन ॥ २३ ॥ एतत्ते कथितं पार्थ आदित्यहृदयं मया । शृण्वन्मुक्तश्च पापेभ्यः सूर्यलोके महीयते ॥ २४ ॥ नमो भगवते तुभ्यमादित्याय नमो नमः । आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ॥ २५ ॥ सुवर्णः स्फटिको भानुः स्फुरितो विश्वतापनः । रविर्विश्वो महातेजाः सुवर्णः सुप्रबोधकः ॥ २६ ॥ हिरण्यगर्भस्त्रिशिरास्तपनोः भास्करो रविः । मार्तंडो गोपतिः श्रीमान् कृतज्ञश्च प्रतापवान् ॥ २७ ॥ तमिस्रहा भगो हंसो नासत्यश्च तमोनुदः । शुद्धो विरोचनः केशी सहस्रांशुर्महाप्रभुः ॥ २८ ॥ विवस्वान् पूषणो मृत्युर्मिहिरो जामदग्न्यजित् । घर्मरश्मिः पतंगश्च शरण्योऽमित्रहा तपः ॥ २९ ॥ दुर्विज्ञेयगतिः शूरस्तेजोराशिर्महायशाः । शंभुश्चित्रांगदः सौम्यो हव्यकव्यप्रदायकः ॥ ३० ॥ अंशुमानुत्तमो देव ऋग्यजुः साम एव च । हरिदश्वस्तमोदारः सप्तसप्तिर्मरीचिमान् ॥ ३१ ॥ अग्निगर्भोऽदितेः पुत्रः शंभुस्तिमिरनाशनः । पूषा विश्वंभरो मित्रः सुवर्णः सुप्रतापवान् ॥ ३२ ॥ आतपी मंडली भास्वाँस्तपनः सर्वतापनः । कृतविश्वो महातेजाः सर्वरत्नमयोद्भवः ॥ ३३ ॥ अक्षरश्च क्षरश्चैव प्रभाकरविभाकरौ । चंद्रचंद्रांगदः सौम्यो हव्यकव्यप्रदायकः ॥ ३४ ॥ अंगारको गदोऽगस्ती रक्तांगश्चांगवर्धनः । बुधो बुद्धासनो बुद्धिर्बुद्धात्मा बुद्धिवर्धनः ॥ ३५ ॥ बृहद्भानुर्बृहद्भासी बृहद्धामा बृहस्पतिः । शुक्रस्त्वं शुक्ररेतास्त्वं शुक्रांगः

शुक्रभूषणः ॥ ३६ ॥ शनिमान् शनिरूपस्त्वं शनैर्गच्छसि सर्वदा । अनादिरादिरादित्यस्तेजोराशिर्महातपाः ॥ ३७ ॥ अनादिरादिरूपस्त्वमादित्यो दिक्पतिर्यमः । भानुमान् भानुरूपस्त्वं स्वर्भानुर्भानुदीप्तिमान् ॥ ३८ ॥ धूमकेतुर्महाकेतुः सर्वकेतुरनुत्तमः । तिमिरावरणः शंभुः स्रष्टा मार्तंड एव च ॥ ३९ ॥ नमः पूर्वाय गिरये पश्चिमाय नमो नमः । नमोत्तराय गिरये दक्षिणाय नमो नमः ॥ ४० ॥ नमो नमः सहस्रांशो ह्यादित्याय नमो नमः । नमः पद्मप्रबोधाय नमस्ते द्वादशात्मने ॥ ४१ ॥ नमो विश्वप्रबोधाय नमो भ्राजिष्णुजिष्णवे । ज्योतिषे च नमस्तुभ्यं ज्ञानार्काय नमो नमः ॥ ४२ ॥ प्रदीप्ताय प्रगल्भाय युगांताय नमो नमः । नमस्ते होतृपतये पृथिवीपतये नमः ॥ ४३ ॥ नमोंकार वषट्कार सर्वयज्ञ नमोऽस्तु ते । ऋग्वेदाय यजुर्वेद सामवेद नमोऽस्तु ते ॥ ४४ ॥ नमो हाटकवर्णाय भास्कराय नमो नमः । जयाय जयभद्राय हरिदश्वाय ते नमः ॥ ४५ ॥ दिव्याय दिव्यरूपाय ग्रहाणां पतये नमः । नमस्ते शुचये नित्यं नमः कुरुकुलात्मने ॥ ४६ ॥ नमस्त्रैलोक्यनाथाय भूतानां पतये नमः । नमः कैवल्यनाथाय नमस्ते दिव्यचक्षुषे ॥ ४७ ॥ त्वं ज्योतिस्त्वं द्युतिर्ब्रह्मा त्वं विष्णुस्त्वं प्रजापतिः । त्वमेव रुद्रो रुद्रात्मा वायुरग्निस्त्वमेव च ॥ ४८ ॥ योजनानां सहस्रे द्वे शते द्वे द्वे च योजने । एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते ॥ ४९ ॥ नवयोजनलक्षाणि सहस्रद्विशतानि च । यावद्घटीप्रमाणेन क्रममाण नमोऽस्तु ते ॥ ५० ॥ अग्रतश्च नमस्तुभ्यं पृष्ठतश्च सदा नमः । पार्श्वतश्च नमस्तुभ्यं नमस्ते चास्तु सर्वदा ॥ ५१ ॥ नमः सुरारिहंत्रे च सोमसूर्याग्निचक्षुषे । नमो दिव्याय व्योमाय सर्वतंत्रमयाय च ॥ ५२ ॥ नमो वेदांतवेद्याय सर्वकर्मादि-

साक्षिणे। नमो हरितवर्णाय सुवर्णाय नमो नमः ॥ ५३ ॥ अरुणो माघमासे तु सूर्यो वै फाल्गुने तथा। चैत्रमासे तु वेदांगो भानुर्वैशाखतापनः ॥ ५४ ॥ ज्येष्ठमासे तपेदिंद्र आषाढे तपते रविः। गभस्तिः श्रावणे मासि यमो भाद्रपदे तथा ॥ ५५ ॥ इषे सुवर्णरेताश्च कार्तिके च दिवाकरः। मार्गशीर्षे तपेन्मित्रः पौषे विष्णुः सनातनः ॥ ५६ ॥ पुरुषस्त्वधिके मासे मासाधिक्ये तु कल्पयेत्। इत्येते द्वादशादित्याः काश्यपेयाः प्रकीर्तिताः ॥ ५७ ॥ उग्ररूपा महात्मानस्तपंते विश्वरूपिणः। धर्मार्थकाममोक्षाणां प्रस्फुटा हेतवो नृप ॥ ५८ ॥ सर्वपापहरं चैवमादित्यं संप्रपूजयेत्। एकधा दशधा चैव शतधा च सहस्रधा ॥ ५९ ॥ तपंते विश्वरूपेण सृजंति संहरंति च। एष विष्णुः शिवश्चैव ब्रह्मा चैव प्रजापतिः ॥ ६० ॥ महेंद्रश्चैव कालश्च यमो वरुण एव च। नक्षत्रग्रहताराणामधिपो विश्वतापनः ॥ ६१ ॥ वायुरग्निर्धनाध्यक्षो भूतकर्ता स्वयं प्रभुः। एष देवो हि देवानां सर्वमाप्यायते जगत् ॥ ६२ ॥ एष कर्ता हि भूतानां संहर्ता रक्षकस्तथा। एष लोकानुलोकाश्च सप्तद्वीपाश्च सागराः ॥ ६३ ॥ एष पातालसप्तस्था दैत्यदानवराक्षसाः। एष धाता विधाता च बीजं क्षेत्रं प्रजापतिः ॥ ६४ ॥ एक एव प्रजा नित्यं संवर्धयति रश्मिभिः। एष यज्ञः स्वधा स्वाहा ह्रीः श्रीश्च पुरुषोत्तमः ॥ ६५ ॥ एष भूतात्मको देवः सूक्ष्मोऽव्यक्तः सनातनः। ईश्वरः सर्वभूतानां परमेष्ठी प्रजापतिः ॥ ६६ ॥ कालात्मा सर्वभूतात्मा वेदात्मा विश्वतोमुखः। जन्ममृत्युजराव्याधिसंसारभयनाशनः ॥ ६७ ॥ दारिद्र्यव्यसनध्वंसी श्रीमान्देवो दिवाकरः। कीर्तनीयो विवस्वांश्च मार्तंडो भास्करो रविः ॥ ६८ ॥ लोकप्रकाशकः श्रीमाँल्लोकचक्षुर्ग्रहेश्वरः। लोकसाक्षी त्रिलोकेशः

कर्ता हर्ता तमिस्रहा ॥ ६९ ॥ तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः । गभस्तिहस्तो ब्रह्मण्यः सर्वदेवनमस्कृतः ॥ ७० ॥ आयुरारोग्यमैश्वर्यं नरा नार्यश्च मंदिरे । यस्य प्रसादात्संतुष्टि-रादित्यहृदयं जपेत् ॥ ७१ ॥ इत्येतैर्नामभिः पार्थ आदित्यं स्तौति नित्यशः । प्रातरुत्थाय कौंतेय तस्य रोगभयं नहि ॥ ७२ ॥ पातकान्मुच्यते पार्थ व्याधिभ्यश्च न संशयः । एकसंध्यं द्विसंध्यं वा सर्वपापैः प्रमुच्यते ॥ ७३ ॥ त्रिसंध्यं जपमानस्तु पश्येच्च परमं पदम् । यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते ॥ ७४ ॥ यद्रात्र्यात्कुरुते पापं तद्रात्र्यात्प्रतिमुच्यते । दद्रुस्फोटककुष्ठानि मंडलानि विषूचिका ॥ ७५ ॥ सर्वव्याधिमहारोगभूतबाधास्तथैव च । डाकिनी शाकिनी चैव महारोगभयं कुतः ॥ ७६ ॥ ये चान्ये दुष्टरोगाश्च ज्वरातीसारकादयः । जपमानस्य नश्यंति जीवेच्च शरदां शतम् ॥ ७७ ॥ अशीर्षां पश्यति च्छायामहोरात्रं धनंजय । संवत्सरेण मरणं तदा तस्य ध्रुवं भवेत् । तथापि पठनादस्य मृतिभीर्न हि जायते ॥ ७८ ॥ यस्त्विदं पठते भक्त्या भानोर्वारे महात्मनः । प्रातःस्नाने कृते पार्थ एकाग्रकृतमानसः ॥ ७९ ॥ सुवर्णचक्षुर्भवति न चांधस्तु प्रजायते । पुत्रवान् धनसंपन्नो जायते चारुजः सुखी ॥ ८० ॥ सर्वसिद्धिमवाप्नोति सर्वत्र विजयी भवेत् । आदित्यहृदयं पुण्यं सूर्यनामविभूषितम् ॥ ८१ ॥ श्रुत्वा च निखिलं पार्थ सर्वपापैः प्रमुच्यते । अतः परतरं नास्ति सिद्धिकामस्य पांडव ॥ ८२ ॥ एतज्जपस्व कौंतेय येन श्रेयो ह्यवाप्स्यसि । आदित्यहृदयं नित्यं यः पठेत्सुसमाहितः ॥ ८३ ॥ भ्रूणहा मुच्यते पापात्कृतघ्नो ब्रह्मघातकः । गोघ्नः सुरापो दुर्भोजी दुष्प्रतिग्रहकारकः ॥ ८४ ॥ पातकानि च सर्वाणि दहत्येव न संशयः । य इदं शृणुयान्नित्यं जपे-

द्वापि समाहितः ॥ ८५ ॥ सर्वपापविशुद्धात्मा सूर्यलोके महीयते । अपुत्रो लभते पुत्रान्निर्धनो धनमाप्नुयात् ॥ ८६ ॥ कुरोगी मुच्यते रोगाद्भक्त्या यः पठते सदा । यस्त्वादित्यदिने पार्थ नाभिमात्रजले स्थितः ॥ ८७ ॥ उदयाचलमारूढं भास्करं प्रणतः स्थितः । जपते मानवो भक्त्या श्रृणुयाद्वापि भक्तितः ॥ ८८ ॥ स याति परमं स्थानं यत्र देवो दिवाकरः । अमित्रदमनं पार्थ यदा कर्तुं समारभेत् ॥ ८९ ॥ तदा प्रतिकृतिं कृत्वा शत्रोश्चरणपांसुभिः । आक्रम्य वामपादेन ह्यादित्यहृदयं जपेत् ॥ ९० ॥ एतन्मंत्रं समाहूय सर्वसिद्धिकरं परम् । ॐ ह्रीं हिमालीढं स्वाहा । ॐ ह्रीं निलीढं स्वाहा । ॐ ह्रीमालीढं स्वाहा । इति मंत्रः ॥ त्रिभिश्च रोगी भवति ज्वरी भवति पंचभिः । जपैस्तु सप्तभिः पार्थ राक्षसीं तनुमाविशेत् ॥ ९१ ॥ राक्षसेनाभिभूतस्य विकारान् श्रृणु पांडव । गीयते नृत्यते नग्न आस्फोटयति धावति ॥ ९२ ॥ शिवारुतं च कुरुते हसते क्रंदते पुनः । एवं संपीड्यते पार्थ यद्यपि स्यान्महेश्वरः ॥ ९३ ॥ किं पुनर्मानुषः कश्चिच्छौचाचारविवर्जितः । पीडितस्य न संदेहो ज्वरो भवति दारुणः ॥ ९४ ॥ यदा चानुग्रहं तस्य कर्तुमिच्छेच्छुभंकरम् । तदा सलिलमादाय जपेन्मंत्रमिमं बुधः ॥ ९५ ॥ नमो भगवते तुभ्यमादित्याय नमो नमः । जयाय जयभद्राय हरिदश्वाय ते नमः ॥ ९६ ॥ स्नापयेत्तेन मंत्रेण शुभं भवति नान्यथा । अन्यथा च भवेद्दोषो नश्यते नात्र संशयः ॥ ९७ ॥ अतस्ते निखिलः प्रोक्तः पूजां चैव निबोध मे । उपलिप्ते शुचौ देशे नियतो वाग्यतः शुचिः ॥ ९८ ॥ वृत्तं वा चतुरस्रं वा लिप्तभूमौ लिखेच्छुचि । त्रिधा तत्र लिखेत्पद्ममष्टपत्रं सकर्णिकम् ॥ ९९ ॥ अष्टपत्रं लिखेत्पद्मं लिप्तगोमयमंडले । पूर्वपत्रे लिखेत् सूर्यमाग्नेय्यां तु रविं न्यसेत् ॥ १०० ॥ याम्यायां च विवस्वंतं नैर्ऋत्यां तु भगं

न्यसेत् । प्रतीच्यां वरुणं विद्याद्वायव्यां मित्रमेव च ॥ १ ॥ आदित्यमुत्तरे पत्रे ईशान्यां मित्रमेव च । मध्ये तु भास्करं विद्यात्क्रमेणैवं समर्चयेत् ॥ २ ॥ अतः परतरं नास्ति सिद्धिकामस्य पांडव । महातेजः समुद्यंतं प्रणमेत्स कृतांजलिः ॥ ३ ॥ सकेसराणि पद्मानि करवीराणि चार्जुन । तिलतंडुलयुक्तानि कुशगंधोदकानि च ॥ ४ ॥ रक्तचंदनमिश्राणि कृत्वा वै ताम्रभाजने । धृत्वा शिरसि तत्पात्रं जानुभ्यां धरणीं स्पृशेत् ॥ ५ ॥ मंत्रपूतं गुडाकेश चार्घ्यं दद्याद्गभस्तये । सायुधं सरथं चैव सूर्यमावाहयाम्यहम् ॥ ६ ॥ स्वागतो भव । सुप्रतिष्ठितो भव । संनिधो भव । संनिहितो भव । संमुखो भव । इति पंचमुद्राः ॥ स्फुटयित्वाऽर्हयेत्सूर्यं भुक्तिं मुक्तिं लभेन्नरः ॥ ७ ॥ ॐ श्रीं विद्याकिलिकिलिकिलिकटकेष्टसर्वार्थसाधनाय स्वाहा । ॐ श्रीं ह्रीं हूं हंसः सूर्याय नमः स्वाहा । ॐ श्रीं ह्रां ह्रीं ह्रूं हः सूर्यमूर्तये स्वाहा ॐ श्रीं ह्रीं खं खः लोकाय सर्वमूर्तये स्वाहा । ॐ ह्रूं मार्तंडाय स्वाहा । नमोऽस्तु सूर्याय सहस्रभानवे नमोऽस्तु वैश्वानरजातवेदसे । त्वमेव चार्घ्यं प्रतिगृह्ण देव देवाधिदेवाय नमो नमस्ते ॥८॥ नमो भगवते तुभ्यं नमस्ते जातवेदसे । दत्तमर्घ्यं मया भानो त्वं गृहाण नमोऽस्तु ते ॥ ९ ॥ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते । अनुकंपय मां देव गृहाणार्घ्यं नमोऽस्तु ते ॥ ११० ॥ नमो भगवते तुभ्यं नमस्ते जातवेदसे । ममेदमर्घ्यं गृह्ण त्वं देवदेव नमोऽस्तु ते ॥ ११ ॥ सर्वदेवाधिदेवाय आधिव्याधिविनाशिने । इदं गृहाण मे देव सर्वव्याधिर्विनश्यतु ॥ १२ ॥ नमः सूर्याय शांताय सर्वरोगविनाशिने । ममेप्सितं फलं दत्त्वा प्रसीद परमेश्वर ॥ १३ ॥ ॐ नमो भगवते सूर्याय स्वाहा । ॐशिवाय स्वाहा । ॐ सर्वात्मने सूर्याय नमः स्वाहा । ॐ अक्षय्यतेजसे नमः स्वाहा । सर्वसंकटदारिद्र्यं शत्रुं नाशय नाशय । सर्व-

लोकेषु विश्वात्मन्सर्वात्मन् सर्वदर्शक ॥ १४ ॥ नमो भगवते सूर्य कुष्ठरोगान्विखंडय । आयुरारोग्यमैश्वर्यं देहि देव नमोऽस्तु ते ॥ १५ ॥ नमो भगवते तुभ्यमादित्याय नमो नमः । ॐ अक्षय्यतेजसे नमः । ॐ सूर्याय नमः । ॐ विश्वमूर्तये नमः । आदित्यं च शिवं विद्याच्छिवमादित्यरूपिणम् । उभयोरंतरं नास्ति आदित्यस्य शिवस्य च ॥ १६ ॥ एतदिच्छाम्यहं श्रोतुं पुरुषो वै दिवाकरः । उदये ब्रह्मणो रूपं मध्याह्ने तु महेश्वरः ॥ १७ ॥ अस्तमाने स्वयं विष्णुस्त्रिमूर्तिश्च दिवाकरः । नमो भगवते तुभ्यं विष्णवे प्रभविष्णवे ॥ १८ ॥ ममेदमर्घ्यं प्रतिगृह्ण देव देवाधिदेवाय नमो नमस्ते । श्रीसूर्यनारायणाय सांगाय सपरिवाराय इदमर्घ्यं समर्पयामि ॥ १९ ॥ हिमघ्नाय तमोघ्नाय रक्षोघ्नाय च ते नमः । कृताघघ्नाय सत्याय तस्मै सूर्यात्मने नमः ॥ १२० ॥ जयोऽजयश्च विजयो जितप्राणो जितश्रमः । मनोजवो जितक्रोधो वाजिनः सप्त कीर्तिताः ॥ २१ ॥ हरितहयरथं दिवाकरं कनकमयांबुणुजरेपिंजरम् । प्रतिदिनमुदये नवं नवं शरणमुपैमि हिरण्यरेतसम् ॥ २२ ॥ न तं व्यालाः प्रबाधंते न व्याधिभ्यो भयं भवेत् । न नागेभ्यो भयं चैव न च भूतभयं क्वचित् ॥ २३ ॥ अग्निशत्रुभयं नास्ति पार्थिवेभ्यस्तथैव च । दुर्गतिं तरते घोरां प्रजां च लभते पशून् ॥ २४ ॥ सिद्धिकामो लभेत्सिद्धिं कन्याकामस्तु कन्यकाम् । एतत्पठेत्स कौंतेय भक्तियुक्तेन चेतसा ॥ २५ ॥ अश्वमेधसहस्रस्य वाजपेयशतस्य च । कन्याकोटिसहस्रस्य दत्तस्य फलमाप्नुयात् ॥ २६ ॥ इदमादित्यहृदयं योऽधीते सततं नरः । सर्वपापविशुद्धात्मा सूर्यलोके महीयते ॥ २७ ॥ नास्त्यादित्यसमो देवो नास्त्यादित्यसमा गतिः । प्रत्यक्षो भगवान्विष्णुर्येन विश्वं प्रतिष्ठितम् ॥ २८ ॥ नवतिर्योजनं लक्षं सहस्राणि शतानि च ।

यावद्घटीप्रमाणेन तावच्चरति भास्करः ॥ २९ ॥ गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् । तत्फलं लभते विद्वान् शांतात्मा स्तौति यो रविम् ॥ १३० ॥ योऽधीते सूर्यहृदयं सकलं सफलं भवेत् । अष्टानां ब्राह्मणानां च लेखयित्वा समर्पयेत् ॥ ३१ ॥ ब्रह्मलोके ऋषीणां च जायते मानुषोऽपि वा । जातिस्मरत्वमाप्नोति शुद्धात्मा नात्र संशयः ॥ ३२ ॥ अजाय लोकत्रयपावनाय भूतात्मने गोपा तये वृषाय । सूर्याय सर्वप्रलयांतकाय नमो महाकारुणिकोत्तमाय ॥ ३३ ॥ विवस्वते ज्ञानभृदंतरात्मने जगत्प्रदीपाय जगद्धितैषिणे । स्वयंभुवे दीप्तसहस्रचक्षुषे सुरोत्तमायामिततेजसे नमः ॥ ३४ ॥ सुरैरनेकैः परिसेविताय हिरण्यगर्भाय हिरण्मयाय । महात्मने मोक्षप्रदाय नित्यं नमोऽस्तु ते वासरकारणाय ॥ ३५ ॥ आदित्यश्चार्चितो देव आदित्यः परमं पदम् । आदित्यो मातृको भूत्वा ह्यादित्यो वाङ्मयं जगत् ॥ ३६ ॥ आदित्यं पश्यते भक्त्या मां पश्यति ध्रुवं नरः । आदित्यं पश्यते भक्त्या न स पश्यति मां नरः ॥ ३७ ॥ त्रिगुणं च त्रितत्त्वं च त्रयो देवास्त्रयोऽग्नयः । त्रयाणां च त्रिमूर्तिस्त्वं तुरीयस्त्वं नमोऽस्तु ते ॥ ३८ ॥ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे । त्रयीमयाय त्रिगुणात्मधारिणे विरिंचिनारायणशंकरात्मने ॥ ३९ ॥ यस्योदयेनेह जगत्प्रबुध्यते प्रवर्तते चाखिलकर्मसिद्धये । ब्रह्मेंद्रनारायणरुद्रवंदितः स नः सदा यच्छतु मंगलं रविः ॥ १४० ॥ नमोऽस्तु सूर्याय सहस्ररश्मये सहस्रशाखान्वितसंभवात्मने । सहस्रयोगोद्भवभावभागिने सहस्रसंख्यायुगधारिणे नमः ॥ ४१ ॥ यन्मंडलं दीप्तिकरं विशालं रत्नप्रभं तीव्रमनादिरूपम् । दारिद्र्यदुःखक्षयकारणं च पुनातु मां तत्सवितुर्वरेण्यम् ॥ ४२ ॥ यन्मंडलं देवगणैः सुपूजितं विप्रैः

स्तुतं भावनमुक्तिकोविदम्। तं देवदेवं प्रणमामि सूर्यं पुनातु मां त० ॥ ४३ ॥ यन्मंडलं ज्ञानघनं त्वगम्यं त्रैलोक्यपूज्यं त्रिगुणात्मरूपम्। समस्ततेजोमयदिव्यरूपं पुनातु मां तत्सवि० ॥ ४४ ॥ यन्मंडलं गूढमतिप्रबोधं धर्मस्य वृद्धिं कुरुते जनानाम्। यत्सर्वपापक्षयकारणं च पुनातु मां त० ॥ ४५ ॥ यन्मंडलं व्याधिविनाशदक्षं यदृग्यजुःसामसु संप्रगीतम्। प्रकाशितं येन च भूर्भुवःस्वः पुनातु मां त० ॥ ४६ ॥ यन्मंडलं वेदविदो वदंति गायंति यच्चारणसिद्धसंघाः। यद्योगिनो योगजुषां च संघाः पुनातु मां त० ॥ ४७ ॥ यन्मंडलं सर्वजनेषु पूजितं ज्योतिश्च कुर्यादिह मर्त्यलोके। यत्कालकालादिमनादिरूपं पुनातु मां त० ॥ ४८ ॥ यन्मंडलं विष्णुचतुर्मुखाख्यं यदक्षरं पापहरं जनानाम्। यत्कालकल्पक्षयकारणं च पुनातु मां त० ॥ ४९ ॥ यन्मंडलं विश्वसृजां प्रसिद्धमुत्पत्तिरक्षाप्रलयप्रगल्भम्। यस्मिञ्जगत्संहरतेऽखिलं च पुनातु मां त० ॥ १५० ॥ यन्मंडलं सर्वगतस्य विष्णोरात्मा परं धाम विशुद्धतत्त्वम्। सूक्ष्मांतरैर्योगपथानुगम्यं पुनातु मां त० ॥ ५१ ॥ यन्मंडलं ब्रह्मविदो विदंति गायंति यच्चारणसिद्धसंघाः। यन्मंडलं वेदविदः स्मरंति पुनातु मां त० ॥ ५२ ॥ यन्मंडलं वेदविदोपगीतं यद्योगिनां योगपथानुगम्यम्। तत्सर्ववेदं प्रणमामि सूर्यं पुनातु मां त० ॥ ५३ ॥ मंडलाष्टमिदं पुण्यं यः पठेत्सततं नरः। सर्वपापविशुद्धात्मा सूर्यलोके महीयते ॥ ५४ ॥ ध्येयः सदा सवितृमंडलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः। केयूरवान्मकरकुंडलवान् किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः ॥ ५५ ॥ सशंखचक्रं रविमंडले स्थितं कुशेशयाक्रांतमनंतमच्युतम्। भजामि बुद्ध्या तपनीयमूर्तिं सुरोत्तमं चित्रविभूषणोज्ज्वलम् ॥ ५६ ॥ एवं

ब्रह्मादयो देवा ऋषयश्च तपोधनाः। कीर्तयंति सुरश्रेष्ठं देवं नारायणं विभुम् ॥ ५७ ॥ वेदवेदांगशरीरं दिव्यदीप्तिकरं परम्। रक्षोघ्नं रक्तवर्णं च सृष्टिसंहारकारकम् ॥ ५८ ॥ एकचक्रो रथो यस्य दिव्यः कनकभूषितः। स मे भवतु सुप्रीतः पद्महस्तो दिवाकरः ॥ ५९ ॥ आदित्यः प्रथमं नाम द्वितीयं तु दिवाकरः । तृतीयं भास्करः प्रोक्तं चतुर्थं तु प्रभाकरः॥ १६० ॥ पंचमं तु सहस्रांशुः षष्ठं चैव त्रिलोचनः । सप्तमं हरिदश्वश्च अष्टमं तु विभावसुः॥ ६१ ॥ नवमं दिनकृत्प्रोक्तं दशमं द्वादशात्मकम्। एकादशं त्रयीमूर्तिर्द्वादशं सूर्य एव च ॥ ६२ ॥ द्वादशादित्यनामानि प्रातःकाले पठेन्नरः । दुःखप्रणाशनं चैव सर्वदुःखं च नश्यति ॥ ६३ ॥ दद्रूकुष्ठहरं चैव दारिद्र्यं हरते ध्रुवम्। सर्वतीर्थप्रदं चैव सर्वकामप्रवर्धनम् ॥ ६४ ॥ यः पठेत्प्रातरुत्थाय भक्त्या नित्यमिदं नरः। सौख्यमायुस्तथाऽऽरोग्यं लभते मोक्षमेव च ॥ ६५ ॥ अग्निमीळे नमस्तुभ्यमिषेत्वोर्जेस्वरूपिणे । अग्न आयाहि वीतस्त्वं नमस्ते ज्योतिषां पते ॥ ६६ ॥ शं नो देवी नमस्तुभ्यं जगच्चक्षुर्नमोऽस्तु ते । पंचमायोपवेदाय नमस्तुभ्यं नमो नमः ॥ ६७ ॥ पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः । सप्ताश्वरथसंयुक्तो द्विभुजः स्यात्सदा रविः ॥ ६८ ॥ आदित्यस्य नमस्कारं ये कुर्वंति दिने दिने। जन्मांतरसहस्रेषु दारिद्र्यं नोपजायते ॥ ६९ ॥ उदयगिरिमुपेतं भास्करं पद्महस्तं निखिलभुवननेत्रं रत्नरत्नोपमेयम् । तिमिरकरिमृगेंद्रं बोधकं पद्मिनीनां सुरवरमभिवंदे सुंदरं विश्ववंद्यम् ॥ १७० ॥ इति श्रीभविष्योत्तरपुराणे श्रीकृष्णार्जुनसंवादे आदित्यहृदयस्तोत्रं संपूर्णम् ॥

## ४११. सूर्यकवचस्तोत्रम् ।

श्रीगणेशाय नमः ॥ याज्ञवल्क्य उवाच ॥ श्रृणुष्व मुनिशार्दूल सूर्यस्य कवचं शुभम् । शरीरारोग्यदं दिव्यं सर्वसौभाग्यदायकम् ॥ १ ॥ देदीप्यमानमुकुटं स्फुरन्मकरकुंडलम् । ध्यात्वा सहस्रकिरणं स्तोत्रमेतदुदीरयेत् ॥ २ ॥ शिरो मे भास्करः पातु ललाटं मेऽमितद्युतिः । नेत्रे दिनमणिः पातु श्रवणे वासरेश्वरः ॥ ३ ॥ घ्राणं घर्मघृणिः पातु वदनं वेदवाहनः । जिह्वां मे मानदः पातु कंठं मे सुरवंदितः ॥ ४ ॥ स्कंधौ प्रभाकरः पातु वक्षः पातु जनप्रियः । पातु पादौ द्वादशात्मा सर्वाङ्गं सकलेश्वरः ॥ ५ ॥ सूर्यरक्षात्मकं स्तोत्रं लिखित्वा भूर्जपत्रके । दधाति यः करे तस्य वशगाः सर्वसिद्धयः ॥ ६ ॥ सुस्नातो यो जपेत्सम्यग्योऽधीते स्वस्थमानसः । स रोगमुक्तो दीर्घायुः सुखं पुष्टिं च विंदति ॥ ७ ॥ इति श्रीमद्याज्ञवल्क्यमुनिविरचितं सूर्यकवचस्तोत्रं संपूर्णम् ॥

## ४१२. अगस्त्योक्त आदित्यहृदयम् ।

श्रीगणेशाय नमः ॥ ततो युद्धपरिश्रांतं समरे चिंतया स्थितम् । रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥ १ ॥ दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् । उपगम्याब्रवीद्रामामगस्त्यो भगवांस्तदा ॥ २ ॥ राम राम महाबाहो श्रृणु गुह्यं सनातनम् । येन सर्वानरीन्वत्स समरे विजयिष्यसे ॥ ३ ॥ आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् । जयावहं जपेन्नित्यमक्षयं परमं शिवम् ॥ ४ ॥ सर्वमंगलमांगल्यं सर्वपापप्रणाशनम् । चिंताशोकप्रशमनमायुर्वर्धनमुत्तमम् ॥ ५ ॥ रश्मिमंतं समुद्यंतं देवासुरनमस्कृतम् । पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥ ६ ॥ सर्वदेवात्मको ह्येष तेजस्वी

रश्मिभावनः । एष देवः सुरगणाँल्लोकान् पातु गभस्तिभिः ॥ ७ ॥ एष ब्रह्मा च विष्णुश्च शिवः स्कंदः प्रजापतिः । महेंद्रो धनदः कालो यमः सोमो ह्यपांपतिः ॥ ८ ॥ पितरो वसवः साध्या अश्विनौ मरुतो मनुः । वायुर्वह्निः प्रजा प्राणा ऋतुकर्ता प्रभाकरः ॥ ९ ॥ आदित्यः सविता सूर्य खगः पूषा गभस्तिमान् । सुवर्णस्तपनो भानुः स्वर्णरेता दिवाकरः ॥ १० ॥ हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरीचिमान् । तिमिरोन्मथनः शंभुस्त्वष्टा मार्तंडकोंऽशुमान् ॥ ११ ॥ हिरण्यगर्भः शिशिरस्तपनो भास्करो रविः । अग्निगर्भोऽदितेः पुत्रः शङ्खः शिशिरनाशनः ॥ १२ ॥ व्योमनाथस्तमोभेदी ऋग्यजुःसामपारगः । धनुर्वृष्टिरपां मित्रो विन्ध्यवीथीप्लवङ्गमः ॥ १३ ॥ आतपी मंडली मृत्युः पिङ्गलः सर्वतापनः । कविर्विश्वो महातेजा रक्तः सर्वभवोद्भवः ॥ १४ ॥ नक्षत्रग्रहताराणामधिपो विश्वभावनः । तेजसामपि तेजस्वी द्वादशात्मन्नमोऽस्तु ते ॥ १५ ॥ नमः पूर्वाय गिरये पश्चिमायाद्रये नमः । ज्योतिर्गणानां पतये दिनाधिपतये नमः ॥ १६ ॥ जयाय जयभद्राय हर्यश्वाय नमो नमः । नमो नमः सहस्रांशो आदित्याय नमो नमः ॥ १७ ॥ नम उग्राय वीराय सारंगाय नमो नमः । नमः पद्मप्रबोधाय प्रचंडाय नमोऽस्तु ते ॥ १८ ॥ ब्रह्मेशानाच्युतेशाय सूरायादित्यवर्चसे । भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥ १९ ॥ तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने । कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥ २० तप्तचामीकराभाय हरये विश्वकर्मणे । नमस्तमोऽभिनिघ्नाय रुचये लोकसाक्षिणे ॥ २१ ॥ नाशयत्येष वै भूतं तदेव सृजति प्रभुः । पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥ २२ ॥ एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः । एष चैवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ॥ २३ ॥ देवाश्च क्रतवश्चैव

क्रतूनां फलमेव च । यानि कृत्यानि लोकेषु सर्वेषु परमप्रभुः ॥ २४ ॥ एनमापत्सु कृच्छ्रेषु कांतारेषु भयेषु च । कीर्तयन्पुरुषः कश्चिन्नावसीदति राघव ॥ २५ ॥ पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् । एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ॥ २६ ॥ अस्मिन्क्षणे महाबाहो रावणं त्वं जयिष्यसि । एवमुक्त्वा ततोऽगस्त्यो जगाम स यथागतम् ॥ २७ ॥ एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा । धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥ २८ ॥ आदित्यं प्रेक्ष्य जप्त्वेदं परं हर्षमवाप्तवान् । त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ॥ २९ ॥ रावणं प्रेक्ष्य हृष्टात्मा युद्धार्थं समुपागमत् । सर्वयत्नेन महता वधे तस्य धृतोऽभवत् ॥ ३० ॥ अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः । निशिचरपतिसंक्षयं विदित्वा सुरगणमध्यगतो वचस्त्वरेति ॥ ३१ ॥ इति श्रीवाल्मीकीयरामायणेऽगस्त्यप्रोक्तमादित्यहृदयस्तोत्रं संपूर्णम् ॥

## ४१३. सूर्यस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ सप्ताश्वं समारुह्यारुणसारथिमुत्तमम् । श्वेतपद्मधरं देवं त्वां सूर्यं प्रणमाम्यहम् ॥ १ ॥ बन्धूकपुष्पसंकाशं हारकुंडलभूषणम् । एकचक्रधरं देवं त्वां सूर्यं० ॥ २ ॥ लोहितस्वर्णसंकाशं सर्वलोकपितामहम् । सर्वव्याधिहरं देवं त्वां सूर्यं० ॥ ३ ॥ त्वं देव ईश्वरः शक्रब्रह्मविष्णुमहेशराट् । परं धर्मं परं ज्ञानं त्वां सूर्यं० ॥ ४ ॥ त्वं देवलोककर्ता च कीर्त्यात्मा करुणांशकम् । तेजो रुद्रधरं देवं त्वां सूर्यं० ॥ ५ ॥ पृथिव्यस्तेजो वायुश्चात्माप्याकाशमेव च । सर्वज्ञं श्रीजगन्नाथं त्वां सूर्यं० ॥ ६ ॥ अखंडमंडलाकारं व्याप्तं येन चराचरम् । गगनालिंगमाराध्यं त्वां सूर्यं० ॥ ७ ॥ निर्मलं निर्वि-

कल्पं च निर्विकारं निरामयम्। जगत्कर्ता जगद्धर्तास्त्वां सूर्य० ॥ ८ ॥ सूर्यस्तोत्रं जपेन्नित्यं ग्रहपीडाविनाशनम्। धनं धान्यं मनोवाञ्छां श्रियः प्राप्नोति नित्यशः ॥ ९ ॥ शिवरात्रिसहस्रेषु कृत्वा जागरणं भवेत्। यत्फलं लभते सर्वं तद्धि सूर्यस्य दर्शनात् ॥ १० ॥ एकादशीसहस्राणि संक्रांत्ययुतमेव च। सप्तकोटिसु दर्शेषु तत्फलं सूर्यदर्शनात् ॥ ११ ॥ अश्वमेधसहस्राणि वाजपेयशतानि च। कोटिकन्याप्रदानानि तत्फलं सूर्यदर्शनात् ॥ १२ ॥ गयापिंडः परं दाने पितॄणां च समुद्धरम्। दृष्ट्वा ह्यग्र्येश्वरं देवं तत्फलं समवाप्नुयात् ॥ १३ ॥ अग्र्येश्वरसमोपेतो सोमनाथस्तथैव च। केदारमुदकं पीत्वा पुनर्जन्म न विद्यते ॥ १४ ॥ सूर्यस्तोत्रं पठेन्नित्यमेकचित्तः समाहितः। दुःखदारिद्र्यनिर्मुक्तः सूर्यलोकं स गच्छति ॥ १५ ॥ इति श्रीसूर्यस्तोत्रं संपूर्णम् ॥

## ४१८. सूर्याष्टोत्तरशतनामस्तोत्रम्।

श्रीगणेशाय नमः ॥ वैशंपायन उवाच ॥ शृणुष्वावहितो राजन् शुचिर्भूत्वा समाहितः। क्षणं च कुरु राजेंद्र गुह्यं वक्ष्यामि ते हितम् ॥ १ ॥ धौम्येन तु यथा प्रोक्तं पार्थाय सुमहात्मने। नाम्नामष्टोत्तरं पुण्यं शतं तच्छृणु भूपते ॥ २ ॥ सूर्योऽर्यमा भगस्त्वष्टा पूषार्कः सविता रविः। गभस्तिमानजः कालो मृत्युर्धाता प्रभाकरः ॥ ३ ॥ पृथिव्यापश्च तेजश्च खं वायुश्च परायणम्। सोमो बृहस्पतिः शुक्रो बुधोऽङ्गारक एव च ॥ ४ ॥ इंद्रो विवस्वान् दीप्तांशुः शुचिः शौरिः शनैश्चरः। ब्रह्मा विष्णुश्च रुद्रश्च स्कंदो वैश्रवणो यमः ॥ ५ ॥ वैद्युतो जाठरश्चाग्निरैंधनस्तेजसांपतिः। धर्मध्वजो वेदकर्ता वेदाङ्गो वेदवाहनः ॥ ६ ॥ कृतं त्रेता द्वापरश्च कलिः सर्वामराश्रयः। कला काष्ठा मुहूर्तश्च क्षपा यामस्तथा क्षणः ॥ ७ ॥ संवत्सरकरोऽश्वत्थः

कालचक्रो विभावसुः । पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः ॥ ८ ॥ कालाध्यक्षः प्रजाध्यक्षो विश्वकर्मा तमोनुदः । वरुणः सागरोंऽशश्च जीमूतो जीवनोऽरिहा ॥ ९ ॥ भूताश्रयो भूतपतिः सर्वलोकनमस्कृतः । स्रष्टा संवर्तको वह्निः सर्वस्यादिरलोलुपः ॥ १० ॥ अनंतः कपिलो भानुः कामदः सर्वतोमुखः । शयो विशालो वरदः सर्वधातुनिषेचिता ॥ ११ ॥ मनः सुपर्णो भूतादिः शीघ्रगः प्राणधारकः । धन्वंतरिर्धूमकेतुरादिदेवोऽदितेः सुतः ॥ १२ ॥ द्वादशात्मारविन्दाक्षः पिता माता पितामहः । स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ १३ ॥ देहकर्ता प्रशांतात्मा विश्वात्मा विश्वतोमुखः । चराचरात्मा सूक्ष्मात्मा मैत्रेण वपुषान्वितः ॥ १४ ॥ एतद्वै कीर्तनीयस्य सूर्यस्यामिततेजसः । नाम्नामष्टशतं पुण्यं प्रोक्तमेतत्स्वयंभुवा ॥१५॥ सुरगणपितृयक्षसेवितं ह्यसुरनिशाचरसिद्धवंदितम् । वरकनकहुताशनप्रभं प्रणिपतितोऽस्मि हिताय भास्करम् ॥ १६ ॥ सूर्योदये यः सुसमाहितः पठेत्स पुत्रदारान् धनरत्नसंचयान् । लभेत जातिस्मरतां नरः सदा धृतिं च मेधां च स विंदते पुमान् ॥ १७ ॥ इमं स्तवं देववरस्य यो नरः प्रकीर्तयेच्छुचिसुमनाः समाहितः । विमुच्यते शोकदवाग्निसागराल्लभेत कामान्मनसा यथेप्सितान् ॥ १८ ॥ इति श्रीमहाभारते सूर्याष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥

## ४१५. युधिष्ठिरकृतं सूर्यस्तोत्रम् ।

श्रीगणेशाय नमः ॥ त्वं भानो जगतश्चक्षुस्त्वमात्मा सर्वदेहिनाम् । त्वं योनिः सर्वभूतानां त्वमाचारः क्रियावताम् ॥ १ ॥ त्वं गतिः सर्वसांख्यानां योगिनां त्वं परायणम् । अनावृतार्गलद्वारं त्वं गतिस्त्वं मुमुक्षताम् ॥ २ ॥ त्वया संधार्यते लोकस्त्वया लोकः प्रकाश्यते ।

त्वया पवित्रीक्रियते निर्व्याजं पाल्यते त्वया ॥ ३ ॥ त्वामुपस्थाय काले तु ब्राह्मणा वेदपारगाः । स्वशाखाविहितैर्मंत्रैरर्चंत्यृषिगणार्चित ॥ ४ ॥ तव दिव्यं रथं यांतमनुयांति वरार्थिनः । सिद्धचारणगंधर्वा यक्षगुह्यकपन्नगाः ॥ ५ ॥ त्रयस्त्रिंशच्च वै देवास्तथा वैमानिका गणाः । सोपेंद्राः समहेंद्राश्च त्वामिष्ट्वा सिद्धिमागताः ॥ ६ ॥ उपयांत्यर्चयित्वा तु त्वां वै प्राप्तमनोरथाः । दिव्यमंदारमालाभिस्तूर्णं विद्याधरोत्तमाः ॥ ७ ॥ गुह्याः पितृगणाः सप्त ये दिव्या ये च मानुषाः । ते पूजयित्वा त्वामेव गच्छंत्याशु प्रधानताम् ॥ ८ ॥ वसवो मरुतो रुद्रा ये च साध्या मरीचिपाः । वालखिल्यादयः सिद्धाः श्रेष्ठत्वं प्राणिनां गताः ॥ ९ ॥ सब्रह्मकेषु लोकेषु सप्तस्वप्यखिलेषु च । न तद्भूतमहं मन्ये यदर्कादतिरिच्यते ॥ १० ॥ संति चान्यानि सत्त्वानि वीर्यवंति महांति च । न तु तेषां तथा दीप्तिः प्रभवो वा यथा तव ॥ ११ ॥ ज्योतींषि त्वयि सर्वाणि त्वं सर्वज्योतिषां पतिः । त्वयि सत्यं च सत्त्वं च सर्वे भावाश्च सात्त्विकाः ॥ १२ ॥ त्वत्तेजसा कृतं चक्रं सुनाभं विश्वकर्मणा । देवारीणां मदो येन नाशितः शार्ङ्गधन्वना ॥ १३ ॥ त्वमादायांशुभिस्तेजो निदाघे सर्वदेहिनाम् । सर्वौषधिरसानां च पुनर्वर्षासु मुंचसि ॥ १४ ॥ तपंत्यन्ये दहंत्यन्ये गर्जंत्यन्ये यथा घनाः । विद्योतंते प्रवर्षंति तव प्रावृषि रश्मयः ॥ १५ ॥ न तथा सुखयत्यग्निर्न प्रावारा न कम्बलाः । शीतवातार्दितं लोकं यथा तव मरीचयः ॥ १६ ॥ त्रयोदशद्वीपवतीं गोभिर्भासयसे महीम् । त्रयाणामपि लोकानां हितायैकः प्रवर्तसे ॥ १७ ॥ तव यद्युदयो न स्यादंधं जगदिदं भवेत् । न च धर्मार्थकामेषु प्रवर्तेरन्मनीषिणः ॥ १८ ॥ आधानपशुबंधेष्टिमंत्रयज्ञतपःक्रियाः ।

त्वत्प्रसादादवाप्यंते ब्रह्मक्षत्रविशां गणैः ॥ १९ ॥ यदहर्ब्रह्मणः प्रोक्तं सहस्रयुगसंमितम् । तस्य त्वनादिरंतश्च कालज्ञैः परिकीर्तितः ॥ २० ॥ मनूनां मनुपुत्राणां जगतोऽमानवस्य च । मन्वंतराणां सर्वेषामीश्वराणां त्वमीश्वरः ॥ २१ ॥ संहारकाले संप्राप्ते तव क्रोधविनिःसृतः । संवर्तकाग्निस्त्रैलोक्यं भस्मीकृत्यावतिष्ठते ॥ २२ ॥ त्वद्दीधितिसमुत्पन्ना नानावर्णा महाधनाः । सैरावताः साशनयः कुर्वंत्याभूतसंप्लवम् ॥ २३ ॥ कृत्वा द्वादशधात्मानं द्वादशादित्यतां गतः । संहृत्यैकार्णवं सर्वं त्वं शोषयसि रश्मिभिः ॥ २४ ॥ त्वामिंद्रमाहुस्त्वं रुद्रस्त्वं विष्णुस्त्वं प्रजापतिः । त्वमग्निस्त्वं मनः सूक्ष्मं प्रभुस्त्वं ब्रह्म शाश्वतम् ॥ २५ ॥ त्वं हंसः सविता भानुरंशुमाली वृषाकपिः । विवस्वान्मिहिरः पूषा मित्रो धर्मस्तथैव च ॥ २६ ॥ सहस्ररश्मिरादित्यस्तपनस्त्वं गवां पतिः । मार्तंडोऽर्को रविः सूर्यः शरण्यो दिनकृत्तथा ॥ २७ ॥ दिवाकरः सप्तसप्तिर्धामकेशी विरोचनः । आशुगामी तमोघ्नश्च हरिताश्वश्च कीर्त्यसे ॥ २८ ॥ सप्तम्यामथवा षष्ठ्यां भक्त्या पूजां करोति यः । अनिर्विण्णोऽनहंकारी तं लक्ष्मीर्भजते नरम् ॥ २९ ॥ न तेषामापदः संति नाधयो व्याधयस्तथा । ये तवानन्यमनसा कुर्वंत्यर्चनवंदनम् ॥ ३० ॥ सर्वरोगैर्विरहिताः सर्वपापविवर्जिताः । त्वद्भावभक्ताः सुखिनो भवंति चिरजीविनः ॥ ३१ ॥ त्वं ममापन्नकामस्य सर्वातिथ्यं चिकीर्षतः । अन्नमन्नपते दातुमभितः श्रद्धयार्हसि ॥ ३२ ॥ ये च तेऽनुचराः सर्वे पादोपांतं समाश्रिताः । माठरारुणदण्डाद्यास्तांस्तान्वंदेऽशनिक्षुभान् ॥ ३३ ॥ क्षुभया सहितो मैत्री याश्चान्या भूतमातरः । ताश्च सर्वा नमस्यामि पांतु मां शरणागतम् ॥ ३४ ॥ एवं स्तुतो

महाराज भास्करो लोकभावनः । ततो दिवाकरः प्रीतो दर्शयामास पाण्डवम् ॥ ३५ ॥ दीप्यमानः स्ववपुषा ज्वलन्निव हुताशनः । विवस्वानुवाच ॥ यत्तेऽभिलषितं किंचित्तत्त्वं सर्वमवाप्स्यसि ॥ ३६ ॥ अहमन्नं प्रदास्यामि सप्त पंच च ते समाः । गृह्णीष्व पिठरं ताम्रं मया दत्तं नराधिप ॥ ३७ ॥ यावद्वर्त्स्यति पांचाली पात्रेणानेन सुव्रत । फलमूलामिषं शाकं संस्कृतं यन्महानसे ॥ ३८ ॥ चतुर्विधं तदन्नाद्यमक्षय्यं ते भविष्यति । इतश्चतुर्दशे वर्षे भूयो राज्यमवाप्स्यसि । वैशंपायन उवाच ॥ एवमुक्त्वा तु भगवांस्तत्रैवांतरधीयत ॥ ३९ ॥ इमं स्तवं प्रयतमनाः समाधिना पठेदिहान्योऽपि वरं समर्थयन् । तत्तस्य दद्याच्च रविर्मनीषितं तदाप्नुयाद्यद्यपि तत्सुदुर्लभम् ॥ ४० ॥ यश्चेदं धारयेन्नित्यं शृणुयाद्वाप्यभीक्ष्णशः । पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ॥ ४१ ॥ विद्यार्थी लभते विद्यां पुरुषोऽप्यथ वा स्त्रियः । उभे संध्ये जपेन्नित्यं नारी वा पुरुषो यदि । आपदं प्राप्य मुच्येत बद्धो मुच्येत बंधनात् ॥ ४२ ॥ इति श्रीमहाभारतोक्तं युधिष्ठिरविरचितं सूर्यस्तोत्रं संपूर्णम् ॥

## ४१६. सूर्यशतकम् ।

श्रीगणेशाय नमः ॥ जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं रक्ताः सिक्ता इवौघैरुदयगिरितटीधातुधाराद्रवस्य । आयान्त्या तुल्यकालं कमलवनरुचेवारुणा वो विभूत्यै भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥ १ ॥ भक्तिप्रह्वाय दातुं मुकुलपुटकुटीकोटरक्रोडलीनां लक्ष्मीमाक्रष्टुकामा इव कमलवनोद्घाटनं कुर्वते ये । कालाकारान्धकाराननपतितजग-

१ सर्वरोगहरमिदं सटीकं शतकं काव्यमालायाः १९ तमपुष्पे प्रकाशितं वरीवर्ति.

त्साध्वसध्वंसकल्याः कल्याणं वः क्रियासुः किसलयरुचयस्ते करा भास्करस्य ॥ २ ॥ गर्भेष्वम्भोरुहाणां शिखरिषु च शिताग्रेषु तुल्यं पतन्तः प्रारम्भे वासरस्य व्युपरतिसमये चैकरूपास्तथैव । निष्पर्यायं प्रवृत्तास्त्रिभुवनभवनप्राङ्गणे पान्तु युष्मानूष्माणं संतताध्वश्रमजमिव भृशं बिभ्रतो ब्रध्नपादाः ॥ ३ ॥ प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन्प्राग्जन्तूंस्तन्तून्यथा यानतनु वितनुते तिग्मरोचिर्मरीचीन् । ते सान्द्रीभूय सद्यः क्रमविशददशाशादशालीविशालं शश्वत्संपादयन्तोऽम्बरममलमलं मङ्गलं वो दिशन्तु ॥ ४ ॥ न्यक्कुर्वन्नोषधीशे मुषितरुचि शुचेवौषधीः प्रोषिताभा भास्वद्ग्रावोद्गतेन प्रथममिव कृताभ्युद्गतिः पावकेन । पक्षच्छेदव्रणासृक्स्रुत इव दृषदो दर्शयन्प्रातरद्रेराताम्रस्तीव्रभानोरनभिमतनुदे स्ताद्गभस्त्युद्गमो वः ॥ ५ ॥ शीर्णघ्राणाङ्घ्रिपाणीन्व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन्यः । घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्तेर्दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥ ६ ॥ बिभ्राणा वामनत्वं प्रथममथ तथैवांशवः प्रांशवो वः क्रान्ताकाशान्तरालास्तदनु दश दिशः पूरयन्तस्ततोऽपि । ध्वान्तादाच्छिद्य देवद्विष इव बलितो विश्वमाश्वश्नुवानाः कृच्छ्राण्युच्छ्रायहेलोपहसितहरयो हारिदश्वा हरन्तु ॥ ७ ॥ उद्गाढेनारुणिम्ना विदधति बहुलं येऽरुणस्यारुणत्वं मूर्धोद्धूतौ खलीनक्षतरुधिररुचो ये रथाश्वाननेषु । शैलानां शेखरत्वं श्रितशिखरिशिखास्तन्वते ये दिशन्तु प्रेङ्खन्तः खे खरांशोः खचितदिनमुखास्ते मयूखाः सुखं वः ॥ ८ ॥ दत्तानन्दाः प्रजानां समुचितसमयाकृष्टसृष्टैः पयोभिः पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः । दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्व-

दुत्तारनावो गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥ ९ ॥ बन्धध्वंसैकहेतुं शिरसि नतिरसाबद्धसंध्याञ्जलीनां लोकानां ये प्रबोधं विदधति विपुलाम्भोजखण्डाशयेव । युष्माकं ते स्वचित्त-प्रथितपृथुतरप्रार्थनाकल्पवृक्षाः कल्पन्तां निर्विकल्पं दिनकरकिरणाः केतवः कल्मषस्य ॥ १० ॥ धारा रायो धनायापदि सपदि करालम्ब-भूताः प्रपाते तत्त्वालोकैकदीपास्त्रिदशपतिपुरप्रस्थितौ वीथ्य एव । निर्वाणोद्योगियोगिप्रगमनिजतनुद्वारि वेत्रायमाणास्त्रायन्तां तीव्र-भानोर्दिवसमुखसुखा रश्मयः कल्मषाद्वः ॥ ११ ॥ प्राचि प्रागा-चरन्त्योऽनतिचिरमचले चारुचूडामणित्वं मुञ्चन्त्यो रोचनाम्भः प्रचुर-मिव दिशामुच्चकैश्चर्चनाय । चाटूत्कैश्चक्रनाम्नां चतुरमविचलैर्लोच-नैरर्च्यमानाश्चेष्टन्तां चिन्तितानामुचितमचरमाश्चण्डरोचीरुचो वः ॥ १२ ॥ एकं ज्योतिर्दृशौ द्वे त्रिजगति गदितान्यब्जजास्यैश्चतुर्भि-र्भूतानां पञ्चमं यान्यलमृतुषु तथा षट्सु नानाविधानि । युष्माकं तानि सप्तत्रिदशमुनिनुतान्यष्टदिग्भाञ्जि भानोर्यान्ति प्राह्णे नवत्वं दश दधतु शिवं दीधितीनां शतानि ॥ १३ ॥ आवृत्तिभ्रान्त-विश्वाः श्रममिव दधतः शोषिणः स्वोष्मणेव ग्रीष्मे दावाग्नितप्ता इव रसमसकृद्ये धरित्र्या धयन्ति । ते प्रावृष्यात्तपानातिशयरुज इवोद्वान्ततोया हिमर्तौ मार्तण्डस्याप्रचण्डाश्चिरमशुभभिदेऽभीशवो वो भवन्तु ॥ १४ ॥ तन्वाना दिग्वधूनां समधिकमधुरालोक-रम्यामवस्थामारूढप्रौढिलेशोत्कलितकपिलिमालंकृतिः केवलैव । उज्जृम्भाम्भोजनेत्रद्युतिनि दिनमुखे किंचिदुद्भिद्यमाना श्मश्रुश्रेणीव भासां दिशतु दशशती शर्म घर्मत्विषो वः ॥ १५ ॥ मौलीन्दो-र्मैष मोषीद्द्युतिमिति वृषभाङ्केन यः शङ्किनेव प्रत्यग्रोद्घाटिताम्भो-रुहकुहरगुहासुस्थितेनेव धात्रा । कृष्णेन ध्वान्तकृष्णस्वतनुपरि-

भवन्नस्नुनेव स्तुतोऽलं त्राणाय स्तात्तनीयानपि तिमिररिपोः स त्विषामुद्गमो वः ॥ १६ ॥ विस्तीर्णं व्योम दीर्घाः सपदि दश दिशो व्यस्तवेलाम्भसोऽब्धीन्कुर्वद्भिर्दृश्यनानानगनगरनगाभोगपृथ्वीं च पृथ्वीम् । पद्मिन्युच्छ्वास्यते यैरुषसि जगदपि ध्वंसयित्वा तमिस्रामुस्रा विस्रंसयन्तु द्रुतमनभिमतं ते सहस्रत्विषो वः ॥ १७ ॥ अस्तव्यस्तत्वशून्यो निजरुचिरनिशानश्वरः कर्तुमीशो विश्वं वेश्मेव दीपः प्रतिहततिमिरं यः प्रदेशस्थितोऽपि । दिक्कालापेक्षयासौ त्रिभुवनमटतस्तिग्मभानोर्नवाख्यां यातः शातक्रतव्यां दिशि दिशतु शिवं सोऽर्चिषामुद्गमो वः ॥ १८ ॥ मा गान्म्लानिं मृणालीमृदुरिति दययेवाप्रविष्टोऽहिलोकं लोकालोकस्य पार्श्वं प्रतपति न परं यस्तदाख्यार्थमेव । ऊर्ध्वं ब्रह्माण्डखण्डस्फुटनभयपरित्यक्तदैर्घ्यो द्युसीम्नि स्वेच्छावश्यावकाशावधिरवतु स वस्तापनो रोचिरोघः ॥ १९ ॥ अश्यामः काल एको न भवति भुवनान्तोऽपि वीतेऽन्धकारे सद्यः प्रालेयपादो न विलयमचलश्चन्द्रमा अप्युपैति । बन्धः सिद्धाञ्जलीनां न हि कुमुदवनस्यापि यत्रोज्जिहाने तत्प्रातः प्रेक्षणीयं दिशतु दिनपतेर्धाम कामाधिकं वः ॥ २० ॥ यत्कान्तिं पङ्कजानां न हरति कुरुते प्रत्युताधिक्यरम्यां नो धत्ते तारकाभां तिरयति नितरामाशु यन्नित्यमेव । कर्तुं नालं निमेषं दिवसमपि परं यत्तदेकं त्रिलोक्याश्चक्षुः सामान्यचक्षुर्विसदृशमघभिद्भास्वतस्तान्महो वः ॥ २१ ॥ क्ष्मां क्षेपीयः क्षमाम्भः शिशिरतरजलस्पर्शतर्षादृतेव द्रागाशा नेतुमाशाद्विरदकरसरःपुष्कराणीव बोधम् । प्रातः प्रोल्लङ्घ्य विष्णोः पदमपि घृणयेवातिवेगाद्दवीयस्युद्दामं द्योतमाना दहतु दिनपतेर्दुर्निमित्तं द्युतिर्वः ॥ २२ ॥ नो कल्पापायवायोरदयरयदलत्क्ष्माधरस्यापि गम्या गाढोद्गीर्णोज्ज्वलश्रीरहनि न रहिता नो तमःकज्जलेन ।

प्राप्तोत्पत्तिः पतङ्गान्न पुनरुपगता मोषमुष्णत्विषो वो वर्तिः सैवान्यरूपा सुखयतु निखिलद्वीपदीपस्य दीप्तिः ॥ २३ ॥ निःशेषाशावपूरप्रवणगुरुगुणश्लाघनीयस्वरूपा पर्याप्तं नोदयादौ दिनगमसमयोपप्लवेऽप्युन्नतैव । अत्यन्तं यानभिज्ञा क्षणमपि तमसा साकमेकत्र वस्तुं ब्रध्नस्येद्धा रुचिर्वो रुचिरिव रुचितस्याप्तये वस्तुनोऽस्तु ॥ २४ ॥ बिभ्राणः शक्तिमाशु प्रशमितबलवत्तारकौर्जित्यगुर्वीं कुर्वाणो लीलयाधः शिखिनमपि लसच्चन्द्रकान्तावभासम् । आदध्यादन्धकारे रतिमतिशयिनीमावहन्वीक्षणानां बालो लक्ष्मीमपारामपर इव गुहोऽहर्पतेशतपो वः ॥ २५ ॥ ज्योत्स्नांशाकर्षपाण्डुद्युति तिमिरमषीशेषकल्माषमीषज्जृम्भोद्भूतेन पिङ्गं सरसिजरजसा संध्यया शोणशोचिः । प्रातः प्रारम्भकाले सकलमपि जगच्चित्रमुन्मीलयन्ती कान्तिस्तीक्ष्णत्विषोऽक्ष्णां मुदमुपनयतात्तूलिकेवातुलां वः ॥ २६ ॥ आयान्ती किं सुमेरोः सरणिररुणिता पाद्मरागैः परागैराहोस्वित्स्वस्य माहारजनविरचिता वैजयन्ती रथस्य । माञ्जिष्ठी प्रष्ठवाहावलिविधुतशिरश्चामराली नु लोकैराशङ्क्यालोकितैवं सवितुरघनुदे स्तात्प्रभातप्रभावः ॥ २७ ॥ ध्वान्तध्वंसं विधत्ते न तपति रुचिमन्नातिरूपं व्यनक्ति न्यक्त्वं नीत्वापि नक्तं न वितरतितरां तावदह्नस्त्विषं यः । स प्रातर्मा विरंसीदसकलपटिमा पूरयन्युष्मदाशामाशाकाशावकाशावतरणतरुणप्रक्रमोऽर्कप्रकाशः ॥ २८ ॥ तीव्रं निर्वाणहेतुर्यदपि च विपुलं यत्प्रकर्षेण चाणु प्रत्यक्षं यत्परोक्षं यदिह यदपरं नश्वरं शाश्वतं च । यत्सर्वस्य प्रसिद्धं जगति कतिपये योगिनो यद्विदन्ति ज्योतिस्तद्विप्रकारं सवितुरवतु वो बाह्यमाभ्यन्तरं च ॥ २९ ॥ रत्नानां मण्डनाय प्रभवति नियतोद्देशलब्धावकाशं वह्नेर्दार्वादि दग्धुं निजजडिमतया कर्तुमानन्दमिन्दोः ।

यच्च त्रैलोक्यभूषाविधिरघदहनं ह्लादि वृष्ट्याशु तद्वो बाहुल्योत्पाद्यकार्याधिकतरमवतादेकमेवार्कतेजः ॥ ३० ॥ मीलच्चक्षुर्विजिह्मश्रुति जडरसनं निघ्नितघ्राणवृत्ति स्वव्यापाराक्षमत्वक्परिमुषितमनः श्वासमात्रावशेषम् । विस्रस्ताङ्गं पतित्वा स्वपदपहरतादश्रियं वोऽर्कजन्मा कालव्यालावलीढं जगदगद इवोत्थापयन्प्राक्प्रतापः ॥ ३१ ॥ निःशेषं नैशमम्भः प्रसभमपनुदन्नश्रुलेशानुकारि स्तोकस्तोकापनीतारुणरुचिरचिरादस्तदोषानुषङ्गः । दाता दृष्टिं प्रसन्नां त्रिभुवननयनस्याशु युष्मद्विरुद्धं वध्यादव्रस्य सिद्धाञ्जनविधिरपरः प्राक्तनोऽर्चिःप्रचारः ॥ ३२ ॥ भूत्वा जम्भस्य भेत्तुः ककुभि परिभवारम्भभूः शुभ्रभानोर्बिभ्राणा बभ्रुभावं प्रसभमभिनवाम्भोजजृम्भाप्रगल्भा । भूषा भूयिष्ठशोभा त्रिभुवनभवनस्यास्य वैभाकरी प्राग्विभ्रान्ति भ्राजमाना विभवतु विभवोद्भूतये सा विभा वः ॥ ३३ ॥ संसक्तं सिक्तमूलादभिनवभुवनोद्यानकौतूहलिन्या यामिन्या कन्ययेवामृतकरकलशावर्जितेनामृतेन । अर्कालोकः क्रियाद्वो मुदमुदयशिरश्चक्रवालालवालादुद्यन् बालप्रवालप्रतिमरुचिरहः पादपप्राक्प्ररोहः ॥ ३४ ॥ भिन्नं भासारुणस्य क्वचिदभिनवया विद्रुमाणां त्विषेव त्वङ्गन्नक्षत्ररत्नद्युतिनिकरकरालान्तरालं क्वचिच्च । नान्तर्निःशेषकृष्णश्रियमुदधिमिव ध्वान्तराशिं पिबन्स्तादौर्वः पूर्वोऽप्यपूर्वोऽग्निरिव भवदवप्लुष्टयेऽर्कावभासः ॥ ३५ ॥ गन्धर्वैर्गद्यपद्यव्यतिकरितवचोहृद्यमातोद्यवाद्यैराद्यैर्यो नारदाद्यैर्मुनिभिरभिनुतो वेदवेद्यैर्विभिद्य । आसाद्यापद्यते यं पुनरपि च जगद्यौवनं सद्य उद्यन्नुद्योतो द्योतितद्यौर्द्यतु दिवसकृतोऽसाववद्यानि वोऽद्य ॥ ३६ ॥ आवानैश्चन्द्रकान्तैश्च्युततिमिरतया तानवत्तारकाणामेणाङ्कालोकलोपादुपहतमहसामोषधीनां

लयेन । आरादुत्प्रेक्ष्यमाणा क्षणमुदयतटान्तर्हितस्याहिमांशोराभा
प्राभातिकी वोऽवतु न तु नितरां तावदाविर्भवन्ती ॥ ३७ ॥ सानौ
सा नौदये नारुणितदलपुनर्यौवनानां वनानामालीमालीढपूर्वा
परिहृतकुहरोपान्तनिम्ना तनिम्ना । भा वोऽभावोपशान्तिं दिशतु
दिनपतेर्भासमाना समाना राजी राजीवरेणोः समसमयमुदेतीव
यस्या वयस्या ॥ ३८ ॥ उज्जृम्भाम्भोरुहाणां प्रभवति पयसां या
श्रियै नोष्णतायै पुष्णात्यालोकमात्रं न तु दिशति दृशां दृश्यमाना
विघातम् । पूर्वाद्रेरेव पूर्वं दिवमनु च पुनः पावनी दिङ्मुखाना-
मेनांस्यैनी विभासौ नुदतु नुतिपदैकास्पदं प्राक्तनी वः ॥ ३९ ॥
वाचां वाचस्पतेरप्यचलभिदुचिताचार्यकाणां प्रपञ्चैर्वैरञ्चानां तथो-
च्चारितचतुरऋचां चाननानां चतुर्णाम् । उच्येतार्चासु वाच्यच्युति-
शुचि चरितं तस्य नोच्चैर्विविच्य प्राच्यं वर्चश्चकासच्चिरमुपचिनु-
तात्तस्य चण्डार्चिषो वः ॥ ४० ॥ मूर्ध्न्यद्रेर्धातुरागस्तरुषु किसलयो
विद्रुमौघः समुद्रे दिङ्मातङ्गोत्तमाङ्गेष्वभिनवविहितः सान्द्र-
सिन्दूररेणुः । सीम्नि व्योम्नश्च हेम्नः सुरशिखरिभुवो जायते यः
प्रकाशः शोणिम्नासौ खरांशोरुषसि दिशतु वः शर्म शोभैकदेशः
॥ ४१ ॥ अस्ताद्रीशोत्तमाङ्गे श्रितशशिनि तमःकालकूटे निपीते
याति व्यक्तिं पुरस्तादरुणकिसलये प्रत्युषःपारिजाते । उद्यन्त्यारक्त-
पीताम्बरविशदतरोद्वीक्षिता तीक्ष्णभानोर्लक्ष्मीर्लक्ष्मीरिवास्तु स्फुट-
कमलपुटापाश्रया श्रेयसे वः ॥ ४२ ॥ नोदन्वाञ्जन्मभूमिर्न तदु-
दरभुवो बान्धवाः कौस्तुभाद्या यस्याः पद्मं न पाणौ न च नरक-
रिपूरःस्थली वासवेश्म । तेजोरूपापरैव त्रिषु भुवनतलेष्वादधाना
व्यवस्थां सा श्रीः श्रेयांसि दिश्यादशिशिरमहसो मण्डलाग्रोद्गता
वः ॥ ४३ ॥ रक्षन्त्वक्षुण्णहेमोपलपटलमलं लाघवादुत्पतन्तः

पातङ्गाः पङ्गवज्ञाजितपवनजवा वाजिनस्ते जगन्ति । येषां
वीतान्यचिह्नोन्नयमपि वहतां मार्गमाख्याति मेरावुद्यन्नुद्दामदीप्ति-
र्द्युमणिमणिशिलावेदिकाजातवेदाः ॥ ४४ ॥ प्लुष्टाः पृष्ठेऽशुपातै-
रतिनिकटतया दत्तदाहातिरेकैरेकाहाक्रान्तकृत्स्नत्रिदिवपथपृथुश्वास-
शोषाः श्रमेण । तीव्रोदन्यास्त्वरन्तामहितविहतये सप्तयः सप्त-
सप्तेरभ्याशकाशगङ्गाजलसरलगलावाङ्नताग्राननना वः ॥ ४५ ॥
मत्वान्यान्पार्श्वतोऽश्वान्स्फटिकतटदृषद्दृष्टदेहा द्रवन्ती व्यस्तेऽहन्यस्त-
संध्येयमिति मृदुपदा पद्मरागोपलेषु । सादृश्यादृश्यमूर्तिर्मरकत-
कटके क्लिष्टसूता समेरोर्मूर्धन्यावृत्तिलब्धध्रुवगतिरवतु ब्रध्नवाहा-
वलिर्वः ॥ ४६ ॥ हेलालोलं वहंती विषधरदमनस्याग्रजेनावकृष्टा
स्त्वर्वाहिन्याः सुदूरं जनितजवजया स्यन्दनस्य स्यदेन । निर्व्याजं
तायमाने हरितिमनि निजे स्फीतफेनाहितश्रीरश्रेयांस्यश्वपङ्क्तिः
शमयतु यमुनेवापरा तापनी वः ॥ ४७ ॥ मार्गोपान्ते सुमेरोर्नुवति
कृतनतौ नाकधाम्नां निकाये वीक्ष्य व्रीडानतानां प्रतिकुहरमुखं
किंनरीणां मुखानि । सूतेऽसूयत्यपीषज्जडगति वहतां कंधराधैर्वल-
द्भिर्वाहानां व्यस्यताद्वः सममसमहरेर्हेषितं कल्मषाणि ॥ ४८ ॥
धुन्वन्तो नीरदालीर्निजरुचिहरिताः पार्श्वयोः पक्षतुल्यास्ताल-
त्तानैः खलीनैः खचितमुखरुचश्च्योतता लोहितेन । उड्डीयेव
व्रजन्तो वियति गतिवशादर्कवाहाः क्रियासुः क्षेमं हेमाद्रिहृद्य-
द्रुमशिखरशिरःश्रेणिशाखाशुका वः ॥ ४९ ॥ प्रातःशैलाग्ररङ्गे
रजनिजवनिकापायसंलक्ष्यलक्ष्मीर्विक्षिप्यापूर्वपुष्पाञ्जलिमुडुनिकरं सूत्र-
धारायमाणः । यामेष्वङ्केष्विवाह्नः कृतरुचिषु चतुर्ष्वेव जात-
प्रतिष्ठामव्यात्प्रस्तावयन्वो जगदटनमहानाटिकां सूर्यसूतः ॥ ५० ॥
आक्रान्त्या वाह्यमानं पशुमिव हरिणा वाहकोऽग्र्यो हरीण

भ्राम्यन्तं पक्षपाताज्जगति समरुचिः सर्वकर्मैकसाक्षी । शत्रुं नेत्रश्रुतीनामवजयति वयोज्येष्ठभावे समेऽपि स्थाम्नां धाम्नां निधिर्यः स भवदघनुदे नूतनः स्तादनूरुः ॥ ५१ ॥ दत्तार्घैर्दूरनम्रैर्वियति विनयतो वीक्षितः सिद्धसार्थैः सानाथ्यं सारथिर्वः स दशशतरुचेः सातिरेकं करोतु । आपीय प्रातरेव प्रततहिमपयःस्यन्दिनीरिन्दुभासो यः काष्ठादीपनोऽग्रे जडित इव भृशं सेवते पृष्ठतोऽर्कम् ॥ ५२ ॥ मुञ्चन्रश्मीन्दिनादौ दिनगमसमये संहरंश्च स्वतन्त्रस्तोत्रप्रख्यातवीर्यो-ऽविरतहरिपदाक्रान्तिबद्धाभियोगः । कालोत्कर्षाल्लघुत्वं प्रसभमधि-पतौ योजयन्यो द्विजानां सेवाप्रीतेन पूष्णात्मसम इव कृतस्त्रायतां सोऽरुणो वः ॥ ५३ ॥ शातः श्यामालतायाः परशुरिव तमोऽरण्य-वह्नेरिवार्चिः प्राच्येवाग्रे ग्रहीतुं ग्रहकुमुदवनं प्रागुदस्तोऽग्रहस्तः । ऐक्यं भिन्दन्द्युभूम्योरवधिरिव विधातेव विश्वप्रबोधं वाहानां वो विनेता व्यपनयतु विपन्नाम धामाधिपस्य ॥ ५४ ॥ पौरस्त्यस्तोयदर्तोः पवन इव पतत्पावकस्येव धूमो विश्वस्येवादिसर्गः प्रणव इव परं पावनो वेदराशेः । संध्यानृत्योत्सवेच्छोरिव मदनरिपोर्नन्दिनान्दी-निनादः सौरस्याग्रे सुखं वो वितरतु विनतानन्दनः स्यन्दनस्य ॥ ५५ ॥ पर्याप्तं तप्तचामीकरकटकतटे श्लिष्टशीतेतरांशावासीदत्स्यन्दना-श्वानुकृतिमरकते पद्मरागायमाणः । यः सोत्कर्षां विभूषां कुरुत इव कुलक्ष्माभृदीशस्य मेरोरेनांस्यह्नाय दूरं गमयतु स गुरुः काद्रवेय-द्विषो वः ॥ ५६ ॥ नीत्वाऽश्वान्सप्त कक्षा इव नियमवशं वेत्रक-ल्पप्रतोदस्तूर्णं ध्वान्तस्य राशावितरजन इवोत्सारिते दूरभाजि । पूर्वं प्रष्ठो रथस्य क्षितिभृदधिपतीन्दर्शयंस्त्रायतां वस्त्रैलोक्यास्थान-दानोद्यतदिवसपतेः प्राक्प्रतीहारपालः ॥ ५७ ॥ वज्रिञ्ज्ञातं विकासी-क्षणकमलवनं भासि नाभासि वह्ने तातं नत्वाश्वपार्श्वान्नय यम

महिषं राक्षसा वीक्षिताः स्थ। ससीन्सिञ्च प्रचेतः पवन भज जवं वित्तपावेदितस्त्वं वन्दे शर्वेति जल्पन्प्रतिदिशमधिपान्पातु पूष्णोऽग्रणीर्वः ॥ ५८ ॥ पाशानाशान्तपालादरुण वरुणतो मा ग्रहीः प्रग्रहार्थं तृष्णां कृष्णस्य चक्रे जहिहि नहि रथो याति मे नैकचक्रः। योक्तुं युग्यं किमुच्चैःश्रवसमभिलषस्यष्टमं वृत्रशत्रोस्त्यक्तान्यापेक्ष-विश्वोपकृतिरिति रविः शास्ति यं सोऽवताद्वः ॥ ५९ ॥ नो मूर्च्छा-च्छिन्नवाञ्छः श्रमविवशवपुर्नैव नाप्यास्यशोषी पान्थः पथ्येतराणि क्षपयतु भवतां भास्वतोऽग्रेसरः सः। यः संश्रित्य त्रिलोकीमटति पटुतरैस्ताप्यमानो मयूखैरारादारामलेखामिव हरितमणिश्यामलामश्वपङ्क्तिम् ॥ ६० ॥ सीदन्तोऽन्तर्निमज्जज्जडखुरमुसलाः सैकते नाकनद्याः स्कन्दन्तः कंदरालीः कनकशिखरिणो मेखलासु स्खलन्तः। दूरं दूर्वास्थलोत्का मरकतदृषदि स्थास्नवो यत्र याताः पूष्णोऽश्वाः पूरयंस्तैस्तदवतु जवनैर्हुंकृतेनाग्रगो वः ॥ ६१ ॥ पीनोरःप्रेरिताभ्रैश्चरमखुरपुटाग्रस्थितैः प्रातरश्वैर्वादीर्घाङ्गैरुदस्तो हरिभिरपगतासङ्गनिःशब्दचक्रः। उत्तानानूरुमूर्धावनतिहठभवद्विप्रतीपप्रणामः प्राह्णे श्रेयो विधत्तां सवितुरवतरन्व्योमवीथीं रथो वः ॥ ६२ ॥ ध्वान्तौघध्वंसदीक्षाविधिपटु वहता प्राक्सहस्रं कराणामर्यम्णा यो गरिम्णः पदमतुलमुपानीयताध्यासनेन। स श्रान्तानां नितान्तं भरमिव मरुतामक्षमाणां विसोढुं स्कन्धात्स्कन्धं व्रजन्वो वृजिनविजितये भास्वतः स्यन्दनोऽस्तु ॥ ६३ ॥ योक्त्रीभूतान्युगस्य ग्रसितुमिव पुरो दन्दशूकान्दधानो द्वेधाव्यस्ताम्बुवाहावलिविहित-बृहत्पक्षविक्षेपशोभः। सावित्रः स्यन्दनोऽसौ निरतिशयरयप्रीणितानूरुरेनःक्षेपीयो वो गरुत्मानिव हरतु हरीच्छाविधेयप्रचारः ॥ ६४ ॥ एकाहेनैव दीर्घां त्रिभुवनपदवीं लङ्घयन् यो लघिष्ठः पृष्ठे मेरोर्गरी-

यान्दलितमणिदृषद्विंषि पिंषन् शिरांसि । सर्वस्यैवोपरिष्टादथ च पुनरधस्तादिवास्ताद्रिमूर्ध्नि व्यक्तस्याव्यात्स एवं दुरधिगमपरिस्पन्दनः स्यन्दनो वः ॥ ६५ ॥ धूर्ध्वस्ताग्र्यग्रहाणि ध्वजपटपवनान्दोलितेन्दूनि दूरं राहौ ग्रासाभिलाषादनुसरति पुनर्दत्तचक्रव्यथानि । श्रान्ताश्वश्वासहेलाधुतविबुधधुनीनिर्झराम्भांसि भद्रं देयासुर्वो दवीयो दिवि दिवसपतेः स्यन्दनप्रस्थितानि ॥ ६६ ॥ अक्षे रक्षां निबध्य प्रतिसरवलयैर्योजयन्त्यो युगाग्रं धूःस्तम्भे दग्धधूपाः प्रहितसुमनसो गोचरे कूबरस्य । चर्चाश्चक्रे चरन्त्यो मलयजपयसा सिद्धवध्वस्त्रिसंध्यं वन्दन्ते यं द्युमार्गे स नुदतु दुरितान्यंशुमत्स्यन्दनो वः ॥ ६७ ॥ उत्कीर्णस्वर्णरेणुद्रुतखुरदलिता पार्श्वयोः शश्वदश्वैरश्रान्तभ्रान्तचक्रक्रमनिखिलमिलन्नेमिनिम्ना भरेण । मेरोर्मूर्धन्यघं वो विघटयतु रवेरेकवीथी रथस्य स्वोष्मोदक्ताम्बुरिक्तप्रकटितपुलिनोद्धूसरा स्वर्धुनीव ॥ ६८ ॥ नन्तुं नाकालयानामनिशमनुयतां पद्धतिः पङ्क्तिरेव क्षोदो नक्षत्रराशेरुदयरयमिलच्चक्रपिष्टस्य धूलिः । हेषाह्लादो हरीणां सुरशिखरिदरीः पूरयन्नेमिनादो यस्याव्यात्तीव्रभानोः स दिवि भुवि यथा व्यक्तचिह्नोरथो वः ॥ ६९ ॥ निःस्पन्दानां विमानावलिविततदिवां देववृन्दारकाणां वृन्दैरानन्दसान्द्रोद्यममपि वहतां विन्दतां वन्दितुं नो । मन्दाकिन्याममन्दः पुलिनभृति मृदुर्मन्दरे मन्दिराभे मन्दारैर्मण्डितारं दधदरि दिनकृत्स्यन्दनः स्तान्मुदे वः ॥ ७० ॥ चक्री चक्रारपङ्क्तिं हरिरपि च हरीन्धूर्जटिर्धूर्ध्वजान्तानक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः । रंहः संघः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ॥ ७१ ॥ नेत्राहीनेन मूले विहितपरिकरः सिद्धसाध्यैर्मरुद्भिः पादोपान्ते स्तुतोऽलं बलिहरिरभसा कर्षणा-

बद्धवेगः । भ्राम्यन्व्योमाम्बुराशावशिशिरकिरणस्यन्दनः संततं वो दिश्याल्लक्ष्मीमपारामतुलितमहिमेवापरो मन्दराद्रिः ॥ ७२ ॥ यज्ज्यायो बीजमह्नामपहततिमिरं चक्षुषामञ्जनं यद्द्वारं यन्मुक्तिभाजां यदखिलभुवनज्योतिषामेकमोकः । यद्वृष्ट्यम्भोनिधानं धरणिरससुधापानपात्रं महद्यद्दिश्यादीशस्य भासां तदविकलमलं मङ्गलं मण्डलं वः ॥ ७३ ॥ वेलावर्धिष्णु सिन्धोः पय इव खमित्रार्घोद्गताग्र्यग्रहोडु स्तोकोद्भिन्नस्य चिह्नप्रसवमिव मधोरास्यमस्यन्मनांसि । प्रातः पूष्णोऽशुभानि प्रशमयतु शिरःशेखरीभूतमद्रेः पौरस्त्यस्योद्गभस्तिस्तिमिततमतमःखण्डलं मण्डलं वः ॥ ७४ ॥ प्रत्युप्तस्तप्तहेमोज्ज्वलरुचिरचलः पद्मरागेण येन ज्यायः किंजल्कपुञ्जो यदलिकुलशितेरम्बरेन्दीवरस्य । कालव्यालस्य चिह्नं महिततममहोमूर्ध्नि रत्नं महद्यद्दीप्तांशोः प्रातरव्यात्तदविकलजगन्मण्डनं मण्डलं वः ॥ ७५ ॥ कस्नाता तारकाणां पतति तनुरवश्यायबिन्दुर्यथेन्दुर्विद्राणा दृक्स्मरारेरुरसि मुररिपोः कौस्तुभो नोद्गभस्तिः । वह्नेः सापह्नवेव द्युतिरुदयगते यत्र तन्मण्डलं वो मार्तण्डीयं पुनीताद्दिवि भुवि च तमांसीव मुष्णन्महांसि ॥ ७६ ॥ यत्प्राच्यां प्राक्चकास्ति प्रभवति च यतः प्राच्यसावुज्जिहानाद्दिद्धं मध्ये यदह्नो भवति ततरुचा येन चोत्पाद्यतेऽहः । यत्पर्यायेण लोकानवति च जगतां जीवितं यच्च तद्वो विश्वानुग्राहि विश्वं सृजदपि च रवेर्मण्डलं मुक्तयेऽस्तु ॥ ७७ ॥ शुष्यन्त्यूढानुकारा मकरवसतयो मारवीणां स्थलीनां येनोत्तप्ताः स्फुटन्तस्तडिति तिलतुलां यान्त्यगेन्द्रा युगान्ते । तच्चण्डांशोरकाण्डत्रिभुवनदहनाशङ्कया धाम कृच्छ्रात्संहृत्यालोकमात्रं प्रलघु विदधतः स्तान्मुदे

मण्डलं वः ॥ ७८ ॥ उद्यद्द्यूद्यानवाप्यां बहुलतमतमःपङ्कपूरं विदार्य प्रोद्भिन्नं पत्रपार्श्वेष्वविरलमरुणच्छायया विस्फुरन्त्या । कल्याणानि क्रियाद्वः कमलमिव महन्मण्डलं चण्डभानोरन्वीतं तृप्तिहेतोरसकृदलिकुलाकारिणा राहुणा यत् ॥ ७९ ॥ चक्षुर्दक्षद्विषो यन्न तु दहति पुरः पूरयत्येव कामं नास्तं जुष्टं मरुद्भिर्यदिह नियमिनां यानपात्रं भवाब्धौ । यद्वीतश्रान्ति शश्वद्भ्रमदपि जगतां भ्रान्तिमभ्रान्ति ब्रह्मस्याव्याद्विरुद्धक्रियमथ च हिताधायि तन्मण्डलं वः ॥ ८० ॥ सिद्धैः सिद्धान्तमिश्रं श्रितविधि विबुधैश्चारणैश्चाटुगर्भं गीत्या गन्धर्वमुख्यैर्मुहुरहिपतिभिर्यातुधानैर्यतात्म । सार्धं साध्यैर्मुनीन्द्रैर्मुदिततममनो मोक्षिभिः पक्षपातात्प्रातः प्रारभ्यमाणस्तुतिरवतु रविर्विश्ववन्द्योदयो वः ॥ ८१ ॥ भासामासन्नभावादधिकतरपटोश्चक्रवालस्य तापाच्छेदादच्छिन्नगच्छत्तुरगखुरपुटन्यासनिःशङ्कटङ्कैः । निःसङ्गस्यन्दनाङ्गभ्रमणनिकषणात्पातु वह्निप्रकारं तप्तांशुस्तत्परीक्षापर इव परितः पर्यटन्हाटकाद्रिम् ॥ ८२ ॥ नो शुष्कं नाकनद्या विकसितकनकाम्भोजया भ्राजितं तु प्लुष्टा नैवोपभोग्या भवति भृशतरं नन्दनोद्यानलक्ष्मीः । नो श्रृङ्गाणि द्रुतानि द्रुतममरगिरेः कालधौतानि धौतानीद्धं धाम द्युमार्गे म्रदयति दयया यत्र सोऽर्कोऽवताद्वः ॥ ८३ ॥ ध्वान्तस्यैवान्तहेतुर्न भवति मलिनैकात्मनः पाप्मनोऽपि प्राक्पादोपान्तभाजां जनयति न परं पङ्कजानां प्रबोधम् । कर्ता निःश्रेयसानामपि न तु खलु यः केवलं वासराणां सोऽव्यादेकोद्यमेच्छाविहितबहुबृहद्विश्वकार्योऽर्यमा वः ॥ ८४ ॥ लोटँल्लोष्टाविचेष्टः श्रितशयनतलो निःसहीभूतदेहः संदेही प्राणितव्ये सपदि दश दिशः प्रेक्षमाणोऽन्धकाराः । निःश्वासायासनिष्ठः परमपरवशो जायते जीवलोकः शोकेनेवान्यलोकानुदयकृति गते यत्र सोऽर्कोऽवताद्वः ॥ ८५ ॥

क्रामँल्लोलोऽपि लोकाँस्तदुपकृतिकृतावाश्रितः स्थैर्यकोटिं नृणां दृष्टिं विजिह्मां विदधदपि करोत्यन्तरत्यन्तभद्राम् । यस्तापस्यापि हेतुर्भवति नियमिनामेकनिर्वाणदायी भूयात्स प्रागवस्थाधिकतरपरिणामोदयोऽर्कः श्रिये वः ॥ ८६ ॥ व्यापन्नर्तुर्न कालो व्यभिचरति फलं नौषधीर्वृष्टिरिष्टा नेष्टैस्तृप्यन्ति देवा नहि वहति मरुन्निर्मलाभानि भानि । आशाः शान्ता न भिन्दत्यवधिमुदधयो बिभ्रति क्ष्माभृतः क्ष्मां यस्मिंस्त्रैलोक्यमेवं न चलति तपति स्तात्स सूर्यः श्रिये वः ॥८७॥ कैलासे कृत्तिवासा विहरति विरहत्रासदेहोढकान्तः श्रान्तः शेते महाह्रावधिजलधि विना छद्मना पद्मनाभः । योगोद्योगैकतानो गमयति सकलं वासरं स्वं स्वयंभूर्भूरित्रैलोक्यचिन्ताभृति भुवनविभौ यत्र भास्वान्स वोऽव्यात् ॥ ८८ ॥ एतद्यन्मण्डलं खे तपति दिनकृतस्ता ऋचोऽर्चींषि यानि द्योतन्ते तानि सामान्ययमपि पुरुषो मण्डलेऽणुर्यजूंषि । एवं यं वेद वेदत्रितयमयमयं वेदवेदी समग्रो वर्गः स्वर्गापवर्गप्रकृतिरधिकृतिः सोऽस्तु सूर्यः श्रिये वः ॥ ८९ ॥ नाकौकः प्रत्यनीकक्षतिपटुमहसां वासवाग्रेसराणां सर्वेषां साधु पातां जगदिदमदितेरात्मजत्वे समेऽपि । येनादित्याभिधानं निरतिशयगुणैरात्मनि न्यस्तमस्तु स्तुत्यस्त्रैलोक्यवन्द्यैस्त्रिदशमुनिगणैः सोंऽशुमान् श्रेयसे वः ॥ ९० ॥ भूमिं धाम्नोऽभिवृष्ट्या जगति जलमयीं पावनीं संस्मृताव्याग्नेयीं दाहशक्त्या मुहुरपि यजमानां यथाप्रार्थितार्थैः । लीनामाकाश एवामृतकरघटितां ध्वान्तपक्षस्य पर्वण्येवं सूर्योऽष्टभेदां भव इव भवतः पातु बिभ्रत्स्वमूर्तिम् ॥ ९१ ॥ प्राक्कालोन्निद्रपद्माकरपरिमलनाविर्भवत्पादशोभो भक्त्यात्यक्तोरुखेदोद्गति दिवि विनतासूनुना नीयमानः । सप्ताश्वाप्तापरान्तान्यधिकमधरयन् यो जगन्ति स्तुतोऽलं देवैर्देवः स पायादपर इव मुरारादिरह्नांपतिर्वः ॥ ९२ ॥ यः स्रष्टाऽपां

पुरस्तादचलवरसमभ्युन्नतेर्हेतुरेको लोकानां यस्त्रयाणां स्थित उपरि परं दुर्विलङ्घ्येन धाम्ना । सद्यःसिद्ध्यै प्रसन्नद्युतिशुभचतुराशामुखः स्ताद्विभक्तो द्वेधा वेधा इवाविष्कृतकमलरुचिः सोऽर्चिषामाकरो वः ॥ ९३ ॥ साद्रिद्यूर्वीनदीशा दिशति दश दिशो दर्शयन्प्राग्दृशो यः सादृश्यं दृश्यते नो सदशशतदृशि त्रैदशे यस्य देशे । दीप्तांशुर्वः स दिश्यादशिवयुगदशादर्शितद्वादशात्मा संशास्त्यश्वांश्च यस्याशयविदतिशयाद्दन्दशूकाशनाद्यः ॥ ९४ ॥ तीर्थानि व्यर्थकानि ह्रदनदसरसीनिर्झराम्भोजिनीनां नोदन्वन्तो नुदन्ति प्रतिभयमशुभं श्वभ्रपातानुबन्धि । आपो नाकापगाया अपि कलुषमुषो मज्जतां नैव यत्र त्रातुं यातेऽन्यलोकान्स दिशतु दिवसस्यैकहेतुर्हितं वः ॥ ९५ ॥ एतत्पातालपङ्कप्लुतमिव तमसैवैकमुद्गाढमासीदप्रज्ञाताप्रतर्क्यं निरवगति तथाऽलक्षणं सुप्तमन्तः । यादृक्सृष्टेः पुरस्तान्निशि निशि सकलं जायते तादृगेव त्रैलोक्यं यद्वियोगादवतु रविरसौ सर्गतुल्योदयो वः ॥ ९६ ॥ द्वीपे योऽस्ताचलोऽस्मिन्भवति खलु स एवापरत्रोदयाद्रिर्या यामिन्युज्ज्वलेन्दुद्युतिरिह दिवसोऽन्यत्र तीव्रातपः सः । यद्वश्यौ देशकालाविति नियमयतो नो तु यं देशकालावव्यात्स स्वप्रभुत्वाहितभुवनहितो हेतुरह्नामिनो वा ॥ ९७ ॥ व्यग्रैरग्र्यग्रहेन्दुग्रसनगुरु भरैर्नो समग्रैरुदग्रैप्रत्यग्रैरीषदुग्रैरुदयगिरिगतो गोगणैर्गौरयन्गाम् । उद्गाढार्चिर्विलीनामरनगरनगग्रावगर्भामिवाह्नामग्रे श्रेयो विधत्ते ग्लपयतु गहनं स ग्रहग्रामणीर्वः ॥ ९८ ॥ योनिः साम्नां विधाता मधुरिपुरजितो धूर्जटिः शंकरोऽसौ मृत्युः कालोऽलकायाः पतिरपि धनदः पावको जातवेदाः । इत्थं संज्ञा ह्यवितथादिवदमृतभुजां या यदृच्छाप्रवृत्तास्तासामेकोऽभिधेयस्तदनुगुणगुणैर्यः स सूर्योऽवताद्वः ॥ ९९ ॥ देवः किं बान्धवः स्यात्प्रियसुहृदथवाचार्य आहोस्विदर्यो रक्षा चक्षुर्नु दीपो गुरुरुत जनको

जीवितं बीजमोजः । एवं निर्णीयते यः क इव न जगतां सर्वथा सर्वदाऽसौ सर्वाकारोपकारी दिशतु दशशताभीपुरभ्यार्थितं वः ॥ १०० ॥ श्लोका लोकस्य भूत्यै शतमिति रचिताः श्रीमयूरेण भक्त्या युक्तश्चैतान् पठेद्यः सकृदपि पुरुषः सर्वपापैर्विमुक्तः । आरोग्यं सत्कवित्वं मतिमतुलबलं कान्तिमायुःप्रकर्षं विद्यामैश्वर्यमर्थं सुतमपि लभते सोऽत्र सूर्यप्रसादात् ॥ १०१ ॥ इति श्रीमयूरकविरचितं सूर्यशतकं संपूर्णम् ॥

## ४१७. सूर्यार्यास्तोत्रम् ।

श्रीगणेशाय नमः ॥ शुकतुंडच्छवि सवितुश्चंडरुचेः पुंडरीकवनबन्धोः । मंडलमुदितं वंदे कुंडलमाखंडलाशायाः ॥ १ ॥ यस्योदयास्तसमये सुरमुकुटनिघृष्टचरणकमलोऽपि । कुरुतेऽञ्जलिं त्रिनेत्रः स जयति धाम्नां निधिः सूर्यः ॥ २ ॥ उदयाचलतिलकाय प्रणतोऽस्मि विवस्वते ग्रहेशाय । अंबरचूडामणये दिग्वनिताकर्णपूराय ॥ ३ ॥ जयति जनानंदकरः करनिकरनिरस्ततिमिरसंघातः । लोकालोकालोकः कमलारुणमंडलः सूर्यः ॥ ४ ॥ प्रतिबोधितकमलवनः कृतघटनश्चक्रवाकमिथुनानाम् । दर्शितसमस्तभुवनः परहितनिरतो रविः सदा जयति ॥ ५ ॥ अपनयतु सकलकलिकृतमलपटलं सुप्रतप्तकनकाभः । अरविंदवृंदविघटनपटुतरकिरणोत्करः सविता ॥ ६ ॥ उदयाद्रिचारुचामरहरितहयखुरपरिहितरेणुराग । हरितहय हरितपरिकर गगनांगनदीपक नमस्ते ॥ ७ ॥ उदितवति त्वयि विकसति मुकुलीयति समस्तमस्तमितबिंबे । न ह्यन्यस्मिन्दिनकर सकलं कमलायते भुवनम् ॥ ८ ॥ जयति रविरुदयसमये बालातपः कनकसंनिभो यस्य । कुसुमांजलिरिव जलधौ तरंति रथसप्तयः सप्त ॥ ९ ॥ आर्याः सांबुपुरे सप्त आकाशात्पतिता भुवि । यस्य कंठे गृहे वापि न स लक्ष्म्या वियुज्यते ॥ १० ॥ आर्याः सप्त सदा यस्तु सप्तम्यां सप्तधा जपेत् । तस्य गेहं च देहं च

पद्मा सत्यं न मुंचति ॥११॥ निधिरेष दरिद्राणां रोगिणां परमौषधम् । सिद्धिः सकलकार्याणां गाथेयं संस्मृता रवेः ॥ १२ ॥ इति श्रीयाज्ञवल्क्यविरचितं सूर्यार्यास्तोत्रं संपूर्णम् ॥

## ४१८. सूर्याष्टकम् ।

श्रीगणेशाय नमः ॥ साम्ब उवाच ॥ आदिदेव नमस्तुभ्यं प्रसीद मम भास्कर । दिवाकर नमस्तुभ्यं प्रभाकर नमोऽस्तु ते ॥ १ ॥ सप्ताश्वरथमारूढं प्रचण्डं कश्यपात्मजम् । श्वेतपद्मधरं देवं तं सूर्यं प्रणमाम्यहम् ॥ २ ॥ लोहितं रथमारूढं सर्वलोकपितामहम् । महापापहरं देवं तं सूर्यं० ॥ ३ ॥ त्रैगुण्यं च महाशूरं ब्रह्माविष्णुमहेश्वरम् । महापापहरं देवं तं सूर्यं० ॥ ४ ॥ बृंहितं तेजःपुंजं च वायुमाकाशमेव च । प्रभुं च सर्वलोकानां तं सूर्यं० ॥ ५ ॥ बंधूकपुष्पसंकाशं हारकुंडलभूषितम् । एकचक्रधरं देवं तं सूर्यं० ॥ ६ ॥ तं सूर्यं जगत्कर्तारं महातेजःप्रदीपनम् । महापापहरं देवं तं सूर्यं० ॥ ७ ॥ तं सूर्यं जगतां नाथं ज्ञानविज्ञानमोक्षदम् । महापापहरं देवं तं सूर्यं० ॥ ८ ॥ सूर्याष्टकं पठेन्नित्यं ग्रहपीडाप्रणाशनम् । अपुत्रो लभते पुत्रं दरिद्रो धनवान्भवेत् ॥ ९ ॥ आमिषं मधुपानं च यः करोति रवेर्दिने । सप्तजन्म भवेद्रोगी प्रतिजन्म दरिद्रता ॥ १० ॥ स्त्रीतैलमधुमांसानि यस्त्यजेत्तु रवेर्दिने । न व्याधिः शोकदारिद्र्यं सूर्यलोकं स गच्छति ॥ ११ ॥ इति श्रीसूर्याष्टकस्तोत्रं संपूर्णम् ॥

## ४१९. साम्बपञ्चाशिका ।

श्रीगणेशाय नमः ॥ शब्दार्थत्वविवर्तमानपरमज्योतीरुचो गोपतेरुद्गीथोऽभ्युदितः पुरोऽरुणतया यस्य त्रयीमण्डलम् । भान्त्यद्वर्णपदक्रमे-

रिततमः सप्तस्वराश्चैर्वियद्विद्यास्यन्दनमुन्नयन्निव नमस्तस्मै परब्रह्मणे ॥ १ ॥ ओमित्यन्तर्नदति नियतं यः प्रतिप्राणि शब्दो वाणी यस्मात्प्रसरति पराशब्दतन्मात्रगर्भा । प्राणापानौ वहति च समौ यो मिथो ग्रासंसक्तौ देहस्थं तं सपदि परमादित्यमाद्यं प्रपद्ये ॥ २ ॥ यस्त्वक्चक्षुःश्रवणरसनाघ्राणपाण्यङ्घ्रिवाणीपायूपस्थस्थितिरपि मनोबुद्ध्यहंकारमूर्तिः । तिष्ठत्यन्तर्बहिरपि जगद्भासयन्द्वादशात्मा मार्तण्डं तं सकलकरणाधारमेकं प्रपद्ये ॥ ३ ॥ या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं वर्णानत्र प्रकटकरणैः प्राणसङ्गात्प्रसूतान् । तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥ ४ ॥ ऊर्ध्वाधःस्थान्यतनुभुवनान्यन्तरा संनिविष्टा नानानाडिप्रसवगहना सर्वभूतान्तरस्था । प्राणापानग्रसननिरतैः प्राप्यते ब्रह्मनाडी सा नः श्वेता भवतु परमादित्यमूर्तिः प्रसन्ना ॥ ५ ॥ न ब्रह्माण्डव्यवहितपथा नातिशीतोष्णरूपा नो वा नक्तंदिवगममिताऽतापनीयापराहुः । वैकुण्ठीया तनुरिव रवे राजते मण्डलस्था सा नः श्वेता भवतु परमादित्यमूर्तिः प्रसन्ना ॥ ६ ॥ यत्रारूढं त्रिगुणवपुषि ब्रह्म तद्बिन्दुरूपं योगीन्द्राणां यदपि परमं भाति निर्वाणमार्गः । त्रय्याधारः प्रणव इति यन्मण्डलं चण्डरश्मेरन्तःसूक्ष्मं बहिरपि बृहन्मुक्तयेऽहं प्रपन्नः ॥ ७ ॥ यस्मिन्सोमः सुरपितृनरैरन्वहं पीयमानः क्षीणः क्षीणः प्रविशति यतो वर्धते चापि भूयः । यस्मिन्वेदा मधुनि सरघाकारबद्धान्ति चाग्रे तच्चण्डांशोरमितममृतं मण्डलस्थं प्रपद्ये ॥ ८ ॥ ऐन्द्रीमाशां पृथुकवपुषा पूरयित्वा क्रमेण क्रान्ताः सप्त प्रकटहरिणा येन पादेन लोकाः । कृत्वा ध्वान्तं विगलितबलिव्यक्ति पाताललीनं विश्वालोकः स जयति रविः सत्त्वमेवोर्ध्वरश्मिः ॥ ९ ॥ ध्यात्वा ब्रह्म प्रथममतनु प्राणमूले नदन्तं दृष्ट्वा चान्तः प्रणवमुखरं व्याहृतीः

सम्यगुक्त्वा । यत्तद्वेदे तदिति सवितुर्ब्रह्मणोक्तं वरेण्यं तद्भर्गाख्यं किमपि परमं धामगर्भं प्रपद्ये ॥ १० ॥ त्वां स्तोष्यामि स्तुतिभिरिति मे यस्तु भेदग्रहोऽयं सैवाविद्या तदपि सुतरां तद्विनाशाय युक्तः। स्तौम्येवाहं त्रिविधमुदितं स्थूलसूक्ष्मं परं वा विद्योपायः पर इति बुधैर्गीयते खल्वविद्या ॥ ११ ॥ योऽनाद्यन्तोऽप्यतनुरगुणोऽणोरणीयान्महीयान्विश्वाकारः सगुण इति वा कल्पनाकल्पिताङ्गः । नानाभूतप्रकृतिविकृतीर्दर्शयन् भाति यो वा तस्मै तस्मै भवतु परमादित्य नित्यं नमस्ते ॥ १२ ॥ तत्त्वाख्याने त्वयि मुनिजना नेति नेति ब्रुवन्तः श्रान्ताः सम्यक्त्वमिति न च तैरीदृशो वेति चोक्तः । तस्मात्तुभ्यं नम इति वचोमात्रमेवास्मि वच्मि प्रायो यस्मात्प्रसरतितरां भारती ज्ञानगर्भा ॥ १३ ॥ सर्वाङ्गीणः सकलवपुषामन्तरे योऽन्तरात्मा तिष्ठन्काष्ठे दहन इव नो दृश्यसे युक्तिशून्यैः । यश्च प्राणारणिषु नियतैर्मथ्यमानासु सद्भिर्दृश्यं ज्योतिर्भवसि परमादित्य तस्मै नमस्ते ॥ १४ ॥ स्तोता स्तुत्यः स्तुतिरिति भवान् कर्तृकर्मक्रियात्मा क्रीडत्येकस्त्र नुतिविधावस्वतन्त्रस्ततोऽहम् । यद्वा वच्मि प्रणयसुभगं गोपते तच्च तथ्यं त्वत्तो ह्यन्यत्किमिव जगतां विद्यते तन्मृषा स्यात ॥ १५ ॥ ज्ञानं नान्तःकरणरहितं विद्यतेऽस्मद्विधानां त्वं चात्यन्तं सकलकरणागोचरत्वादचिन्त्यः । ध्यानातीतस्त्वमिति न विना भक्तियोगेन लभ्यस्तस्माद्भक्तिं शरणमस्मृतप्राप्तयेऽहं प्रपन्नः ॥ १६ ॥ हार्दं हन्ति प्रथमसुदिता या तमःसंश्रितानां सत्त्वोद्रेकात्तदनु च रजःकर्मयोगक्रमेण । स्वभ्यस्ता च प्रथयतितरां सत्त्वमेव प्रपन्ना निर्वाणाय व्रजति शमिनां तेऽर्क भक्तिस्त्वयीव ॥ १७ ॥ तामासाद्य श्रियमिव गृहे कामधेनुं प्रवासे ध्वान्ते भातिं धृतिमिव वने योजने ब्रह्मनाडिम् । नावं चास्मिन् विषमविषयग्राहसंसारसिन्धौ गच्छेयं ते परममसृतं

यत्र शीतं न चोष्णम् ॥ १८ ॥ अग्नीषोमावखिलजगतः कारणं तौ मयूखैः सर्गादाने सृजसि भगवन्ह्रासवृद्धिक्रमेण । तावेवान्तर्विषुवति समौ जुह्वतामात्मवह्नौ द्वावप्यस्तं नयसि युगपन्मुक्तये भक्तिभाजाम् ॥ १९ ॥ स्थूलत्वं ते प्रकृतिगहनं नैव लक्ष्यं ह्यनन्तं सूक्ष्मत्वं वा तदपि सदसद्व्यक्त्यभावादचिन्त्यम् । ध्यायामीत्थं कथमविदितं त्वामनाद्यन्तमन्तस्तस्मादर्क प्रणियिनि मयि स्वात्मनैव प्रसीद ॥ २० ॥ यत्तद्वेद्यं किमपि परमं शब्दतत्त्वं त्वमन्तस्तत्सद्व्यक्तिं जिगमिषु शनैर्लीति मात्राकलाः खे । अव्यक्तेन प्रणववपुषा बिन्दु-नादोदितं सच्छब्दब्रह्मोच्चरति करणव्यञ्जितं वाचकं ते ॥ २१ ॥ प्रातःसंध्यारुणकिरणभागृङ्मयं राजसं यन्मध्ये चापि ज्वलदिव यजुः शुक्लभाः सात्त्विकं वा । सायं सामास्तमितकिरणं यत्तमोह्ला-सिरूपं साह्नः सर्गस्थितिलयविधावाकृतिस्ते त्रयीव ॥ २२ ॥ ये पातालोदधिमुनिनगद्वीपलोकाधिबीजच्छन्दोभूतस्वरमुखनदत्सप्तसप्तिं-प्रपन्नाः । ये चैकाश्वं निरवयववाग्भावमात्राधिरूढं ते त्वामेव स्वरगुणकलावर्जितं यान्त्यनश्वम् ॥ २३ ॥ दिव्यं ज्योतिः सलिल-पवनैः पूरयित्वा त्रिलोकीमेकीभूतं पुनरपि च तत्सारमादाय गोभिः । अन्तर्लीनो विशसि वसुधां तद्गतः सूयसेऽन्नं तच्च प्राणांस्त्वमिति जगतां प्राणभृत्सूर्य आत्मा ॥ २४ ॥ अग्नीषोमौ प्रकृतिपुरुषौ बिन्दुनादौ च नित्यौ प्राणापानावपि दिननिशे ये च सत्यानृते द्वे । धर्माधर्मौ सदसदुभयं योऽन्तरावेश्य योगी वर्तेतात्मन्युपरतमतिर्निर्गुणं त्वां विशेत्सः ॥ २५ ॥ गर्भाधान-प्रसवविधये सुप्तयोरिन्दुभासा सापत्न्येनाभिमुखमिव खे कान्त-योर्मध्यसंस्थः । द्यावापृथ्व्योर्वदनकमले गोमुखैर्बोधयित्वा पर्या-येणापिबसि भगवन् षड्रसास्वादलोलः ॥ २६ ॥ सोमं पूर्णामृत-

मिव चरुं तेजसा साधयित्वा कृत्वा तेनानलमुखजगत्तर्पणं वैश्वदेवम् । आमावस्यं विघसमिव खे तत्कलाशेषमश्नन् ब्रह्माण्डान्तर्गृहपतिरिव स्वात्मयागं करोषि ॥ २७ ॥ कृत्वा नक्तंदिनमिव जगद्बीजमाव्यक्तिकं यत्तत्रैवान्तर्दिनकर तथा ब्राह्ममन्यत्ततोऽल्पम् । दैवं पित्र्यं क्रमपरिगतं मानुषं चाल्पमल्पं कुर्वन्कुर्वन्कलयसि जगत्पञ्चधावऽऽर्तनाभिः ॥ २८ ॥ तत्त्वालोके तपन सुदिने ये परं संप्रबुद्धा ये वा चित्तोपशमरजनीयोगनिद्रामुपेताः । तेऽहोरात्रोपरमपरमानन्दसंध्यासु सौरं भित्त्वा ज्योतिःपरमपरमं यान्ति निर्वाणसंज्ञम् ॥ २९ ॥ आ ब्रह्मेदं नवमिव जगज्जङ्गमस्थावरान्तं सर्गे सर्गे विसृजसि रवे गोभिरुद्रिक्तसोमैः । दीप्तैः प्रत्याहरसि च लये तद्यथायोनि भूयः सर्गान्तादौ प्रकटविभवां दर्शयन् रश्मिलीलाम् ॥ ३० ॥ श्रित्वा नित्योपचितमुचितं ब्रह्मतेजःप्रकाशं रूपं सर्गस्थितिलयमुचा सर्वभूतेषु मध्ये । अन्तेवासिष्विव सुगुरुणा यः परोक्षः प्रकृत्या प्रत्यक्षोऽसौ जगति भवता दर्शितः स्वात्मनाऽऽत्मा ॥ ३१ ॥ लोकाः सर्वे वपुषि नियतं ते स्थितिस्त्वं च तेषामेकैकस्मिन्युगपदगुणो विश्वहेतोर्गुणीव । इत्थंभूते भवति भगवन्न त्वदन्योऽस्मि सत्यं किं तु ज्ञस्त्वं परमपुरुषोऽहं प्रकृत्यैव चाज्ञः ॥ ३२ ॥ संकल्पेच्छाद्यखिलकरणप्राणवाण्यो वरेण्याः संपन्ना मे त्वदभिनवनाज्जन्म चेदं शरण्यम् । मन्ये चास्तं जिगमिषु शनैः पुण्यपापद्वयं तद्भक्तिश्रद्धे तव चरणयोरन्यथा नो भवेताम् ॥ ३३ ॥ सत्यं भूयो जननमरणे त्वत्प्रपन्नेषु न स्तस्तत्राप्येकं तव नुतिफलं जन्म याचे तदित्थम् । त्रैलोक्येशः शम इव परः पुण्यकायोऽप्ययोनिः संसाराब्धौ प्लव इव जगत्तारणाय स्थिरः स्याम् ॥ ३४ ॥ सौषुम्णेन त्वममृतपथेनैत्य शीतांशुभावं पुष्णास्यग्रे सुरनरपितॄन्

शान्तभाभिः कलाभिः । पश्चादम्भो विशसि विविधाश्चौषधीस्तद्गतोऽपि प्रीणास्येवं त्रिभुवनमतस्ते जगन्मित्रतार्क ॥ ३५ ॥ मन्दाक्रान्ते तमसि भवता नाथ दोषावसाने नान्तर्लीना मम मतिरियं गाढनिद्रां जहाति । तस्मादस्तंगमिततमसा पद्मिनीवात्मभासा सौरीत्येषा दिनकर परं नीयतामाशु बोधम् ॥ ३६ ॥ येन ग्रासीकृतमिव जगत्सर्वमासीत्तदस्तं ध्वान्तं नीत्वा पुनरपि विभो तद्दयाघ्रातचित्तः । धत्से नक्तंदिनमपि गती शुक्लकृष्णे विभज्य त्राता तस्माद्भव परिभवे दुष्कृते मेऽपि भानो ॥ ३७ ॥ आसंसारोपचितसदसत्कर्मबन्धाश्रितानामाधिव्याधिप्रजनमरणक्षुत्पिपासार्दितानाम् । मिथ्याज्ञानप्रबलतमसा नाथ चान्धीकृतानां त्वं नस्त्राता भव करुणया यत्रतत्रस्थितानाम् ॥ ३८ ॥ सत्यासत्यस्खलितवचसां शौचलज्जोज्झितानामज्ञानानामफलसफलप्रार्थनाकातराणाम् । सर्वावस्थास्वखिलविषयाभ्यस्तकौतूहलानां त्वं नस्त्राता भव पितृतया भोगलोलार्भकाणाम् ॥ ३९ ॥ यावद्देहं जरयति जरा नान्तकादेत्य दूती नो वा भीमस्त्रिफणभुजगाकारदुर्वारपाशः । गाढं कण्ठे लगति सहसा जीवितं लेलिहानस्तावद्भक्ताभयद सदयं श्रेयसे नः प्रसीद ॥ ४० ॥ विश्वप्राणग्रसनरसनाटोपकोपप्रगल्भं मृत्योर्वक्त्रं दहननयनोद्दामदंष्ट्राकरालम् । यावद्दृष्ट्वा व्रजति न भिया पञ्चतामेष कायस्तावन्नित्यामृतमय रवे पाहि नः कांदिशीकान् ॥ ४१ ॥ शब्दाकारं वियदिव वपुस्ते यजुःसामधाम्नः ससच्छन्दांस्यपि च तुरगा ऋङ्मयं मण्डलं च । एवं सर्वश्रुतिमयतया मद्दयानुग्रहाद्वा क्षिप्रं मत्तः कृपणकरुणाक्रन्दमाकर्णयेमम् ॥ ४२ ॥ नाशं नास्मच्चरणशरणा यान्त्यपि ग्रस्यमाना देवैरित्थं सितमिव यशो दर्शयन्स्व त्रिलोक्याम् । मन्ये सोमं क्षततनुममागर्भवृद्ध्या विवस्वन् शुक्लां छायां

नयसि शनकैः स्वां सुषुम्णांशुभासा ॥ ४३ ॥ आस्तां जन्मप्रभृति भवतः सेवनं तद्धि लोके वाच्यं केनापरिमितफलं भुक्तिमुक्तिप्रकारम्। ज्योतिर्मात्रं स्मृतिपथमितो जीवितान्तेऽपि भास्वन्निर्वाणाय प्रभवसि सतां तेन ते कः समोऽन्यः ॥ ४४ ॥ अप्रत्यक्षत्रिदशभजनाद्यत्परोक्षं फलं तत्पुंसां युक्तं भवति हि समं कारणेनैव कार्यम्। प्रत्यक्षस्त्वं सकलजगतां यत्समक्षं फलं मे युष्मद्भक्तेः समुचितमतस्तत्तु याचे यथा त्वाम् ॥ ४५ ॥ ये चारोग्यं दिशति भगवान्सेवितोऽप्येवमाहुस्ते तत्त्वज्ञा जगति सुभगा भोगयोगप्रधानाः। भुक्तेर्मुक्तेरपि च जगतां यच्च पूर्णं सुखानां तस्यान्योऽर्कादमृतवपुषः को हि नामास्तु दाता ॥ ४६ ॥ हित्वा हित्वा गुरुचपलतामप्यनेकान्निजार्थान्यैरेकार्थीकृतमिव भवत्सेवनं मत्प्रियार्थम्। तेषामिच्छाम्युपकृतिमहं स्वेन्द्रियाणां प्रियाणामादौ तस्मान्मम दिनपते देहि तेभ्यः प्रसादम् ॥ ४७ ॥ किं तन्नामोच्चरति वचनं यस्य नोच्चारकस्त्वं किं तद्वाच्यं सकलवचसां विश्वमूर्ते न यत्त्वम्। तस्मादुक्तं यदपि तदपि त्वन्नुतौ भक्तियोगादस्माभिस्तद्भवतु भगवँस्त्वत्प्रसादेन धन्यम् ॥ ४८ ॥ या पन्थानं दिशति शिशिराद्युत्तरं देवयानं या वा कृष्णं पितृपथमथो दक्षिणं प्रावृडाद्यम्। ताभ्यामन्या विषुवदभिजिन्मध्यमा कृत्यशून्या धन्या काचित्प्रकृतिपुरुषावन्तरा मेऽस्तु वृत्तिः ॥ ४९ ॥ स्थित्वा किंचिन्मन इव पिबन्सेतुबन्धस्य मध्ये प्राप्योपेयं ध्रुवपदमथो व्यक्तमुद्दाल्य तालु। सत्यादूर्ध्वं किमपि परमं व्योम सोमाग्निशून्यं गच्छेयं त्वां सुरपितृगती चान्तरा ब्रह्मभूतः ॥ ५० ॥ सर्वात्मत्वं सवितुरिति यो वाङ्मनःकायबुद्ध्या रागद्वेषोपशमसमतायोगमेवारुरुक्षुः। धर्माधर्मग्रसनरशनामुक्तये युक्तियुक्तां स श्रीसाम्बः स्तुतिमिति रवेः स्वप्रशान्तां चकार ॥ ५१ ॥ भक्तिश्रद्धाद्यखिलतरुणीवल्लभेनेदमुक्तं श्रीसाम्बेन प्रकटगहनं

स्तोत्रमध्यात्मगर्भम् । यः सावित्रं पठति नियतं स्वात्मवत्सर्वलोकान्पश्यन्सोऽन्ते व्रजति शुकवन्मण्डलं चण्डरश्मेः ॥ ५२ ॥ इति परमरहस्यश्लोकपञ्चाशदेषा तपननवनपुण्या सागमब्रह्मचर्चा । हरतु दुरितमस्मद्वर्णिताकर्णिता वो दिशतु च शुभसिद्धिं मातृवद्भक्तिभाजाम् ॥ ५३ ॥ इति श्रीसाम्बप्रणीता साम्बपञ्चाशिका संपूर्णा ॥

## ४२०. सूर्यस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐनमो भगवते आदित्यायाखिलजगतामात्मस्वरूपेण कालस्वरूपेण चतुर्विधभूतनिकायानां ब्रह्मादिस्तंबपर्यंतानामंतर्हृदयेषु बहिरपि चाकाश इवोपाधिनाऽव्यवधीयमानो भगवानेक एकक्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ॥ १ ॥ यदुह वाव विबुधर्षभ सवितरदस्तपत्यनुसवनमहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जनभगवतः समभिधीमहि तपनमंडलम् ॥ २ ॥ य इह वाव स्थिरचरनिकराणां निजकेतनानां मनइंद्रियासुगणानात्मनः स्वयमात्मांतर्यामी प्रचोदयति ॥ ३ ॥ य एवेमं लोकमतिकरालवदनांधकारसंज्ञाजगरग्रहगिलितं संमृतकमिव विचेतनमवलोक्यानुकंपया परमकारुणिकवीक्षयैवोत्थाप्याऽहरहरनुसवनं श्रेयसि स्वधर्माख्यात्मावस्थाने प्रवर्तयत्यवनिपतिरिवासाधूनां भयमुदीरयन्नटति ॥ ४ ॥ परित आशापालैस्तत्र तत्र कमलकोशांजलिभिरुपहृतार्हणः ॥ ५ ॥ अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिर्वंदितमहमयातयामयजुःकाम उपसरामीति ॥ ६ ॥ इति श्रीमद्भागवते द्वादशस्कंधे याज्ञवल्क्यकृतं सूर्यस्तोत्रं संपूर्णम् ॥



# ❀ हनुमत्स्तोत्राणि ❀



मनोजवं मारुततुल्यवेगं
जितेंद्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं
श्रीरामदूतं शरणं प्रपद्ये ॥

## ❀ हनुमत्स्तोत्राणि ❀

### ४२१. मारुतिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ नमो भगवते विचित्रवीरहनुमते प्रलयकालानलप्रभाप्रज्वलनाय । प्रतापवज्रदेहाय । अंजनीगर्भसंभूताय । प्रकटविक्रमवीरदैत्यदानवयक्षरक्षोगणग्रहबंधनाय । भूतग्रहबंधनाय । प्रेतग्रहबंधनाय । पिशाचग्रहबंधनाय । शाकिनीडाकिनीग्रहबंधनाय । काकिनीकामिनीग्रहबंधनाय । ब्रह्मग्रहबंधनाय । ब्रह्मराक्षसग्रहबंधनाय । चोरग्रहबंधनाय । मारीग्रहबंधनाय । एहि एहि । आगच्छ आगच्छ । आवेशय आवेशय । मम हृदये प्रवेशय प्रवेशय । स्फुर स्फुर । प्रस्फुर प्रस्फुर । सत्यं कथय । व्याघ्रमुखबंधन सर्पमुखबं० राजमु० नारीमु० सभामु० शत्रुमु० सर्वमु० लंकाप्रासादभंजन । अमुकं मे वशमानय । क्लीं क्लीं क्लीं ह्रीं श्रीं श्रीं राजानं वशमानय । श्रीं ह्रीं क्लीं स्त्रिय आकर्षय आकर्षय शत्रून्मर्दय मर्दय मारय मारय चूर्णय चूर्णय खे खे श्रीरामचंद्राज्ञया मम कार्यसिद्धिं कुरु कुरु ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः फट् स्वाहा विचित्रवीर हनूमन् मम सर्वशत्रून् भस्मीकुरु कुरु । हन हन हुं फट् स्वाहा ॥ एकादशशतवारं जपित्वा सर्वशत्रून् वशमानयति नान्यथा इति ॥ इति श्रीमारुतिस्तोत्रं संपूर्णम् ॥

### ४२२. हनुमद्वाडवानलस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीहनुमद्वाडवानलस्तोत्रमंत्रस्य । श्रीरामचंद्र ऋषिः । श्रीवडवानलहनुमान् देवता । मम समस्तरोगप्रशमनार्थं आयुरारोग्यैश्वर्याभिवृद्ध्यर्थं समस्तपापक्षयार्थं सीता-

रामचंद्रप्रीत्यर्थं च हनुमद्वाडवानलस्तोत्रजपमहं करिष्ये । ॐ ह्रां ह्रीं ॐ नमो भगवते श्रीमहाहनुमते प्रकटपराक्रम सकलदिङ्मण्डल-यशोवितानधवलीकृतजगत्त्रितय वज्रदेह रुद्रावतार लंकापुरीदहन उमाअमलमंत्र उदधिबंधन दशशिरःकृतांतक सीताश्वसन वायुपुत्र अंजनीगर्भसंभूत श्रीरामलक्ष्मणानंदकर कपिसैन्यप्राकार सुग्रीवसाह्य रणपर्वतोत्पाटन कुमारब्रह्मचारिन् गभीरनाद सर्वपापग्रहवारण सर्वज्वरोच्चाटन डाकिनीविध्वंसन ॐह्रां ह्रीं ॐनमो भगवते महावीर-वीराय सर्वदुःखनिवारणाय ग्रहमंडलसर्वभूतमंडलसर्वपिशाचमंडलोच्चा-टन भूतज्वरएकाहिकज्वरद्व्याहिकज्वरत्र्याहिकज्वरचातुर्थिकज्वरसंताप-ज्वरविषमज्वरतापज्वरमाहेश्वरवैष्णवज्वरान् छिंधि छिंधि यक्षब्रह्मराक्ष-सभूतप्रेतपिशाचान् उच्चाटय उच्चाटय ॐ ह्रां श्रीं ॐनमो भगवते श्रीमहाहनुमते ॐह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः आं हां हां हां हां औं सौं एहि एहि एहि ॐहं ॐहं ॐहं ॐहं ॐनमो भगवते श्रीमहाहनुमते श्रवणचक्षुर्भूतानां शाकिनीडाकिनीनां विषमदुष्टानां सर्वविषं हर हर आकाशभुवनं भेदय भेदय छेदय छेदय मारय मारय शोषय शोषय मोहय मोहय ज्वालय ज्वालय प्रहारय प्रहारय सकलमायां भेदय भेदय ॐह्रां ह्रीं ॐनमो भगवते महाहनुमते सर्वग्रहोच्चाटन परबलं क्षोभय क्षोभय सकलबंधनमोक्षणं कुरु कुरु शिरःशूलगुल्मशूलसर्व-शूलान्निर्मूलय निर्मूलय नागपाशानंतवासुकितक्षककर्कोटककालियान् यक्षकुलजलगतबिलगतरात्रिंचरदिवाचरसर्वान्निर्विषं कुरु कुरु स्वाहा। राजभयचोरभयपरमंत्रपरयंत्रपरतंत्रपरविद्याश्छेदय छेदय स्वमंत्रस्वयं-त्रस्वतंत्रस्वविद्याः प्रकटय प्रकटय सर्वारिष्टान्नाशय नाशय सर्वशत्रून्नाशय नाशय असाध्यं साधय साधय हुं फट् स्वाहा ॥ इति श्रीबिभीषणकृतं हनुमद्वाडवानलस्तोत्रं संपूर्णम् ॥

## ४२३. पञ्चमुखहनुमत्कवचम्।

श्रीगणेशाय नमः॥ ॐ अस्य श्रीपञ्चमुखहनुमत्कवचमन्त्रस्य। ब्रह्मा ऋषिः। गायत्री छन्दः। पञ्चमुखविराट् हनुमान् देवता। ह्रीं बीजम्। श्रीं शक्तिः। क्रौं कीलकम्। क्रूं कवचम्। क्रैं अस्त्राय फट्। इति दिग्बन्धः॥ श्रीगरुड उवाच॥ अथ ध्यानं प्रवक्ष्यामि शृणु सर्वाङ्गसुन्दरि। यत्कृतं देवदेवेन ध्यानं हनुमतः प्रियम्॥ १॥ पञ्चवक्त्रं महाभीमं त्रिपञ्चनयनैर्युतम्। बाहुभिर्दशभिर्युक्तं सर्वकामार्थसिद्धिदम्॥ २॥ पूर्वं तु वानरं वक्त्रं कोटिसूर्यसमप्रभम्। दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम्॥ ३॥ अस्यैव दक्षिणं वक्त्रं नारसिंहं महाद्भुतम्। अत्युग्रतेजोवपुषं भीषणं भयनाशनम्॥ ४॥ पश्चिमं गारुडं वक्त्रं वक्रतुण्डं महाबलम्। सर्वनागप्रशमनं विषभूतादिकृन्तनम्॥ ५॥ उत्तरं सौकरं वक्त्रं कृष्णं दीप्तं नभोपमम्। पातालसिंहवेतालज्वररोगादिकृन्तनम्॥ ६॥ ऊर्ध्वं हयाननं घोरं दानवान्तकरं परम्। येन वक्त्रेण विप्रेन्द्र तारकाख्यं महासुरम्॥ ७॥ जघान शरणं तत्स्यात्सर्वशत्रुहरं परम्। ध्यात्वा पञ्चमुखं रुद्रं हनूमन्तं दयानिधिम्॥ ८॥ खड्गं त्रिशूलं खट्वाङ्गं पाशमङ्कुशपर्वतम्। मुष्टिं कौमोदकीं वृक्षं धारयन्तं कमण्डलुम्॥ ९॥ भिन्दिपालं ज्ञानमुद्रां दशभिर्मुनिपुङ्गवम्। एतान्यायुधजालानि धारयन्तं भजाम्यहम्॥ १०॥ प्रेतासनोपविष्टं तं सर्वाभरणभूषितम्। दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम्। सर्वाश्चर्यमयं देवं हनूमद्विश्वतोमुखम्॥ ११॥ पञ्चास्यमच्युतमनेकविचित्रवर्णवक्त्रं शशाङ्कशिखरं कपिराजवर्यम्। पीताम्बरादिमुकुटैरुपशोभिताङ्गं पिङ्गाक्षमाद्यमनिशं मनसा स्मरामि॥ १२॥ मर्कटेशं महोत्साहं सर्वशत्रुहरं परम्।

शत्रुं संहर मां रक्ष श्रीमन्नापदमुद्धर ॥ १३ ॥ ॐ हरिमर्कट मर्कट मन्त्रमिदं परिलिख्यति लिख्यति वामतले। यदि नश्यति नश्यति शत्रुकुलं यदि मुञ्चति मुञ्चति वामलता ॥ १४ ॥ ॐ हरिमर्कटाय स्वाहा। ॐ नमो भगवते पञ्चवदनाय पूर्वकपिमुखाय सकलशत्रुसंहारकाय स्वाहा। ॐ नमो भगवते पञ्चवदनाय दक्षिणमुखाय करालवदनाय नरसिंहाय सकलभूतप्रमथनाय स्वाहा। ॐ नमो भगवते पञ्चवदनाय पश्चिममुखाय गरुडाननाय सकलविषहराय स्वाहा। ॐ नमो भगवते पञ्चवदनायोत्तरमुखायादिवराहाय सकलसंपत्कराय स्वाहा। ॐ नमो भगवते पञ्चवदनायोर्ध्वमुखाय हयग्रीवाय सकलजनवशंकराय स्वाहा। ॐ अस्य श्रीपञ्चमुखहनुमन्मन्त्रस्य। श्रीरामचन्द्र ऋषिः। अनुष्टुप् छन्दः। पञ्चमुखवीरहनुमान् देवता। हनुमानिति बीजम्। वायुपुत्र इति शक्तिः। अञ्जनीसुत इति कीलकम्। श्रीरामदूतहनुमत्प्रसादसिद्ध्यर्थे जपे विनियोगः॥ इति ऋष्यादिकं विन्यसेत्। ॐ अञ्जनीसुताय अङ्गुष्ठाभ्यां नमः। ॐ रुद्रमूर्तये तर्जनीभ्यां नमः। ॐ वायुपुत्राय मध्यमाभ्यां नमः। ॐ अग्निगर्भाय अनामिकाभ्यां नमः। ॐ रामदूताय कनिष्ठिकाभ्यां नमः। ॐ पञ्चमुखहनुमते करतलकरपृष्ठाभ्यां नमः। इति करन्यासः॥ ॐ अञ्जनीसुताय हृदयाय नमः। ॐ रुद्रमूर्तये शिरसे स्वाहा। ॐ वायुपुत्राय शिखायै वषट्। ॐ अग्निगर्भाय कवचाय हुम्। ॐ रामदूताय नेत्रत्रयाय वौषट्। ॐ पञ्चमुखहनुमते अस्त्राय फट्। पञ्चमुखहनुमते स्वाहा॥ इति दिग्बन्धः॥ अथ ध्यानम्॥ वन्दे वानरनारसिंहखगराट्क्रोडाश्ववक्त्रान्वितं दिव्यालङ्करणं त्रिपञ्चनयनं देदीप्यमानं रुचा। हस्ताब्जैरसिखेटपुस्तकसुधाकुम्भाङ्कुशाद्रिं हलं खट्वाङ्गं फणिभूरुहं दशभुजं सर्वारिवीरापहम्॥ इति॥ अथ मन्त्रः॥ ॐ

श्रीरामदूतायाञ्जनेयाय वायुपुत्राय महाबलपराक्रमाय सीतादुःखनिवारणाय लङ्कादहनकारणाय महाबलप्रचण्डाय फाल्गुनसखाय कोलाहलसकलब्रह्माण्डविश्वरूपाय सप्तसमुद्रनिर्लङ्घनाय पिङ्गलनयनायामितविक्रमाय सूर्यबिम्बफलसेवनाय दुष्टनिवारणाय दृष्टिनिरालंकृताय सञ्जीविनीसञ्जीविताङ्गदलक्ष्मणमहाकपिसैन्यप्राणदाय दशकण्ठविध्वंसनाय रामेष्टाय महाफाल्गुनसखाय सीतासहितरामवरप्रदाय षट्प्रयोगागमपञ्चमुखवीरहनुमन्मन्त्रजपे विनियोगः ॥ ॐ हरिमर्कटमर्कटाय बंबंबंबंबं वौषट् स्वाहा। ॐ हरिमर्कटमर्कटाय फंफंफंफंफं फट् स्वाहा। ॐ हरिमर्कटमर्कटाय खेंखेंखेंखेंखें मारणाय स्वाहा। ॐ हरिमर्कटमर्कटाय लुंलुंलुंलुंलुं आकर्षितसकलसम्पत्कराय स्वाहा। ॐ हरिमर्कटमर्कटाय धंधंधंधंधं शत्रुस्तम्भनाय स्वाहा। ॐ टंटंटंटंटं कूर्ममूर्तये पञ्चमुखवीरहनुमते परयन्त्रपरतन्त्रोच्चाटनाय स्वाहा। ॐ कंखंगंघंङं चंछंजंझंञं टंठंडंढंणं तंथंदंधंनं पंफंबंभंमं यंरंलंवं शंषंसंहं ळंक्षं स्वाहा। इति दिग्बन्धः ॥ ॐ पूर्वकपिमुखाय पञ्चमुखहनुमते टंटंटंटंटं सकलशत्रुसंहरणाय स्वाहा। ॐ दक्षिणमुखाय पञ्चमुखहनुमते करालवदनाय नरसिंहाय ॐ हांहींहूंहैंहौंहः सकलभूतप्रेतदमनाय स्वाहा। ॐ पश्चिममुखाय गरुडाननाय पञ्चमुखहनुमते मंमंमंमंमं सकलविषहराय स्वाहा। ॐ उत्तरमुखायादिवराहाय लंलंलंलंलं नृसिंहाय नीलकण्ठमूर्तये पञ्चमुखहनुमते स्वाहा। ॐ ऊर्ध्वमुखाय हयग्रीवाय रुंरुंरुंरुंरुं रुद्रमूर्तये सकलप्रयोजननिर्वाहकाय स्वाहा। ॐ अञ्जनीसुताय वायुपुत्राय महाबलाय सीताशोकनिवारणाय श्रीरामचन्द्रकृपापादुकाय महावीर्यप्रमथनाय ब्रह्माण्डनाथाय कामदाय पञ्चमुखवीरहनुमते स्वाहा। भूतप्रेतपिशाचब्रह्मराक्षसशाकिनीडाकिन्यन्तरिक्षग्रहपरयन्त्रपरतन्त्रोच्चाटनाय स्वाहा। सकलप्रयोजननिर्वाहकाय पञ्चमुखवीरहनुमते

श्रीरामचन्द्रवरप्रसादाय जंजंजंजंजं स्वाहा । इदं कवचं पठित्वा तु महाकवचं पठेन्नरः । एकवारं जपेत्स्तोत्रं सर्वशत्रुनिवारणम् ॥ १५ ॥ द्विवारं तु पठेन्नित्यं पुत्रपौत्रप्रवर्धनम् । त्रिवारं च पठेन्नित्यं सर्वसंपत्करं शुभम् ॥१६॥ चतुर्वारं पठेन्नित्यं सर्वरोगनिवारणम् । पञ्चवारं पठेन्नित्यं सर्वलोकवशङ्करम् ॥ १७ ॥ षड्वारं च पठेन्नित्यं सर्वदेववशङ्करम् । सप्तवारं पठेन्नित्यं सर्वसौभाग्यदायकम् ॥ १८ ॥ अष्टवारं पठेन्नित्यमिष्टकामार्थसिद्धिदम् । नववारं पठेन्नित्यं राजभोगमवाप्नुयात् ॥ १९ ॥ दशवारं पठेन्नित्यं त्रैलोक्यज्ञानदर्शनम् । रुद्रावृत्तिं पठेन्नित्यं सर्वसिद्धिर्भवेद्ध्रुवम् ॥ २० ॥ निर्बलो रोगयुक्तश्च महाव्याध्यादिपीडितः । कवचस्मरणेनैव महाबलमवाप्नुयात् ॥ २१ ॥ इति श्रीसुदर्शनसंहितायां श्रीरामचन्द्रसीताप्रोक्तं श्रीपञ्चमुखहनुमत्कवचं संपूर्णम् ॥

## ४२४. हनुमल्लांगूलास्त्रस्तोत्रम् ।

श्रीगणेशाय नमः ॥ हनुमन्नञ्जनीसूनो महाबलपराक्रम । लोलल्लांगूलपातेन ममारातीन्निपातय ॥ १ ॥ मर्कटाधिप मार्तण्डमण्डलग्रासकारक । लोल० ॥ २ ॥ अक्षक्षपण पिङ्गाक्ष दितिजासुक्षयंकर । लोल० ॥ ३ ॥ रुद्रावतारसंसारदुःखभारापहारक । लोल० ॥ ४ श्रीरामचरणाम्भोजमधुपायितमानस । लोल० ॥ ५ ॥ वालिप्रमथनक्रान्तसुग्रीवोन्मोचनप्रभो । लोल० ॥ ६ ॥ सीताविरहवारीशभग्नसीतेशतारक । लोल० ॥ ७ ॥ रक्षोराजप्रतापाग्निदह्यमानजगद्वन लोल० ॥ ८ ॥ ग्रस्ताशेषजगत्स्वास्थ्य राक्षसाम्भोधिमन्दर लोल० ॥ ९ ॥ पुच्छगुच्छस्फुरद्वीर जगद्दग्धारिपत्तन । लोल० ॥ १० ॥ जगन्मनोदुरुल्लङ्घ्यापारावारविलङ्घन । लोल० ॥ ११ ॥ स्मृतमात्रसमस्तेष्टपूरक प्रणतप्रिय । लोल० ॥ १२ ॥ रात्रिंचरतमोरात्रिकृन्तनैकविकर्तन । लोल० ॥ १३ ॥ जानक्या जानकीजानेः प्रेमपात्र

परंतप । लोल० ॥ १४ ॥ भीमादिकमहाभीमवीरावेशावतारक । लोल० ॥ १५ ॥ वैदेहीविरहक्लान्तरामरोषैकविग्रह । लोल० ॥ १६ ॥ वज्राङ्गनखदंष्ट्रेश वज्रिवज्रावगुण्ठन । लोल० ॥ १७ ॥ अखर्वगर्वगन्धर्वपर्वतोद्भेदनस्वर । लोल० ॥ १८ ॥ लक्ष्मणप्राणसंत्राण त्राततीक्ष्णकरान्वय । लोल० ॥ १९ ॥ रामादिविप्रयोगार्त भरताद्यार्तिनाशन । लोल० ॥ २० ॥ द्रोणाचलसमुत्क्षेपसमुत्क्षिप्तारिवैभव । लोल० ॥ २१ ॥ सीताशीर्वादसंपन्न समस्तावयवाक्षत । लोललांगूलपातेन ममारातीन्निपातय ॥ २२ ॥ इत्येवमश्वत्थतलोपविष्टः शत्रुञ्जयं नाम पठेत्स्वयं यः । स शीघ्रमेवास्तसमस्तशत्रुः प्रमोदते मारुतजप्रसादात् ॥ २३ ॥ इति श्रीहनुमल्लांगूलास्त्रस्तोत्रं संपूर्णम् ॥

## ४२५. एकादशमुखहनुमत्कवचम् ।

श्रीगणेशाय नमः ॥ लोपामुद्रा उवाच ॥ कुम्भोद्भव दयासिन्धो श्रुतं हनुमतः परम् । यन्त्रमन्त्रादिकं सर्वं त्वन्मुखोदीरितं मया ॥ १ ॥ दयां कुरु मयि प्राणनाथ वेदितुमुत्सहे । कवचं वायुपुत्रस्य एकादशमुखात्मनः ॥ २ ॥ इत्येवं वचनं श्रुत्वा प्रियायाः प्रश्रयान्वितम् । वक्तुं प्रचक्रमे तत्र लोपामुद्रां प्रति प्रभुः ॥ ३ ॥ अगस्त्य उवाच ॥ नमस्कृत्वा रामदूतं हनूमन्तं महामतिम् । ब्रह्मप्रोक्तं तु कवचं श्रृणु सुन्दरि सादरम् ॥ ४ ॥ सनन्दनाय सुमहच्चतुराननभाषितम् । कवचं कामदं दिव्यं रक्षःकुलनिबर्हणम् ॥ ५ ॥ सर्वसंपत्प्रदं पुण्यं मर्त्यानां मधुरस्वरे । अस्य श्रीकवचस्यैकादशवक्त्रस्य धीमतः ॥ ६ ॥ हनूमत्स्तुतिमन्त्रस्य सनन्दन ऋषिः स्मृतः । प्रसन्नात्मा हनूमांश्च देवता परिकीर्तिता ॥ ७ ॥ छन्दोऽनुष्टुप् समाख्यातं बीजं वायुसुतस्तथा । मुख्यः प्राणः शक्ति-

रिति विनियोगः प्रकीर्तितः ॥ ८ ॥ सर्वकामार्थसिद्ध्यर्थं जप एवमुदीरयेत् । ॐ स्फ्रेंबीजं शक्तिधृक् पातु शिरो मे पवनात्मजः ॥ ९ ॥ क्रौंबीजात्मा नयनयोः पातु मां वानरेश्वरः । क्षंबीजरूपः कर्णौ मे सीताशोकविनाशनः ॥ १० ॥ ग्लौंबीजवाच्यो नासां मे लक्ष्मणप्राणदायकः । वंबीजार्थश्च कण्ठं मे पातु चाक्षयकारकः ॥ ११ ॥ रांबीजवाच्यो हृदयं पातु मे कपिनायकः । वंबीजकीर्तितः पातु बाहू मे चाञ्जनीसुतः ॥ १२ ॥ ह्राँबीजो राक्षसेन्द्रस्य दर्पहा पातु चोदरम् । हसौंबीजमयो मध्यं पातु लङ्काविदाहकः ॥ १३ ॥ ॐ ह्रीँबीजधरः पातु गुह्यं देवेन्द्रवन्दितः । रंबीजात्मा सदा पातु चोरू मे वार्धिलङ्घनः ॥ १४ ॥ सुग्रीवसचिवः पातु जानुनी मे मनोजवः । पादौ पादतले पातु द्रोणाचलधरो हरिः । आपादमस्तकं पातु रामदूतो महाबलः ॥ १५ ॥ पूर्वे वानरवक्त्रो मामाग्नेय्यां क्षत्रियान्तकृत् । दक्षिणे नारसिंहस्तु नैर्ऋत्यां गणनायकः ॥ १६ ॥ वारुण्यां दिशि मामव्यात्खगवक्त्रो हरीश्वरः । वायव्यां भैरवमुखः कौबेर्यां पातु मां सदा ॥ १७ ॥ कोड्यास्यः पातु मां नित्यमैशान्यां रुद्ररूपधृक् । ऊर्ध्वं हयाननः पातु गुह्याधः सुमुखस्तथा ॥ १८ ॥ रामास्यः पातु सर्वत्र सौम्यरूपो महाभुजः । इत्येवं रामदूतस्य कवचं यः पठेत्सदा ॥ १९ ॥ एकादशमुखस्यैतद्गोप्यं ते कीर्तितं मया । रक्षोघ्नं कामदं सौम्यं सर्वसंपद्विधायकम् ॥ २० ॥ पुत्रदं धनदं चोग्रशत्रुसंघविमर्दनम् । स्वर्गापवर्गदं दिव्यं चिन्तितार्थप्रदं शुभम् ॥ २१ ॥ एतत्कवचमज्ञात्वा मन्त्रसिद्धिर्न जायते । चत्वारिंशत्सहस्राणि पठेच्छुद्धात्मको नरः ॥ २२ ॥ एकवारं पठेन्नित्यं कवचं सिद्धिदं पुमान् । द्विवारं वा त्रिवारं वा पठन्नायुष्यमाप्नुयात् ॥ २३ ॥ क्रमादेकादशादेवमावर्तनजपा-

त्सुधीः । वर्षान्ते दर्शनं साक्षाल्लभते नात्र संशयः ॥ २४ ॥ यं यं चिन्तयते चार्थं तं तं प्राप्नोति पूरुषः । ब्रह्मोदीरितमेतद्धि तवाग्रे कथितं महत् ॥ २५ ॥ इत्येवमुक्त्वा वचनं महर्षिस्तूष्णीं बभूवेन्दुमुखीं निरीक्ष्य । संहृष्टचित्तापि तदा तदीयपादौ ननामातिमुदा स्वभर्तुः ॥ २६ ॥ अथ मन्त्रः ॥ ओं स्फ्रें क्रौं क्षौं ग्लौं वं रां वां ह्रौँ ह्रीँ रं । स्फ्रें क्रौं क्षौं ग्लौं क्षीं क्षौं दुं हां ह्लौं ह्रीँ रं । इत्यगस्त्यसारसंहितायामेकादशमुखहनुमत्कवचं संपूर्णम् ॥



